ore Away

# RAGHUVANSHAM

BY

KALIDASA, Raghuvam

WITH THE COMMENTARY OF

MALLINATHA

EDITED AND PUBLISHED BY

NDIT JIBANANDA VIDYASAGARA B. A.

*Superintendent, Free Sanskrit College, Calcutta.*

*NINTH EDITION.*




CALCUTTA.

PRINTED AT THE SIDDHESHWARA PRESS.

1902.

hsd from Pandit-Kulapati Jiba'nanda Vidya'sa'gara', B. A.
Superintendent, Free Sanskrit College,
*Rama'na'tha Majumda'ra's Street, Harrison-Road, Calcutta.*

पण्डितकुलपतिः

**श्रीजीवानन्दविद्यासागर बि, ए,**

*PANDIT JIBANANDA VIDYASAGARA B. A.*

Superintendent Free Sanskrit College.

# रघुवंशम् ।



## प्रथमः सर्गः ।

### टीकाकृतो मङ्गलाचरणम् ।

मातापितृभ्यां जगतो नमो वामार्धजानये ।
सद्यो दक्षिणदृक्पातसङ्कुचद्वामदृष्टये ॥ १ ॥

अन्तरायतिमिरोपशान्तये शान्तपावनमचिन्त्यवैभवम् ।
तं नरं वपुषि कुञ्जरं मुखे मन्महे किमपि तुन्दिलं महः ॥ २ ॥

शरणं करवाणि शर्मदं ते चरणं वाणि ! चराचरोपजीव्यम् ।
करुणामसृणैः कटाक्षपातैः कुरु मामम्ब ! कृतार्थसार्थवाहम् ॥३॥

वाणीं काणभुजीमजीगणदवाशासीच्च वैयासिकीम्
अन्तस्तन्त्रमरंस्त पन्नगगवीगुम्फेषु चाजागरीत् ।
वाचामाकलयद्रहस्यमखिलं यश्चाक्षपादस्फुरां
लोकेऽभूद्यदुपज्ञमेव विदुषां सौजन्यजन्यं यशः ॥४॥

मल्लिनाथकविः सोऽयं मन्दात्मानुजिघृक्षया ।
व्याचष्टे कालिदासीयं काव्यत्रयमनाकुलम् ॥ ५ ॥

कालिदासगिरां सारं कालिदासः सरस्वती ।
चतुर्मुखोऽथवा साक्षाद्विदुर्नान्ये तु मादृशाः ॥ ६ ॥

तथापि दक्षिणावर्तनाथाद्यैः क्षुण्णवर्त्मसु ।
वयं च कालिदासोक्तिष्ववकाशं लभेमहि ॥ ७ ॥

भारती कालिदासस्य दुर्व्याख्याविषमूर्च्छिता ।
एषा सञ्जीविनी टीका तामद्योज्जीवयिष्यति ॥ ८ ॥

इहान्वयमुखेनैव सर्वं व्याख्यायते मया ।
नामूलं लिख्यते किञ्चिन्नानपेक्षितमुच्यते ॥ ९ ॥

वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ॥१॥

इह खलु सकलकविशिरोमणिः कालिदासः "काव्यं यश
ऽर्थकृते व्यवहारविदे शिवेतरक्षतये। सद्यः परनिर्वृतये कान्
सम्मिततयोपदेशयुजे॥" इत्याद्यालङ्कारिकवचनप्रामाण्यात्काव
स्यानेकश्रेयःसाधनताम् "काव्यालापांश्च वर्जयेत्" इत्य
निषेधशास्त्रस्यासत्काव्यविषयतां च पश्यन् रघुवंशाख्यं मह
काव्यं चिकीर्षुश्चिकीर्षितार्थाविघ्नपरिसमाप्ति-सम्प्रदायाविच्छे
लक्षणफलसाधनभूतविशिष्टदेवतानमस्कारस्य शिष्टाचारपरिप्रा
त्वात् "आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम्" इत्याशी
र्वादाद्यन्यतमस्य प्रबन्धमुखलक्षणत्वात् काव्यनिर्माणस्य विशि
शब्दार्थप्रतिपत्तिमूलकत्वेन विशिष्टशब्दार्थयोश्च "शब्दजातमशे
तु धत्ते शर्वस्य वल्लभा। अर्थरूपं यदखिलं धत्ते मुग्धेन्दुशेखरः॥
इति वायुपुराणसंहितावचनबलेन पार्वतीपरमेश्वरायत्तत्वद
नात् तत्प्रतिपित्सया तावेवाभिवादयते—

वागर्थाविति। वागर्थौ इत्येकं पदम्, इवेन सह नित
समासो विभक्त्यलोपश्च पूर्वपदप्रकृतिस्वरत्वं चेति वक्तव्यम्
एवमन्यत्रापि द्रष्टव्यम्। वागर्थाविव शब्दार्थाविव सम्पृक्तौ
नित्यसम्बद्धावित्यर्थः। नित्यसम्बद्धयोर्वागर्थयोरुपमानत्वेनोप
दानात्। "नित्यः शब्दार्थसम्बन्धः" इति मीमांसकाः। जगत
लोकस्य पितरौ। माता च पिता च पितरौ। "पिता मात्रा
इति द्वन्द्वैकशेषः। "मातापितरौ पितरौ मातरपितरौ प्रसू
जनयितारौ" इत्यमरः। एतेन शर्वशिवयोः सर्वजगज्जनकतय
वैशिष्ट्यमिष्टार्थप्रतिपादनशक्तिः परमकारुणिकत्वं च सूच्यते
पर्वतस्यापत्यं स्त्री पार्वती। "तस्यापत्यम्" इत्यण्। "टिड्

क्व सूर्य्यप्रभवो वंशः क्व चाल्पविषया मतिः।
तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम्॥२॥

ज—" इत्यादिना ङीप्। पार्वती च परमेश्वरश्च पार्वतीपरमेश्वरौ। परमशब्दः सर्वोत्तमत्वद्योतनार्थः। मातुरभ्यर्हितत्वात् अल्पाच्तरत्वाच्च पार्वतीशब्दस्य पूर्वनिपातः। वागर्थप्रतिपत्तये शब्दार्थयोः सम्यक् ज्ञानार्थं वन्दे अभिवादये। अत्रोपमालङ्कारः स्फुट एव। तथोक्तम्—"स्वतःसिद्धेन भिन्नेन सम्पन्नेन च धर्मतः। साम्यमन्येन वर्ण्यस्य वाच्यं चेदेकगोपमा" इति। वाचिकश्चोपमालङ्कारः कालिदासोक्तकाव्यादौ। भूदेवताकस्य सर्वगुरोर्मगणस्य प्रयोगात् शुभलाभः सूच्यते। तदुक्तम्—"शुभदो मो भूमिमयः" इति। वकारस्यामृतवीजत्वात् प्रचयगमनादिसिद्धिः॥१॥

सम्प्रति कविः स्वाहङ्कारं परिहरति "क्व सूर्य्य—" इत्यादिश्लोकद्वयेन—

क्व सूर्य्येति। प्रभवति अस्मात् इति प्रभवः कारणम्। "ऋदोरप्"। "अकर्त्तरि च कारके संज्ञायाम्" इति साधुः। सूर्य्यः प्रभवो यस्य स सूर्य्यप्रभवो वंशः क्व। अल्पो विषयो ज्ञेयोऽर्थो यस्याः सा मे मतिः प्रज्ञा च क्व। द्वौ क्वशब्दौ महदन्तरं सूचयतः। सूर्य्यवंशमाकलयितुं न शक्नोमीत्यर्थः। तथाच—तद्विषयप्रबन्धनिरूपणं तु दूरापास्तमिति भावः। तथाहि। दुस्तरं तरितुम् अशक्यम्। "ईषद्दुःसुषु—" इत्यादिना खल् प्रत्ययः। सागरं मोहात् अज्ञानात् उडुपेन प्लवेन। "उडुपं तु प्लवः कोलः" इत्यमरः। अथवा चर्मावनद्धेन पानपात्रेण। "चर्मावनद्धमुडुपं प्लवः काष्ठं करण्डवत्" इति सज्जनः। तितीर्षुः तरीतुम् इच्छुः अस्मि भवामि। तरतेः सन्नन्तात् उप्रत्ययः।

मन्दः कवियशःप्रार्थी गमिष्याम्युपहास्यताम् ।
प्रांशुलभ्ये फले लोभादुद्बाहुरिव वामनः ॥३॥
अथवा कृतवाग्द्वारे वंशेऽस्मिन् पूर्वसूरिभिः ।
मणौ वज्रसमुत्कीर्णे सूत्रस्येवास्ति मे गतिः ॥४॥
सोऽहमाजन्मशुद्धानामाफलोदयकर्मणाम् ।
आसमुद्रक्षितीशानामानाकरथवर्त्मनाम् ॥५॥

अल्पसाधनैरधिकारम्भो न सुकर इति भावः । इदञ्च वंशोत्कर्षकथनं स्वप्रबन्धमहत्त्वार्थमेव । तदुक्तम्—"प्रतिपाद्यमहिम्ना च प्रबन्धो हि महत्तरः" इति ॥ २ ॥

मन्द इति । किञ्च मन्दः मूढः । "मूढाल्पापटुनिर्भाग्या मन्दाः स्युः" इत्यमरः । तथापि कवियशःप्रार्थी कवीनां यशः काव्यनिर्माणेन जातं तत्प्रार्थनाशीलः सोऽहं प्रांशुना उन्नतपुरुषेण लभ्ये प्राप्ये फले फलविषये लोभात् उद्बाहुः फलग्रहणाय उच्छ्रितहस्तः वामनः खर्व इव । "खर्वो ह्रस्वश्च वामनः" इत्यमरः । उपहास्यताम् उपहासविषयताम् । "ऋहलोर्ण्यत्" इति ण्यत्प्रत्ययः । गमिष्यामि प्राप्स्यामि ॥ ३ ॥

मन्दश्चेत्तर्हि त्यज्यतामयमुद्योग इत्यत आह—

अथवेति । अथवा पक्षान्तरे पूर्वैः सूरिभिः कविभिः वाल्मीकादिभिः कृतवाग्द्वारे कृतं रामायणादिप्रबन्धरूपा या वाक् सा एव द्वारं प्रवेशो यस्य तस्मिन् । अस्मिन् सूर्यप्रभवे वंशे कुले । अन्वनेकलक्षणः सन्तानः वंशः । वज्रेण मणिवेधकसूचीविशेषेण । "वज्रं त्वस्त्री कुलिशशस्त्रयोः । मणिवेधे रत्नभेदे" इति केशवः । समुत्कीर्णे विद्धे मणौ रत्ने सूत्रस्य इव मे मम गतिः सञ्चारः अस्ति । वर्णनीये रघुवंशे मम वाक्प्रसारोऽस्तीत्यर्थः ॥४॥

थाविधिहुताग्नीनां यथाकामार्चितार्थिनाम् ।
थापराधदण्डानां यथाकालप्रबोधिनाम् ॥६॥
ागाय सम्भृतार्थानां सत्याय मितभाषिणाम् ।

एवं रघुवंशे सम्बन्धप्रवेशसङ्घर्षणां प्रतिजानानः "सोऽहम्" आदिभिः पञ्चभिः श्लोकैः कुलकेनाह—

सोऽहमिति। सोऽहम्। "रघूणामन्वयं वक्ष्ये" (१।९) मुत्तरेण सम्बन्धः। किं विधानां रघूणाम्? इत्यत्र उत्तराणि शेषणानि योज्यानि। आजन्मनः जन्म आरभ्येत्यर्थः। "आङ् र्यादाभिविध्योः" इत्यव्ययीभावः। शुद्धानाम्। सुप्सुपेति मासः। एवमुत्तरत्रापि द्रष्टव्यम्। आजन्मशुद्धानाम् निषे-ादिसर्वसंस्कारसम्पन्नानामित्यर्थः। आफलोदयम् आफल- दः कर्म येषां ते तथोक्ताः तेषाम् प्रारब्धान्तगामिनामित्यर्थः। ासमुद्रं क्षितेः ईशानां सार्वभौमाणामित्यर्थः। आनाकं थवर्त्म येषां तेषाम् इन्द्रसहचारिणामित्यर्थः। अत्र सर्वत्र ाङोऽभिविध्यर्थत्वं द्रष्टव्यम्। अन्यथा मर्यादार्थत्वे जन्मादिषु द्धाभावप्रसङ्गात् ॥ ५ ॥

यथाविधीति। विधिम् अनतिक्रम्य यथाविधि। "यथा सादृश्ये" त्यव्ययीभावः। तथा हुतशब्देन सुप्सुपेति समासः। एवं "यथा ामार्चित—" इत्यादिनामपि द्रष्टव्यम्। यथाविधि हुताः ग्नयो यैः तेषाम्। यथाकामम् अभिलाषम् अनतिक्रम्य अर्चि- ार्थिनाम्। यथापराधम् अपराधमनतिक्रम्य दण्डो येषां षाम्। यथाकालं कालमनतिक्रम्य प्रबोधिनां प्रबोधनशीला- ाम्। चतुर्भिर्विशेषणैः देवतायजनार्थिसत्कारदण्डधरत्वप्रजा- ालनसमयजागरूकत्वादीनि विवक्षितानि ॥ ६ ॥

त्यागायेति। त्यागाय सत्पात्रे विनियोगः त्यागः तस्मै ।

यशसे विजिगीषूणां प्रजायै गृहमेधिनाम् ॥७॥
शैशवेऽभ्यस्तविद्यानां यौवने विषयैषिणाम् ।
वार्द्धके मुनिवृत्तीनां योगेनान्ते तनुत्यजाम् ॥८॥

"त्यागो विहापनं दानम्" इत्यमरः। सम्भृतार्थानां सञ्चितध
नाम् न तु दुर्व्यापाराय। सत्याय मितभाषिणां मितभाष
शीलानाम्, न तु पराभवाय। यशसे कीर्त्तये। "यशः कीर्त्ति
समज्ञा च" इत्यमरः। विजिगीषूणां विजेतुम् इच्छूनां, न
अर्थसंग्रहाय। प्रजायै सन्तानाय गृहमेधिनां दारपरिग्र
णाम्, न तु कामोपभोगाय। अत्र "त्यागाय" इत्यादि
"चतुर्थी तदर्थ—" इत्यादिना तादर्थ्ये चतुर्थीसमासविधानज्ञ
कात् चतुर्थी। गृहैः दारैः मेधन्ते सङ्गच्छन्ते इति गृहमेधिन
"दारेष्वपि गृहाः" इत्यमरः। जाया च गृहिणी गृहम्" इ
हलायुधः। "मेधृ सङ्गमे" इति धातोर्णिनिः। एभिर्विशेष
परोपकारित्वं सत्यवचनत्वं यशःपरत्वं पितॄणां शुद्धत्वञ्च वि
चितानि ॥ ७ ॥

शैशव इति। शिशोर्भावः शैशवं बाल्यम्। प्राणभृज्जाति
वयोवचनोद्गात्र—" इत्यञ् प्रत्ययः। "शिशुत्वं शैशवं बाल्य
इत्यमरः। तस्मिन् वयसि अभ्यस्तविद्यानाम्। एतेन ब्रह्मचर्य
श्रमो विवक्षितः। यूनो भावः यौवनं तारुण्यम्। युवादित्वा
अण्प्रत्ययः। "तारुण्यं यौवनं समम्" इत्यमरः। तस्मि
वयसि विषयैषिणां भोगाभिलाषिणाम्। एतेन गृहस्थाश्र
विवक्षितः। वृद्धस्य भावः वार्द्धकं वृद्धत्वम्। "द्वन्द्वमनोज्ञादि
भ्यश्च" इति वुञ् प्रत्ययः। "वार्द्धकं वृद्धसङ्घाते वृद्धत्वे वृ
कर्मणि" इति विश्वः। सङ्घातार्थेऽत्र "वृद्धाच्च" इति वक्तव्या

रघूणामन्वयं वक्ष्ये तनुवाग्विभवोऽपि सन् ।
तद्गुणैः कर्णमागत्य चापलाय प्रचोदितः ॥९॥
तं सन्तः श्रोतुमर्हन्ति सदसद्व्यक्तिहेतवः ।
हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकापि वा ॥१०॥
वैवस्वतो मनुर्नाम माननीयो मनीषिणाम् ।

ामूर्धिको वृत्त् । तस्मिन् वार्धके वयसि मुनीनां वृत्तिरिव त्तिर्येषां तेषाम् । एतेन वानप्रस्थाश्रमो विवक्षितः । अन्ते रीरत्यागकाले योगेन परमात्मध्यानेन । "योगः सन्नहनोपाय-ानसङ्गतियुक्तिषु" इत्यमरः । तनुं देहं त्यजन्तीति तनुत्यजां हत्यागिनाम् । "कायो देहः क्लीबपुंसोः स्त्रियां मूर्त्तिस्तनु-तनूः" इत्यमरः । "अन्येभ्योऽपि दृश्यते" इति क्विप् । एतेन भिक्ष्वाश्रमो विवक्षितः ॥ ८ ॥

रघूणामिति । सोऽहं लब्धप्रवेशः तनुवाग्विभवः अपि अल्पवाक्प्रसारोऽपि सन् । तेषां रघूणां गुणैस्तद्गुणैः । आजन्म-शुद्धादिभिः कर्तृभिः कर्णं मम श्रोत्रमागत्य चापलाय चापलं चपलकर्म अविमृश्यकरणरूपं कर्तुम् । युवादित्वात् कर्मणि अण् । "क्रियार्थोपपदस्य" इत्यादिना चतुर्थी । प्रचोदितः प्रेरितः सन् । रघूणामन्वयं तद्विषयप्रबन्धं वक्ष्ये । कुलकम् ॥ ९ ॥

सम्प्रति स्वप्रबन्धपरीक्षार्थं सतः प्रार्थयते—

तमिति । तं रघुवंशाख्यं प्रबन्धं सदसतोः गुणदोषयोर्व्यक्तेः हेतवः कर्त्तारः सन्तः श्रोतुमर्हन्ति । तथाहि । हेम्नः विशुद्धिः निर्दोषस्वरूपं श्यामिकाऽपि लोहान्तरसंसर्गात्मको दोषोऽपि वा अग्नौ संलक्ष्यते । न अन्यत्र । तद्वत् अत्रापि सन्त एव गुणदोष-विवेकाधिकारिणो न अन्ये इति भावः ॥ १० ॥

आसीन्महीक्षितामाद्यः प्रणवश्छन्दसामिव ॥११॥
तदन्वये शुद्धिमति प्रसूतः शुद्धिमत्तरः।
दिलीप इति राजेन्दुरिन्दुः क्षीरनिधाविव ॥१२॥
व्यूढोरस्को वृषस्कन्धः शालप्रांशुर्महाभुजः।
आत्मकर्मक्षमं देहं क्षात्रो धर्म इवाश्रितः ॥१३॥

वर्ण्यं वस्तु उपक्षिपति—

वैवस्वत इति। मनसः ईषिणः मनीषिणः धीराः विद्वां इति यावत्। पृषोदरादित्वात् साधुः। तेषां माननीयः पूज्यः छन्दसां वेदानाम्। "छन्दः पद्ये च वेदे च" इति विश्वः प्रणव ओंकार इव। महीं क्षियन्ति ईशते इति महीक्षित क्षितीश्वराः। क्षिधातोरैश्वर्य्यार्थात् क्विप्, तुगागमश्च। तेषामाद्य आदिभूतः। विवस्वतः सूर्य्यस्य अपत्यं पुमान् वैवस्वतो नाम वैवस्वतः इति प्रसिद्धो मनुरासीत् ॥ ११ ॥

तदन्वये इति। शुद्धिः अस्य अस्तीति शुद्धिमान्। तस्मि शुद्धिमति तदन्वये तस्य मनोः अन्वये वंशे। "अन्ववायोऽन्वयो वंश गोत्रं चाभिजनः कुलम्" इति हलायुधः। अतिशयेन शुद्धिमान् शुद्धिमत्तरः। "द्विवचनविभज्योप—" इत्यादिना तरप्। दिली इति प्रसिद्धः राजा इन्दुरिव राजेन्दुः राजश्रेष्ठः। उपमित व्याघ्रादिना समासः। क्षीरनिधौ इन्दुरिव प्रसूतः जातः ॥१२

"व्यूढ—" इत्यादित्रिभिः श्लोकैर्दिलीपं विशिनष्टि—

व्यूढेति। व्यूढं विपुलम् उरः यस्य सः व्यूढोरस्कः "उरःप्रभृतिभ्यः कप्"। "व्यूढं विपुलं भद्रं स्फारं समं वरिष्ठ च" इति यादवः। वृषस्य स्कन्धः इव स्कन्धः यस्य सः तथा "सप्तम्युपमान—" इत्यादिना उत्तरपदलोपी बहुव्रीहिः। तथा शालः वृक्ष इव प्रांशुः उन्नतः शालप्रांशुः। "प्राकारवृक्षयोः

र्वातिरिक्तसारेण सर्वतेजोऽभिभाविना।
स्थितः सर्वोन्नतेनोर्वीं क्रान्त्वा मेरुरिवात्मना ॥१४॥
आकारसदृशप्रज्ञः प्रज्ञया सदृशागमः।
आगमैः सदृशारम्भ आरम्भसदृशोदयः ॥१५॥
भीमकान्तैर्नृपगुणैः स बभूवोपजीविनाम्।
अधृष्यश्चाभिगम्यश्च यादोरत्नैरिवार्णवः ॥१६॥

नः प्रांशुः उन्नतः धृतः" इति यादवः। "उच्चप्रांशून्नतो-
दोच्छ्रितास्तुङ्गे" इत्यमरः। महाभुजः महाबाहुः। आत्म-
र्मणः सदृशं तथाप्याकारानुरूपं देहम् आश्रितः प्राप्तः क्षात्रः क्षत्र-
सम्बन्धी धर्मः इव स्थितः। मूर्तिमान् पराक्रम इव स्थितः,
गुणा वा ॥ १३ ॥

सर्वातिरिक्तेति। सर्वातिरिक्तसारेण सर्वेभ्यः भूतेभ्यः अधिक-
ेन। "सारो बले स्थिरांशे च" इत्यमरः। सर्वाणि भूतानि
जसा अभिभवति इति सर्वतेजोऽभिभावी तेन। सर्वेभ्यः उन्नतेन
आत्मना शरीरेण। "आत्मा देहे धृतौ जीवे स्वभावे परमात्मनि"
ति विश्वः। मेरुः इव, उर्वीं क्रान्त्वा आक्रम्य स्थितः। मेरा-
पि विशेषणानि तुल्यानि। "अष्टाभिश्च सुरेन्द्राणां मात्राभि-
र्मितो नृपः। तस्मादभिभवत्येष सर्वभूतानि तेजसा ॥" इति
ुवचनात् राज्ञः सर्वतेजोऽभिभावित्वं ज्ञेयम् ॥ १४ ॥

आकारेति। आकारेण मूर्त्या सदृशी प्रज्ञा यस्य सः।
ज्ञया सदृशागमः प्रज्ञानुरूपशास्त्रपरिश्रमः। आगमैः सदृशः
रम्भः कर्म यस्य सः तथोक्तः। आरभ्यते इति आरम्भः कर्म
सदृशः उदयः फलसिद्धिः यस्य सः तथोक्तः ॥ १५ ॥

भीमेति। भीमैश्च कान्तैश्च नृपगुणैः राजगुणैः तेजःप्रतापा-

रेखामात्रमपि क्षुण्णादामनोर्वर्त्मनः परम्।
व्यतीयुः प्रजास्तस्य नियन्तुर्नेमिवृत्तयः ॥१७॥

प्रजानामेव भूत्यर्थं स ताभ्यो बलिमग्रहीत्।
सहस्रगुणमुत्स्रष्टुमादत्ते हि रसं रविः ॥१८॥

दिभिः कुलशीलदाक्षिण्यादिभिश्च सः दिलीपः उपजीविन
आश्रितानां यादोभिः जलजीवैः। "यादांसि जलजन्तवः" इ
मरः। रत्नैश्च अर्णवः इव। अधृष्यः अनभिभवनीयश्च अभिग
आश्रयणीयश्च बभूव ॥ १६ ॥

रेखामात्रमिति। नियन्तुः शिक्षकस्य सारथेश्च तस्य दिल
परस्य सम्बन्धिन्यः नेमीनां चक्रधाराणां वृत्तिरिव वृत्तिः व्यापा
यासां ताः। "चक्रधारा प्रधिर्नेमिः" इति यादवः। "च
रथाङ्गं तस्यान्ते नेमिः स्त्री स्यात् प्रधिः पुमान्" इत्यमर
प्रजाः। आ मनोः। मनुम् आरभ्य इत्यभिविधिः। पदा
चैतत्। समासस्य विभाषितत्वात्। क्षुण्णात् अभ्यस्तात् प्रहत
वर्त्मनः आचारपद्धतेः अध्वनश्च परम् अधिकम् इतस्तत इत्यर्थ
रेखा प्रमाणम् अस्येति रेखामात्रं रेखाप्रमाणम्। ईषद
त्यर्थः। "प्रमाणे द्वयसज्—" इत्यादिना मात्रच्प्रत्ययः। परश
विशेषणं चैतत्। न व्यतीयुः न अतिक्रान्तवत्यः। कुशलसार
प्रेषिता रथनेमय इव तस्य प्रजाः पूर्वक्षुण्णमार्गं न जहुरि
भावः ॥ १७ ॥

प्रजानामिति। सः राजा प्रजानां भूत्यै अर्थाय भूत
वृद्ध्यर्थम् एव। अर्थेन सह नित्यसमासः सर्वलिङ्गता च वक्तव्य
ग्रहण क्रियाविशेषणं चैतत्। ताभ्यः प्रजाभ्यः बलिं षष्ठांशरू
करम् अग्रहीत्। "भागधेयः करो बलिः" इत्यमरः। तथा हि

सेना परिच्छदस्तस्य द्वयमेवार्थसाधनम्।
शास्त्रेष्वकुण्ठिता बुद्धिर्मौर्वी धनुषि चातता ॥१९॥
तस्य संवृतमन्त्रस्य गूढ़ाकारेङ्गितस्य च।
फलानुमेयाः प्रारम्भाः संस्काराः प्राक्तना इव ॥२०

वि: सहस्रं गुणाः यस्मिन् कर्मणि तद्यथा तथा सहस्रगुणं हस्रधा उत्स्रष्टुं दातुम्। उत्सर्जनक्रियाविशेषणं चैतत्। सम् अम्बु आदत्ते गृह्णाति। "रसो गन्धे रसे स्वादे तिक्तादौ षपरोगयोः। शृङ्गारादौ द्रवे वीर्य्ये देहधात्वम्बुपारदे॥" इति नम्र: ॥१८॥

सम्प्रति बुद्धिशौर्य्यसम्पन्नस्य तस्य अर्थसाधनेषु परानपेक्षत्वमाह—

सेनेति। तस्य राज्ञः सेना चतुरङ्गबलं परिच्छाद्यते अनेन इति परिच्छदः उपकरणं बभूव। छत्रचामरादितुल्यमभूदित्यर्थः। "पुंसि संज्ञायां घः प्रायेण" इति घप्रत्ययः। "छादेर्घेऽद्व्युपसर्गस्य" इति उपधा ह्रस्वः। अर्थस्य प्रयोजनस्य तु साधनं द्वयम् एव शास्त्रेषु अकुण्ठिता अव्याहता बुद्धिः। "व्यापृता" इत्यपि पाठः। धनुषि आतता आरोपिता मौर्वी ज्या च। "मौर्वी ज्या शिञ्जिनी गुणः" इत्यमरः। नीतिपुरःसरमेव तस्य शौर्य्यमभूदित्यर्थः ॥१९॥

राज्यमूलं मन्त्रसंरक्षणं तस्यासीदित्याह,—

तस्येति। संवृतमन्त्रस्य गुप्तविचारस्य। "वेदभेदे गुप्तवादे मन्त्रः" इत्यमरः। शोकहर्षादिसूचको भ्रुकुटीमुखरागादिः आकारः। इङ्गितं चेष्टितं हृदयगतविकारः वा। "इङ्गितं हृद्गतो भावो बहिराकार आकृतिः" इति सज्जनः। गूढ़े आकारेङ्गिते

जुगोपात्मानमत्रस्तो भेजे धर्ममनातुरः।
अगृध्नुराददे सोऽर्थमसक्तः सुखमन्वभूत् ॥२१॥
ज्ञाने मौनं क्षमा शक्तौ त्यागे श्लाघाविपर्य्ययः।
गुणा गुणानुबन्धित्वात् तस्य सप्रसवा इव ॥२२

यस्य स्वभावचापलात् भ्रमपरम्परया मुखरागादिलिङ्गैः अद्वतीयगामिमन्वस्य तस्य प्रारभ्यन्ते इति प्रारम्भाः साम व्यु पायप्रयोगाः। प्रागित्यव्ययेन पूर्वजन्म उच्यते तत्र भ प्राक्तनाः। "सायश्चिर—" इत्यादिना व्यु ल्प्रत्ययः। संस्का पूर्वकर्मवासनाः इव। फलेन कार्य्येण अनुमेया अनुमातुं योग् आसन्। अत्र याज्ञवल्क्यः—"मन्त्रमूलं यतो राज्यमतो म सुरक्षितम्। कुर्य्यात् यथा तन्न विदुः कर्मणामाफलोदयात् इति ॥ २० ॥

सम्प्रति सामाद्युपायान् विनैव आत्मरक्षादिकं कृत नित्याह—

जुगोपेति। अत्रस्तः अभीतः सन्। "त्रस्तो भीरुभीरु भीलुकाः" इत्यमरः। त्रासोपाधिम् अन्तरेणैव त्रिवर्गसि प्रथमसाधनत्वादेव आत्मानं शरीरं जुगोप रक्षितवान्। अनातु अरुग्णः एव धर्मं सुकृतं भेजे अर्जितवान् इत्यर्थः। अगृध्नु अगर्धनशीलः एव अर्थम् आददे स्वीकृतवान्, "गृध्नुस्तु गर्धन लुब्धोऽभिलाषुकस्तृष्णक् समौ लोलुपलोलुभौ॥" इत्यमर "त्रसिगृधिधृषिक्षिपेः क्नुः" इति क्नुप्रत्ययः। असक्तः आसक्ति रहितः एव सुखम् अन्वभूत्॥ २१ ॥

परस्परविरुद्धानामपि गुणानां तत्र साहचर्य्यमासीदित्या ज्ञाने इति। ज्ञाने परवृत्तान्तज्ञाने सति अपि मौनं वा

नाक्कष्टस्य विषयैर्विद्यानां पारदृश्वनः।
स धर्मरतेरासीत् वृद्धत्वं जरसा विना ॥२३॥
ज्ञानां विनयाधानात् रक्षणात् भरणादपि।

मकम्। यथाह कामन्दकः— "नान्योपतापिवचनं मौन-चरिष्णुता" इति। शक्तौ प्रतीकारसामर्थ्ये अपि क्षमा अप-सहनम्। अत्र चाणक्यः—"शक्तानां भूषणं क्षमा" इति। गे वितरणे सति अपि श्लाघायाः विकत्थनस्य विपर्य्ययः ाव:। अत्राह मनुः—"न दत्त्वा परिकीर्त्तयेत्" इति। इत्थं गुणाः ज्ञानादयः गुणैः विरुद्धैः मौनादिभिः अनुबन्धित्वात् चारित्वात्। सह प्रभवः जन्म येषां ते सप्रसवाः सोदराः इव वन्। किञ्च प्रसवाः सन्तानानि, तैः सह वर्त्तमाना इति वा। ढा अपि गुणाः तस्मिन् अविरोधेनैव स्थिताः इत्यर्थः ॥२२॥

द्विविधं वृद्धत्वं ज्ञानेन वयसा च, तत्र तस्य ज्ञानेन वृद्धत्व-ह—

अनाक्कष्टस्येति। विषयैः शब्दादिभिः। "रूपं शब्दो गन्ध-स्पर्शाश्च विषया अमी" इत्यमरः। अनाक्कष्टस्य अवशीकृतस्य, ानां वेदवेदाङ्गादीनां पारदृश्वनः पारम् अन्तं दृष्टवतः। दृशेः नप्। धर्मे रतिः यस्य तस्य राज्ञः जरसा जरया विना। सा जरा" इत्यमरः। "षिद्भिदादिभ्योऽङ्" इति अङ्-यः। जराया "जरसन्यतरस्याम्" इति जरसादेशः। वृद्धत्वं कम् आसीत्। तस्य यूनोऽपि विषयवैराग्यादिगुण-ज्ञा ज्ञानतो वृद्धत्वमासीदित्यर्थः। नाथस्तु चतुर्विधं वृद्धत्व-ति ज्ञात्वा "अनाक्कष्टस्य" इत्यादिना विशेषणत्रयेण वैराग्य-नशीलवृद्धत्वान्युक्तानीत्यवोचत् ॥ २३ ॥

२

स पिता पितरस्तासां केवलं जन्महेतवः ॥२४॥
स्थित्यै दण्डयतो दण्ड्यान् परिणेतुः प्रसूतये।
अप्यर्थकामौ तस्यास्तां धर्म एव मनीषिणः ॥२

प्रजानामिति। प्रजायन्ते इति प्रजाः जनाः। "उ
च संज्ञायाम्" इति डप्रत्ययः। "प्रजा स्यात् सन्ततौ जने"
मरः। तासां विनयस्य शिक्षायाः आधानात् करणात्, स
प्रवर्त्तनात् इति यावत्। रक्षणात् भयहेतुभ्यः त्राणात्, आप
रणात् इति यावत्। भरणात् अन्नपानादिभिः पोषणात्
अपि समुच्चये। सः राजा पिता अभूत्, तासां पितरस्तु
हेतवः जन्ममात्रकर्त्तारः केवलमुत्पादका एवाभवन्।
मात्र एव पितॄणां व्यापारः, सदा शिक्षारक्षणादिकन्तु
करोतीति तस्मिन् पितृत्वव्यपदेशः। आहुश्च, "स पिता
पोषकः" इति ॥ २४ ॥

स्थित्यै इति। दण्डम् अर्हन्तीति दण्ड्याः। "दण्डा
यत्" इति यत्प्रत्ययः। "अदण्ड्यान् दण्डयन् राजा दण्ड्यां
प्यदण्डयन्। अयशो महदाप्नोति नरकञ्चैव गच्छति॥"
शास्त्रवचनात्। तान् दण्ड्यान् एव स्थित्यै लोकप्रतिष्ठायै
यतः शिक्षयतः। प्रसूतयै सन्तानाय एव परिणेतुः दारान्
गृह्णतः। मनीषिणः विदुषः, दोषज्ञस्य इति यावत्। "वि
विपश्चिद् दोषज्ञः सन् सुधीः कोविदो बुधः। धीरो मनी
इत्यमरः। तस्य दिलीपस्य अर्थकामौ अपि धर्मे एव
जातौ। अस्तेर्लङ्। अर्थकामसाधनयोर्दण्डविवाहयो
स्थापनप्रजोत्पादनरूपधर्मार्थत्वेन अनुष्ठानात् अर्थकामौ
धर्मशेषतामापादयन् सः राजा धर्मोत्तरोऽभूदित्यर्थः। आ

ोह गां स यज्ञाय शस्याय मघवा दिवम् ।
पद्विनिमयेनोभौ दधतुर्भुवनद्वयम् ॥ २६ ॥
किलानुययुस्तस्य राजानो रक्षितुर्यशः ।
वृत्ता यत्परस्वेभ्यः श्रुतौ तस्करता स्थिता ॥२७॥
ोऽपि सम्मतः शिष्टस्तस्यार्त्तस्य यथौषधम् ।

मः—"न पूर्वाह्नमध्यन्दिनापराह्नानफलान् कुर्य्यात् । यथा- । धर्मार्थकामेभ्यः तेषु धर्मोत्तरः स्यात्" ॥ इति ॥ २५ ॥

दुदोहेति । सः राजा यज्ञाय यज्ञं कर्त्तुं गां भुवं दुदोह । ाहरणेन रिक्तां चकार इत्यर्थः । मघवा देवेन्द्रः शस्याय ं वर्धयितुं दिवं स्वर्गं दुदोह । द्युलोकात् महीलोके वृष्टि- ादयामास इत्यर्थः । "क्रियार्थोपपदस्य—" इत्यादिना शस्याभ्यां चतुर्थी । एवम् उभौ सम्पदः विनिमयेन परस्परम् ानप्रतिदानाभ्यां भुवनद्वयं दधतुः पुपुषतुः । राजा यज्ञे- द्रलोकम्, इन्द्रश्च उदकेन भूलोकं पुपोष इत्यर्थः । उक्तञ्च ्नीतौ,—"राजा त्वर्थान् समाहृत्य कुर्य्यादिन्द्रमहोत्सवम् । ीतो मेघवाहस्तु महतीं वृष्टिमावहेत् ॥" इति ॥ २६ ॥

न किलेति । राजानः अन्ये नृपाः रक्षितुः भयेभ्यस्त्रातुः । राज्ञः यशः न अनुययुः किल न अनुचक्रुः खलु । कुतः ? ्यस्मात् कारणात् तस्करता चौर्य्यं परस्वेभ्यः परधनेभ्यः ेषयभूतेभ्यः व्यावृत्ता सती श्रुतौ वाचकशब्दे स्थिता ता । अपहार्य्यान्तराभावात् तस्करशब्द एव अपहृतः र्थः । अथवा "अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति "। इति न्यायेन शब्दे स्थिता स्फुरिता न तु स्वरूपतो- त इत्यर्थः ॥ २७ ॥

त्याज्यो दुष्टः प्रियोऽप्यासीदङ्गुलीवोरगक्षता ॥

तं वेधा विदधे नूनं महाभूतसमाधिना।
तथा हि सर्वे तस्यासन् परार्थैकफला गुणाः ॥

स वेलावप्रवलयां परिखीकृतसागराम्।
अनन्यशासनामुर्वीं शशासैकपुरीमिव ॥ ३०।

द्वेष्य इति। शिष्टः जनः द्वेष्यः शत्रुः अपि। आर्तस्य रो
औषधं यथा औषधम् इव, तस्य सम्मतः अनुमतः आसीत्।
जनः प्रियः अपि प्रेमास्पदीभूतः अपि उरगक्षता सर्पदष्टा अ
इव "छिन्द्याद् बाहुमपि दुष्टमात्मनः" इति न्यायात्, त्य
आसीत्। तस्य शिष्ट एव बन्धुः दुष्ट एव शत्रुः इत्यर्थः ॥ २

तस्य परोपकारित्वमाह—

तमिति। वेधाः स्रष्टा। "स्रष्टा प्रजापतिर्वेधाः" इत्यम
तं दिलीपम्। समाधीयते अनेनेति समाधिः कारणसाम
महाभूतानां यः समाधिः तेन महाभूतसमाधिना विदधे स
नूनं ध्रुवम्, इत्युत्प्रेक्षा। तथाहि, तस्य राज्ञः सर्वे गुणाः
रसादिमहाभूतगुणवदेव परार्थः परप्रयोजनम् एव एकं मु
फलं येषां ते यथोक्ताः आसन्। महाभूतगुणोपमानेन का
गुणाः कार्य्ये सङ्क्रामन्तीति न्यायः सूचितः ॥ २९ ॥

स इति। सः दिलीपः वेलाः समुद्रकूलानि। "वेला
ऽपि वारिधेः" इति विश्वः। ताः एव वप्रवलयाः प्राकारवेष्टन
यस्याः ताम्। "स्याच्चयो वप्रमस्त्रियाम्। प्राकारो वरणः श
प्राचीरं प्रान्ततो वृतिः" ॥ इत्यमरः। परितः खातं परिखा
वेष्टनम्। "खातं खेयन्तु परिखा" इत्यमरः। "अन्येष्व
दृश्यते" इत्यत्र अपिशब्दात् खनेर्डप्रत्ययः। अपरिखाः परि

तस्य दाक्षिण्यरूढ़ेन नाम्ना मगधवंशजा ।
पत्नी सुदक्षिणेत्यासीदध्वरस्येव दक्षिणा ॥ २१ ॥
कलत्रवन्तमात्मानमवरोधे महत्यपि ।
तया मेने मनस्विन्या लक्ष्म्या च वसुधाधिपः ॥२२॥
तस्यामात्मानुरूपायामात्मजन्मसमुत्सुकः ।
विलम्बितफलैः कालं स निनाय मनोरथैः ॥२३॥

सम्पद्यमानाः कृताः परिखीकृताः सागराः यस्याः ताम् । अभूत-तद्भावे च्विः । अविद्यमानम् अन्यस्य राज्ञः शासनं यस्याः ताम् अनन्यशासनाम् उर्वीम् एकपुरीम् इव शशास, अनायासेन शासितवान् इत्यर्थः ॥ २० ॥

तस्येति । तस्य राज्ञः मगधवंशे जाता मगधवंशजा । "सप्तम्याञ्च जनेर्डः" इति डप्रत्ययः । एतेनाभिजात्यमुक्तम् । दाक्षिण्यं परच्छन्दानुवर्त्तनम् । "दक्षिणः सरलोदारपरच्छन्दानुवर्त्तिषु" इति शाश्वतः । तेन रूढ़ं प्रसिद्धम्, तेन नाम्ना, अध्वरस्य यज्ञस्य, दक्षिणाख्या पत्नी इव । सुदक्षिणा इति प्रसिद्धा पत्नी आसीत् । अत्र श्रुतिः,—"यज्ञो गन्धर्वस्तस्य दक्षिणा अप्सरसः"इति । "दक्षिणाया दाक्षिण्यं नाम ऋत्विजो दक्षिणत्व-प्रापकत्वम् । ते दक्षन्ते दक्षिणां प्रतिगृह्य" इति च ॥२१॥

कलत्रवन्तमिति । वसुधाधिपः, अवरोधे अन्तःपुरवर्गे महति सति अपि, मनस्विन्या दृढचित्तया, पतिचित्तानुवृत्त्यादिनिर्बन्ध-क्षमया इत्यर्थः । तया सुदक्षिणया लक्ष्म्या च आत्मानं कलत्र-वन्तं भार्य्यावन्तं मेने । "कलत्रं श्रोणिभार्य्ययोः" इत्यमरः । वसुधाधिप इत्यनेन वसुधया चेति गम्यते ॥ २२ ॥

सन्तानार्थाय विधये स्वभुजादवतारिता।
तेन धूर्जगतो गुर्वी सचिवेषु निचिक्षिपे ॥३४॥
अथाभ्यर्च्य विधातारं प्रयतौ पुत्रकाम्यया।
तौ दम्पती वशिष्ठस्य गुरोर्जग्मतुराश्रमम् ॥ ३५ ॥
स्निग्धगम्भीरनिर्घोषमेकं स्यन्दनमास्थितौ।
प्रावृषेण्यं पयोवाहं विद्युदैरावताविव ॥ ३६ ॥

तस्यामिति। सः राजा, आत्मानुरूपायां तस्याम्। आत्मनः जन्म यस्य असौ आत्मजन्मा पुत्रः, तस्मिन् समुत्सुकः। यद्वा आत्मनः जन्मनि पुत्ररूपेण उत्पत्तौ समुत्सुकः सन्। "आत्मा वै पुत्रनामासि" इति श्रुतेः। विलम्बितं फलं पुत्रप्राप्तिरूपं येषां तैः मनोरथैः कदा मे पुत्रो भवेत् इत्याशाभिः कालं निनाय यापयामास ॥ ३३ ॥

सन्तानेति। तेन दिलीपेन, सन्तानः अर्थः प्रयोजनं यस्य तस्मै सन्तानार्थाय विधये अनुष्ठानाय। स्वभुजात् अवतारिता अवरोपिता जगतः लोकस्य गुर्वी धूः भारः सचिवेषु निचिक्षिपे निहिता ॥ ३४ ॥

अथेति। अथ धुरोऽवतारानन्तरं पुत्रकाम्यया आत्मनः पुत्रेच्छया। "काम्यच्च" इति पुत्रशब्दात् काम्यच्प्रत्ययः। "अ प्रत्ययात्" इति पुत्रकाम्यधातोरकारप्रत्ययः, ततः टाप्। तया तौ दम्पती जायापती। राजदन्तादिषु जायाशब्दस्य दमिति निपातनात् साधुः। प्रयतौ पूतौ विधातारं ब्रह्माणम् अभ्यर्च्य। "स खलु पुत्रार्थिभिरुपास्यते" इति मान्त्रिकाः। गुरोः कुलगुरोः वशिष्ठस्य आश्रमं जग्मतुः, पुत्रप्राप्त्युपायापेक्षया इति शेषः ॥३५॥

स्निग्धेति। स्निग्धः मधुरः गम्भीरः निर्घोषः यस्य तम् एकं

मा भूदाश्रमपीड़ेति परिमेयपुरःसरौ।
अनुभावविशेषात्तु सेनापरिवृताविव ॥ ३७ ॥
सेव्यमानौ सुखस्पर्शैः शालनिर्यासगन्धिभिः।
पुष्परेणूत्किरैर्वातैराधूतवनराजिभिः ॥ ३८ ॥

स्यन्दनं रथम्। प्रावृषि भवः प्रावृषेण्यः। "प्रावृष एण्यः" इति एण्यप्रत्ययः। तं प्रावृषेण्यं पयोवाहं मेघं विद्युदैरावती इव, आस्थितौ आरूढ़ौ, जग्मतुः इति पूर्वेण सम्बन्धः। इरा: आपः। "इरा भूवाक्सुराप्सु स्यात्" इत्यमरः। इरावान् समुद्रः, तत्र भवः ऐरावतः अभ्रमातङ्गः। "ऐरावतोऽभ्रमातङ्गैरावणाभ्रमुवल्लभाः" इत्यमरः। "अभ्रमातङ्गत्वाच्चाभ्रस्थत्वादभ्ररूपत्वात्" इति चीरस्वामी। अत एव मेघारोहणं विद्युत्साहचर्य्यञ्च घटते। किञ्च विद्युत ऐरावतसाहचर्य्यादेव ऐरावती संज्ञा। "ऐरावतस्य स्त्री ऐरावती" इति चीरस्वामी। तस्मात् सुष्ठूक्तं विद्युदैरावताविवेति। एकरथारोहणोक्त्या कार्य्यसिद्धिबीजं दम्पत्योरत्यन्तसौमनस्यं सूचयति ॥ ३६ ॥

मा भूदिति। पुनः किम्भूतौ दम्पती? आश्रमपीड़ा मा भूत् मा अस्त्विति हेतोः। "माङि लुङ्" इत्याशीरर्थे लुङ्। "नमाङ्योगे" इत्यड़ागमनिषेधः। परिमेयपुरःसरौ परिमितपरिचरौ। अनुभावविशेषात्तु तेजोविशेषात् सेनापरिवृतौ इव स्थितौ ॥ ३७ ॥

सेव्यमानाविति। पुनः कथम्भूतौ? सुखः शीतलत्वात् प्रियः स्पर्शः येषां तैः। शालनिर्य्यासगन्धिभिः सर्जतरुनिस्यन्दगन्धवद्भिः। "शालः सर्जतरुः स्मृतः" इति शाश्वतः। उत्किरन्ति विक्षिपन्ति इति उत्किराः। "इगुपध—" इत्यादिना किरतेः

मनोऽभिरामाः शृण्वन्तौ रथनेमिस्वनोन्मुखैः।
षड्जसंवादिनीः केका द्विधा भिन्नाः शिखण्डिभिः॥

परस्पराक्षिसादृश्यमदूरोज्झितवर्त्मसु।
मृगद्वन्द्वेषु पश्यन्तौ स्यन्दनाबद्धदृष्टिषु॥ ४०॥

कप्रत्ययः। पुष्परेणूनाम् उत्किराः तैः आधूताः माम्यात् ईष
कम्पिताः वनराजयः यैः तैः वातैः सेव्यमानौ॥ ३८॥

मन इति। रथनेमिस्वनोन्मुखैः मेघध्वनिशङ्कया उन्नमि
मुखैः इत्यर्थः। शिखण्डिभिः मयूरैः द्विधा भिन्नाः। शुद्धविकृ
भेदेन आविष्कृतावस्थायां च्युताच्युतभेदेन वा षड्जः द्विवि
तत्सादृश्यात् केका अपि द्विधा भिन्ना इत्युच्यते। अतएवाह
षड्जसंवादिनीरिति। षड्भ्यः स्थानेभ्यः जातः षड्ज
तदुक्तम्—"नासां कण्ठमुरस्तालु जिह्वां दन्तांश्च संस्पृश
षड्भ्यः सञ्जायते यस्मात् तस्मात् षड्ज इति स्मृतः॥" स
तन्त्रीकण्ठजन्मा स्वरविशेषः। "निषादर्षभगान्धारषड्
मध्यमधैवताः। पञ्चमश्चेत्यमी सप्त तन्त्रीकण्ठोत्थिताः स्वराः"
इत्यमरः। षड्जेन संवादिनीः सदृशीः। तदुक्तं मातङ्गेन,
"षड्जं मयूरो वदति" इति। मनोऽभिरामाः मनसः प्रिया
के मूर्ध्नि कायन्ति ध्वनन्ति इति केकाः मयूरवाण्यः। "के
वाणी मयूरस्य" इत्यमरः। ताः केकाः शृण्वन्तौ, इ
श्लोकार्थः॥ ३९॥

परस्परेति। विश्रम्भात् अदूरं समीपं यथा भवति त
उज्झितं वर्त्म यैः तेषु, स्यन्दनाबद्धदृष्टिषु, स्यन्दने रथे आब
आसञ्जिता दृष्टिः नेत्रं यैः तेषु। "दृग्दृष्टिनेत्रलोचनच
नयनाम्बकेक्षणाक्षीणि" इति हलायुधः। कौतुकवशात् रथ

श्रेणीबन्धात् वितन्वद्भिरस्तम्भां तोरणस्रजम्।
सारसैः कलनिर्ह्रादैः क्वचिदुन्नमिताननौ ॥ ४१ ॥
पवनस्यानुकूलत्वात् प्रार्थनासिद्धिशंसिनः।
रजोभिस्तुरगोत्कीर्णैरस्पृष्टालकवेष्टनौ ॥ ४२ ॥
सरसीष्वरविन्दानां वीचिविक्षोभशीतलम्।
आमोदमुपजिघ्रन्तौ स्वनिःश्वासानुकारिणम् ॥४३॥

समदृष्टिषु इत्यर्थः। मृग्यश्च मृगाश्च मृगाः। "पुमान् स्त्रिया" इत्येकशेषः। तेषां द्वन्द्वेषु मिथुनेषु। "स्त्रीपुंसौ मिथुनं द्वन्द्वम्" इत्यमरः। परस्पराक्ष्णां सादृश्यं पश्यन्तौ। द्वन्द्वशब्दसामर्थ्यात् मृगीषु सुदक्षिणाक्षिसादृश्यं दिलीपाक्षिसादृश्यं मृगेषु इत्येवं विवेक्तव्यम् ॥ ४० ॥

श्रेणीति। श्रेणीबन्धात् पङ्क्तिबन्धनात् हेतोः अस्तम्भाम् आधारस्तम्भरहिताम्। तोरणं बहिर्द्वारम्। "तोरणोऽस्त्री बहिर्द्वारम्" इत्यमरः। तत्र या स्रक् विरच्यते तां तोरणस्रजं वितन्वद्भिः कुर्वद्भिः इव इत्यर्थः। उत्प्रेक्षाव्यञ्जकेवशब्दप्रयोगाभावेऽपि गम्योत्प्रेक्षेयम्। कलनिर्ह्रादैः अव्यक्तमधुरध्वनिभिः सारसैः पक्षिविशेषैः करणैः क्वचित् उन्नमिताननौ। "सारसो मैथुनी कामी गोनर्दः पुष्कराह्वयः" इति यादवः ॥ ४१ ॥

पवनस्येति। प्रार्थनासिद्धिशंसिनः अनुकूलत्वात् एव मनोरथसिद्धिसूचकस्य पवनस्य अनुकूलत्वात् गन्तव्यदिगभिमुखत्वात्, तुरगोत्कीर्णैः रजोभिः अस्पृष्टाः अलकाः देव्याः वेष्टनम् उष्णीषञ्च राज्ञः ययोः तौ तथोक्तौ। "शिरसा वेष्टनशोभिना सुतः" (८।१२) इति वक्ष्यति ॥ ४२ ॥

सरसीष्विति। सरसीषु वीचिविक्षोभशीतलम् ऊर्मिसङ्घट्टनेन

ग्रामेष्वात्मविसृष्टेषु यूपचिह्नेषु यज्वनाम्।
अमोघाः प्रतिगृह्णन्तौ अर्घ्यानुपदमाशिषः ॥४४॥
हैयङ्गवीनमादाय घोषवृद्धानुपस्थितान्।
नामधेयानि पृच्छन्तौ वन्यानां मार्गशाखिनाम् ॥४५॥

शीतलं श्वनिःश्वासम् अनुकर्त्तुं शीलमस्येति श्वनिःश्वासानुकारिणम्। एतेन तयोस्तत्कष्टस्त्रीपुंसजातीयत्वमुक्तम्। अरविन्दानाम् आमोदम् उपजिघ्रन्तौ घ्राणेन गृह्णन्तौ ॥ ४३ ॥

ग्रामेष्विति। आत्मविसृष्टेषु स्वदत्तेषु यूपः नाम संस्कृतपशुबन्धाय दारुविशेषः यूपाः एव चिह्नानि येषां तेषु ग्रामेषु अमोघाः सफलाः यज्वनां विधिना इष्टवताम्। "यज्वा तु विधिनेष्टवान्" इत्यमरः। सुयजोर्ङ्वनिप्" इति ङ्वनिप्प्रत्ययः। आशिषः आशीर्वादान्। अर्घः पूजाविधिः, तदर्थं द्रव्यम् अर्घ्यम्। "पादार्घाभ्यां च" इति यत्प्रत्ययः। "षट् तु त्रिष्वर्घ्यमर्घार्थे पाद्यं पादाय वारिणि" इत्यमरः। अर्घ्यस्य अनुपदम् अन्वक्, अर्घ्यस्वीकारानन्तरम् इत्यर्थः। प्रतिगृह्णन्तौ स्वीकुर्वन्तौ। पदस्य पश्चात् अनुपदम्। पश्चादर्थेऽव्ययीभावः। "अन्वगन्वक्षमनुगेऽनुपदं क्लीवमव्ययम्" इत्यमरः ॥ ४४ ॥

हैयङ्गवीनमिति। ह्यस्तन-गोदोहोद्भवं घृतं हैयङ्गवीनम्। ह्यः पूर्वेद्युर्भवम्। "तत्तु हैयङ्गवीनं यत् ह्योगोदोहोद्भवं घृतम्" इत्यमरः। "हैयङ्गवीनं संज्ञायाम्" इति निपातः। तत् सद्योघृतम् आदाय उपस्थितान् घोषवृद्धान्। "घोष आभीरपल्ली स्यात्" इत्यमरः। वन्यानां मार्गशाखिनां नामधेयानि पृच्छन्तौ। "दुह्याच्—"इत्यादिना पृच्छतेर्द्विकर्म्मकत्वम्। कुलकम् ॥ ४५ ॥

काप्यभिख्या तयोरासीत् व्रजतोः शुद्धवेषयोः।
हिमनिर्मुक्तयोर्योगे चित्राचन्द्रमसोरिव ॥ ४६ ॥
तत्तद् भूमिपतिः पत्न्यै दर्शयन् प्रियदर्शनः।
अपि लङ्घितमध्वानं बुबुधे न बुधोपमः ॥ ४७ ॥
स दुष्प्रापयशाः प्रापत् आश्रमं श्रान्तवाहनः।
सायं संयमिनस्तस्य महर्षेर्महिषीसखः ॥ ४८ ॥

कापीति। व्रजतोः गच्छतोः शुद्धवेषयोः उज्ज्वलनेपथ्ययोः तयोः सुदक्षिणादिलीपयोः। हिमनिर्मुक्तयोः चित्राचन्द्रमसोः इव, योगे सति का अपि अनिर्वाच्या अभिख्या शोभा आसीत्। "अभिख्या नामशोभयोः" इत्यमरः। "आतश्चोपसर्गे" इत्यङ्-प्रत्ययः। चित्रा नक्षत्रविशेषः। शिशिरापगमे चैत्र्यां चित्रापूर्णचन्द्रमसोरिवेत्यर्थः ॥ ४६ ॥

तत्तदिति। प्रियं दर्शनं स्वकर्मकं यस्य असौ प्रियदर्शनः, योऽन्यदर्शनीयः इत्यर्थः। भूमिपतिः पत्न्यै तत्तत् अद्भुतं वस्तु दर्शयन्, लङ्घितम् अतिवाहितम् अपि अध्वानं न बुबुधे न ज्ञातवान्। बुधः सौम्यः उपमा उपमानं यस्य इति विग्रहः। इदं विशेषणं तत्तद्दर्शयन्नित्युपयोगितयैवास्य प्राज्ञत्वसूचनार्थम् ॥४७॥

स इति। दुष्प्रापयशाः दुष्प्रापम् अन्यदुर्लभं यशः यस्य स तथोक्तः, श्रान्तवाहनः दूरोपगमनात् क्लान्तयुग्मः, महिष्याः सखा महिषीसखः। "राजाहःसखिभ्यष्टच्" इति टच्प्रत्ययः। सहायान्तरनिरपेक्ष इति भावः। सः राजा सायं सायंकाले संयमिनः नियमवतः तस्य महर्षेः वशिष्ठस्य आश्रमं प्रापत् प्राप। पुषादित्वात् अङ् ॥ ४८ ॥

वनान्तरादुपावृत्तैः समित्कुशफलाहरैः ।
पूर्य्यमाणमदृश्याग्निप्रत्युद्यातैस्तपस्विभिः ॥ ४९ ॥
आकीर्णमृषिपत्नीनामुटजद्वाररोधिभिः ।
अपत्यैरिव नीवारभागधेयोचितैर्मृगैः ॥५०॥
सेकान्ते मुनिकन्याभिस्तत्क्षणोज्झितवृक्षकम् ।
विश्वासाय विहङ्गानामालवालाम्बुपायिनाम् ॥५१॥

तमाश्रमं विशिनष्टि—

वनान्तरादिति। वनान्तरात् अन्यस्मात् वनात् उपावृत्तैः प्रत्यावृत्तैः, समिधश्च कुशाश्च फलानि च आहर्त्तुं शील येषाम् इति समित्कुशफलाहरा: तैः। "आङि ताच्छील्ये" इति हरतेराङ्पूर्वात् अच्प्रत्ययः। अदृश्यैः दर्शनायोग्यैः अग्निभिः वैतानिकैः प्रत्युद्याताः प्रत्युद्गताः तैः तपस्विभिः पूर्य्यमाणम्। "प्रोष्यागच्छतामाहिताग्नीनामग्नयः प्रत्युद्या न्तीति" श्रूयते। यथाह,—"कामं पितरं प्रोषितवन्तं पुत्राः प्रत्याधावन्ति एवमेतमग्नयः प्रत्याधावन्ति सशकलान् दारू निवाहरन्" इति ॥ ४९ ॥

आकीर्णमिति। नीवाराणां भागः एव भागधेयः अंशः। "रूपनामभागेभ्यो धेयः" इति वक्तव्यसूत्रात् स्वाभिधेये धेय प्रत्ययः। तस्य उचितैः अत एव उटजानां पर्णशालानां द्वार रोधिभिः द्वाररोधकैः मृगैः ऋषिपत्नीनाम् अपत्यैः इव आकीर्ण व्याप्तम् ॥ ५० ॥

सेकान्ते इति। सेकान्ते वृक्षमूलसेचनावसाने मुनि कन्याभिः सेक्त्रीभिः आलवालेषु जलाधारप्रदेशेषु यत् अम्ब

आतपात्ययसङ्क्षिप्तनीवारासु निषादिभिः ।
मृगैर्वर्त्तितरोमन्थमुटजाङ्गनभूमिषु ॥ ५२ ॥
अभ्युत्थिताग्निपिशुनैरतिथीनाश्रमोन्मुखान् ।
पुनानं पवनोद्धूतैर्धूमैराहुतिगन्धिभिः ॥ ५३ ॥
अथ यन्तारमादिश्य धुर्य्यान् विश्रामयेति सः ।
तामवरोहयत् पत्नीं रथादवततार च ॥ ५४ ॥

त्यायिमम् । "स्यादालवालमावालमावापः" इत्यमरः । विहगानां पक्षिणां विश्वासाय विश्रम्भाय । "समौ विश्वासविश्रम्भौ" इत्यमरः । तत्क्षणे सेकक्षणे उज्झिताः वृक्षकाः ह्रस्ववृक्षाः यस्मिन् तम् । ह्रस्वार्थे कप्रत्ययः ॥ ५१ ॥

आतपेति । आतपस्य अत्यये अपगमे सति सङ्क्षिप्ताः राशीकृताः नीवाराः तृणधान्यानि यासु तासु । "नीवारास्तृणधान्यानि" इत्यमरः । उटजानां पर्णशालानाम् अङ्गनभूमिषु चत्वरभागेषु । "पर्णशालोटजोऽस्त्रियाम्" इति । "अङ्गनं चत्वराजिरे" इति च अमरः । निषादिभिः उपविष्टैः मृगैः वर्त्तितः निष्पादितः रोमन्थः चर्वितचर्वणं यस्मिन् आश्रमे तम् ॥ ५२ ॥

अभ्युत्थितेति । अभ्युत्थिताः प्रज्वलिताः होमयोग्याः इत्यर्थः । "समिद्धेऽग्नावाहुतीर्जुहोति" इति वचनात् । तेषाम् अग्नीनां पिशुनैः सूचकैः पवनोद्धूतैः आहुतिगन्धः येषाम् अस्तीति आहुतिगन्धिनः तैः धूमैः आश्रमोन्मुखान् अतिथीन् पुनानं पवित्रीकुर्वाणम् ॥ कुलकम् ॥ ५३ ॥

अथेति । अथ आश्रमप्राप्त्यनन्तरं सः राजा यन्तारं सारथिम्, धुरं वहन्ति इति धुर्य्याः युग्याः । "धुरो यड्ढकौ" इति यत्प्रत्ययः । "धूर्वहे धुर्य्यधौरेयधुरीणाः सधुरन्धराः" इत्यमरः ।

तस्मै सभ्याः सभार्य्याय गोप्त्रे गुप्ततमेन्द्रियाः।
अर्हणामर्हते चक्रुर्मुनयो नयचक्षुषे ॥ ५५ ॥
विधेः सायन्तनस्यान्ते स ददर्श तपोनिधिम्।
अन्वासितमरुन्धत्या स्वाहयेव हविर्भुजम् ॥ ५६ ॥

धुर्य्यान् रथाश्वान् विश्रामय विनीतश्रमान् कुरु इति आदि
आज्ञाप्य तां पत्नीं रथात् अवारोहयत् अवतारितवान् स्वयं
अवततार। "विश्रमय" इति ह्रस्वपाठे "जनीजृष्–" इतिमित्
"मितां ह्रस्वः" इति ह्रस्वः। दीर्घपाठे "मितां ह्रस्वः" इति
सूत्रे "वा चित्तविरागे" इत्यतो "वा" इत्यनुवर्त्त्य व्यवस्थित
विभाषाश्रयणात् ह्रस्वाभाव इति वृत्तिकारः ॥ ५४ ॥

तस्मै इति। सभायां साधवः सभ्याः। "सभायां यः" इति
यप्रत्ययः। गुप्ततमेन्द्रियाः अत्यन्तनियमितेन्द्रियाः मुनयः
सभार्य्याय गोप्त्रे रक्षकाय। नयः शास्त्रम् एव चक्षुः तत्त्वावेदकं
प्रमाणं यस्य तस्मै नयचक्षुषे अतएव अर्हते प्रशस्ताय पूज्याय
इत्यर्थः। "अर्हः प्रशंसायाम्" इति शतृप्रत्ययः। तस्मै राज्ञे
अर्हणां पूजां चक्रुः। "पूजा नमस्यापचितिः सपर्य्यार्च्चार्हणाः
समाः" इत्यमरः ॥ ५५ ॥

विधेरिति। सः राजा सायन्तनस्य सायम्भवस्य। "साय
ञ्चिरम्—" इत्यादिना ट्युल्प्रत्ययः। विधेः जपहोमाद्यनुष्ठानस्य
अन्ते अवसाने अरुन्धत्या अन्वासितं पश्चात् उपवेशनेन उपा
सेवितम्। कर्मणि क्तः। उपसर्गवशात् सकर्म्मकत्वम्, "अन्वा
स्यैनाम्" इत्यादिवदुपपद्यते। तपोनिधिं वशिष्ठं, स्वाहया
स्वाहादेव्या। "अथाग्नायी स्वाहा च हुतभुक्प्रिया" इत्यमरः
अन्वासितं हविर्भुजम् इव ददर्श। "समित्पुष्पकुशाम्बाम्

तयोर्जगृहतुः पादान् राजा राज्ञी च मागधी ।
तौ गुरुर्गुरुपत्नी च प्रीत्या प्रतिननन्दतुः ॥ ५७ ॥
तमातिथ्यक्रियाशान्तरथक्षोभपरिश्रमम् ।
पप्रच्छ कुशलं राज्ये राज्याश्रममुनिं मुनिः ॥५८॥

दव्रतपाक्षिकः । जपं होमञ्च कुर्वाणो नाभिवाद्यो द्विजो वेत् ॥" इति अनुष्ठानस्य मध्ये अभिवादननिषेधाद्विधेरन्ते दर्येत्युक्तम् । अन्वासनस्यापि पतिव्रताधर्मत्वेनोक्तं. न तु कर्माङ्ग-त्वेन, विधेरन्ते इति कर्म्मणः समाप्त्यभिधानात् ॥ ५६ ॥

तयोरिति । मागधी मगधराजपुत्री राज्ञी सुदक्षिणा राजा च तयोः अरुन्धतीवशिष्ठयोः पादान् जगृहतुः । "पादः पदङ्घ्रि-श्चरणोऽस्त्रियाम्" इत्यमरः । पादग्रहणमभिवादनम् । गुरुपत्नी गुरुश्च कर्त्तारौ सा च स च तौ सुदक्षिणादिलीपौ कर्मभूतौ प्रीत्या हर्षेण प्रतिननन्दतुः, आशीर्वादादिभिः सम्भावयाञ्चक्रतुः इत्यर्थः ॥ ५७ ॥

तमिति । मुनिः अतिथ्यर्थम् आतिथ्यम् । "अतिथेर्ञ्य" इति ञ्यप्रत्ययः । आतिथ्यस्य क्रिया तया शान्तः रथक्षोभेण यः परि-श्रमः स यस्य सः तं तथोक्तम् । राज्यम् एव आश्रमः तत्र मुनिम् मुनितुल्यम् इत्यर्थः । तं दिलीपं राज्ये कुशलं पप्रच्छ । पृच्छतेस्तु द्विकर्मकत्वमित्युक्तम् । यद्यपि राज्यशब्दः पुरोहितादिषु अन्त-र्गतत्वात् राजकर्मवचनः, तथापि अत्र सप्ताङ्गवचनः, "उपपन्नं ननु शिवं सप्तस्वङ्गेषु" ( १।६० ) इति उत्तरविरोधात् । तथाह मनुः,—"स्वाम्यमात्यपुरं राष्ट्रं कोशदण्डौ तथा सुहृत् । सप्तैतानि समस्तानि लोकेऽस्मिन् राज्यमुच्यते ॥" इति । तत्र, "ब्राह्मणं कुशलं पृच्छेत् क्षत्रबन्धुमनामयम् । वैश्यं क्षेमं समागम्य शूद्र-मारोग्यमेव च ॥" इति मनुवचने सति अपि तस्य राज्ञो महानु-

अथाथर्वनिधेस्तस्य विजितारिपुरः पुरः।
अर्थ्यामर्थपतिर्वाचमाददे वदतां वरः ॥५९॥
उपपन्नं ननु शिवं सप्तस्वङ्गेषु यस्य मे।
दैवीनां मानुषीणां च प्रतिहर्त्ता त्वमापदाम् ॥६०

भावत्वाद् ब्राह्मणोचितः कुशलप्रश्न एव जात इत्यनुसन्धेय
अत एवोक्तं "राज्याश्रममुनिम्" इति ॥ ५८ ॥

अथेति। अथ प्रश्नानन्तरं विजितारिपुरः विजितशत्रुनग
वदतां वक्तॄणां वरः श्रेष्ठः। "यतश्च निर्द्धारणम्" इति षष्ठी
अर्थपतिः राजा अथर्वणः अथर्ववेदस्य निधेः तस्य मुनेः पु
अग्रे अर्थ्याम् अर्थात् अनपेताम्। धर्मपथ्यर्थन्यायादनपे
इति यत्प्रत्ययः। वाचम् आददे वक्तुम् उपक्रान्तवान् इत्यर्थ
अथर्वनिधेरित्यनेन पुरोहितकृत्याभिज्ञत्वात् तत्कर्मनिर्वाहक
मुनेरस्तीति सूच्यते। यथाह कामन्दकः—"त्रय्याञ्च दण्डनीत्य
कुशलः स्यात् पुरोहितः। अथर्वविहितं कुर्यात् नित्यं शान्तिक
पौष्टिकम् ॥" इति ॥ ५९ ॥

उपपन्नमिति। हे गुरो! सप्तसु अङ्गेषु स्वाम्यमात्यादिषु
"स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च। सप्ताङ्गानि" इत्य
मरः। शिवं कुशलम् उपपन्नं ननु युक्तम् एव। ननु अवधारणे।
"प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु" इत्यमरः। कथम्
इत्यत आह,—यस्य मे दैवीनां देवेभ्यः आगतानां दुर्भिक्षादीनां
मानुषीणां मनुष्येभ्यः आगतानां चौरभयादीनाम्। उभयत्रापि
"तत आगतः" इत्यण्। टिड्ढाणञ्—" इत्यादिना ङीप्। आपदां
व्यसनानां त्वं प्रतिहर्त्ता वारयिता असि। अत्राह कामन्दकः—
"हुताशनो जलं व्याधिः दुर्भिक्षं मरणं तथा। इति पञ्चविधं

तव मन्त्रकृतो मन्त्रैर्दूरात् प्रशमितारिभिः ।
प्रत्यादिश्यन्त इव मे दृष्टलक्ष्यभिदः शराः ॥६१॥
हविरावर्जितं होतः ! त्वया विधिवदग्निषु ।
वृष्टिर्भवति शस्यानामवग्रहविशोषिणाम् ॥६२॥
पुरुषायुषजीविन्यो निरातङ्का निरीतयः ।
यन्मदीयाः प्रजास्तस्य हेतुस्त्वद्ब्रह्मवर्चसम् ॥६३॥

दैवं मानुषं व्यसनं ततः ॥ आयुक्तकेभ्यश्चौरेभ्यः परेभ्यो राजवल्लभात् । पृथिवीपतिलोभाच्च नराणां पञ्चधा मतम्"॥ इति ॥६०॥

तत्र मानुषापत्प्रतीकारमाह—

तवेति । दूरात् परोक्षे एव प्रशमितारिभिः, मन्त्रान् कृतवान् मन्त्रकृत् । "सुकर्मपापमन्त्रपुण्येषु कृञः" इति क्विप् । तस्य मन्त्रकृतः मन्त्राणां स्रष्टुः प्रयोक्तुः वा तव मन्त्रैः कर्तृभिः दृष्टं प्रत्यक्षं यत् लक्ष्यं तन्मात्रं भिन्दन्ति इति दृष्टलक्ष्यभिदः मे शराः प्रत्यादिश्यन्ते इव, वयमेव समर्थाः किमेभिः पिष्टपेषकैरिति निराक्रियन्ते इव इत्युत्प्रेक्षा । "प्रत्यादेशो निराकृतिः" इत्यमरः । त्वन्मन्त्रसामर्थ्यादेव नः पौरुषं फलतीति भावः ॥६१॥

सम्प्रति दैविकापत्प्रतीकारमाह—

हविरिति । हे होतः ! त्वया विधिवत् अग्निषु आवर्जितं प्रक्षिप्तं हविः आज्यादिकं कर्तृ अवग्रहः वर्षप्रतिबन्धः । "अवात् ग्रहो वर्षप्रतिबन्धे" इति अप्प्रत्ययः । "वृष्टिर्वर्षं तद्विघातेऽवग्राहावग्रहौ समौ" इत्यमरः । तेन विशोषिणां विशुष्यतां शस्यानां वृष्टिः भवति, वृष्टिरूपेण शस्यानि उपजीवयतीति भावः । अत्र मनुः—"अग्नौ दत्ताहुतिः सम्यग् आदित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिः वृष्टेरन्नं ततः प्रजाः" इति ॥६२॥

त्वयैवं चिन्त्यमानस्य गुरुणा ब्रह्मयोनिना।
सानुबन्धाः कथं न स्युः सम्पदो मे निरापदः ॥६४॥
किन्तु वध्वां तवैतस्यामदृष्टसदृशप्रजम्।
न मामवति सद्वीपा रत्नसूरपि मेदिनी ॥६५॥

पुरुषेति। आयुः जीवितकालः, पुरुषस्य आयुः पुरुषायुषं, वर्षशतम् इत्यर्थः। "शतायुर्वै पुरुषः" इति श्रुतेः। "अचतुर—" इत्यादिसूत्रेण अच्प्रत्ययान्तो निपातः। मदीयाः प्रजाः पुरुषायुषं जीवन्ति इति पुरुषायुषजीविन्यः, निरातङ्काः निर्भयाः। "आतङ्को भयमाशङ्का" इति हलायुधः। निरीतयः अतिवृष्ट्यादिरहिताः इति यत् तस्य सर्वस्य त्वद्ब्रह्मवर्चसं तव व्रताध्ययनसम्पत्तिः एव हेतुः। "व्रताध्ययनसम्पत्तिः इत्येतत् ब्रह्मवर्चसम्" इति हलायुधः। ब्रह्मणः वर्चः ब्रह्मवर्चसम्। "ब्रह्महस्तिभ्यां वर्चसः" इति अच्प्रत्ययः। "अतिवृष्टिरनावृष्टिः मूषिकाः शलभाः शुकाः। अत्यासन्नाश्च राजानः षडेता ईतयः स्मृताः॥" इति कामन्दकः॥ ६३॥

त्वयेति। ब्रह्मा योनिः कारणं यस्य तेन ब्रह्मपुत्रेण गुरुणा त्वया एवम् उक्तप्रकारेण चिन्त्यमानस्य अनुध्यायमानस्य, अत एव निरापदः व्यसनहीनस्य मे सम्पदः सानुबन्धाः अनुस्यूताः, अविच्छिन्ना इति यावत् कथं न स्युः? स्युरेव इत्यर्थः ॥६४॥

सम्प्रति आगमनप्रयोजनमाह,—

किन्त्विति। किन्तु तव एतस्यां वध्वां स्नुषायाम्। "वधूर्जाया स्नुषा स्त्री च" इत्यमरः। अदृष्टा सदृशी अनुरूपा प्रजा येन तं मां सद्वीपा अपि रत्नानि सूयते इति रत्नसूः अपि "सत्सूद्विष—" इत्यादिना क्विप्। मेदिनी न अवति न प्रीणाति।

ूनं मत्तः परं वंश्याः पिण्डविच्छेददर्शिनः ।
। प्रकामभुजः श्राद्धे स्वधासंग्रहतत्पराः ॥६६॥
मत्परं दुर्लभं मत्वा नूनमावर्जितं मया ।
यः पूर्वैः स्वनिःश्वासैः कवोष्णमुपभुज्यते ॥६७॥
सोऽहमिज्याविशुद्धात्मा प्रजालोपनिमीलितः ।
प्रकाशश्चाप्रकाशश्च लोकालोक इवाचलः ॥६८॥

ावधातुः रक्षणगतिप्रीत्याद्यर्थेषु उपदेशात् भव प्रीणने । रत्नसूर-
ोत्वनेन सर्वरत्नेभ्यः पुत्ररत्नमेव श्लाघ्यमिति सूचितम् ॥ ६५ ॥

तदेव प्रतिपादयति,—

नूनमिति । मत्तः परं मदनन्तरम् । "पञ्चम्यास्तसिल्" ।
ेण्डविच्छेददर्शिनः पिण्डदानविच्छेदम् उत्प्रेक्ष्यमाणाः वंशो-
ावाः वंश्याः पितरः, स्वधा इत्यव्ययं पितृभोज्ये वर्त्तते, तस्य
ंग्रहे तत्पराः आसक्ताः सन्तः श्राद्धे पितृकर्म्मणि । "पितृदानं
निवापः स्यात् श्राद्धं तत्कर्म्म शास्त्रतः" इत्यमरः । प्रकामभुजः
र्याप्तभोजिनः न भवन्ति नूनं सत्यम् । "कामं प्रकामं
पर्याप्तम्" इत्यमरः । निर्धना हि आपद्धनं कियदपि संग्टह्ण-
न्तीति भावः ॥ ६६ ॥

मत्परमिति । मत्परं मदनन्तरम् । "अन्यारात्—" इत्या-
दिना पञ्चमी । दुर्लभं दुर्लभ्यं मत्वा मया आवर्ज्जितं दत्तं
पयः पूर्वैः पितृभिः स्वनिःश्वासैः दुःखजैः कवोष्णम् ईषदुष्णं
यथा तथा उपभुज्यते, नूनमिति तर्के । कवोष्णमिति कुशब्दस्य
कवादेशः । "कोष्णं कवोष्णं मन्दोष्णं कदुष्णं त्रिषु तद्वति"
इत्यमरः ॥ ६७ ॥

सोऽहमिति । इज्या यागः । "व्रजयजोर्भावे क्यप्" इति

लोकान्तरसुखं पुण्यं तपोदानसमुद्भवम् ।
सन्ततिः शुद्धवंश्या हि परत्रेह च शर्मणे ॥६६॥
तया हीनं विधातर्मां कथं पश्यन्न दूयसे ।
सिक्तं स्वयमिव स्नेहाद् वन्ध्यमाश्रमवृक्षकम् ॥७

ल्यप्प्रत्ययः । तया विशुद्धात्मा विशुद्धचेतनः प्रजालोपेन सन्
भावेन निमीलितः कृतनिमीलनः सः श्रहं, लोक्यते इति लो
न लोक्यते इति श्रलोकः, लोकश्च श्रलोकश्च श्रत्र स्तः इ
लोकश्चासौ श्रलोकश्चेति वा लोकालोकः चक्रवालः श्रच
इव । "लोकालोकश्चक्रवालः" इत्यमरः । प्रकाशते इति, प्र
श्च देवऋणविमोचनात्, न प्रकाशते इति श्रप्रकाशश्च पि
ऋणाविमोचनात् । पचाद्यच् । श्रस्मीति शेषः । लोकालोको
श्रन्तःसूर्य्यसम्पर्कात् वहिस्तमोव्याप्त्या च प्रकाशश्च श्रप्रका
इति मन्तव्यम् ॥ ६८ ॥

ननु तपोदानादिसम्पन्नस्य किम् अपत्यैरिति अत्राह—

लोकान्तरेति । समुद्भवति अस्मादिति समुद्भवः कारणं, त
दाने समुद्भवः यस्य तत् तपोदानसमुद्भवं यत् पुण्यं तत् लो
न्तरे परलोके सुखं सुखकारं, शुद्धवंशे भवा शुद्धवंश्या सन्त
हि परत्र परलोके इह च लोके शर्मणे सुखाय । "शर्मशा
सुखानि च" इत्यमरः । भवतीति शेषः ॥ ६९ ॥

तयेति । हे विधातः ! स्रष्टः ! तया सन्तत्या हीनम् अ
पत्यं मां स्नेहात् प्रेम्णा स्वयम् एव सिक्तं जलसेकेन वर्धि
वन्ध्यम् अफलम् । "वन्ध्योऽफलोऽवकेशी च" इत्यमरः । आश्र
मस्य वृक्षकं वृक्षपोतम् इव पश्यन् कथं न दूयसे न परितप्यसे !
विधातरित्यनेन समर्थोऽप्युपेक्षसे इति गम्यते ॥ ७० ॥

असह्यपीडं भगवन् ! ऋणमन्त्यमवेहि मे ।
अरुन्तुदमिवालानमनिर्वाणस्य दन्तिनः ॥७१॥
तस्मान्मुच्ये यथा तात ! संविधातुं तथार्हसि ।
इक्ष्वाकूणां दुरापेऽर्थे त्वदधीना हि सिद्धयः ॥७२॥
इति विज्ञापितो राज्ञा ध्यानस्तिमितलोचनः ।
क्षणमात्रमृषिस्तस्थौ सुप्तमीन इव ह्रदः ॥७३॥

असह्येति । हे भगवन् ! मे मम अन्त्यम् ऋणं पैतृकम् ऋणम् अनिर्वाणस्य मज्जनरहितस्य । "निर्वाणं निर्वृतौ मोक्षे विनाशे गजमज्जने" इति यादवः । दन्तिनः गजस्य, अरुः मर्म तुदतीति अरुन्तुदं मर्मस्पृक् । "व्रणोऽस्त्रियामीर्ममरुः" इति "अरुन्तुदस्तु मर्मस्पृक्" इति च अमरः । "विध्वरुषोस्तुदः" इति खश्प्रत्ययः । "अरुर्द्विषत्—"इत्यादिना मुमागमः । आलानं बन्धनस्तम्भम् इव । "आलानं बन्धनस्तम्भे" इत्यमरः । असह्या सोढुम् अशक्या पीडा दुःखं यस्मिन् तत् अवेहि, दुःसहदुःखजनकं विद्धि इत्यर्थः । "निर्वाणोत्थानशयनानि त्रीणि गजकर्माणि" इति पालकाव्ये । "ऋणं देवस्य यागेन ऋषीणां पाठकर्मणा । सन्तत्या पितृलोकानां शोधयित्वा परिव्रजेत्"॥७१॥

तस्मादिति । हे तात ! तस्मात् पैतृकात् ऋणात् यथा मुच्ये मुक्तो भवामि । कर्त्तृकर्मणि लट् । तथा संविधातुं कर्तुम् अर्हसि, हि यस्मात् कारणात् इक्ष्वाकूणाम् इक्ष्वाकुवंश्यानाम् । तद्राजत्वात् बहुष्वणो लुक् । दुरापे दुष्प्राप्ये अर्थे, सिद्धयः त्वदधीनाः त्वदायत्ताः । इक्ष्वाकूणामिति शेषे षष्ठी । "न लोक—" इत्यादिना कृद्योगे षष्ठीनिषेधात् ॥ ७२ ॥

इतीति । इति राज्ञा विज्ञापितः ऋषिः ध्यानेन स्तिमिते

सोऽपश्यत् प्रणिधानेन सन्ततेः स्तम्भकारणम् ।
भावितात्मा भुवो भर्त्तुरथैनं प्रत्यबोधयत् ॥७४॥
पुरा शक्रमुपस्थाय तवोर्वीं प्रति यास्यतः ।
आसीत् कल्पतरुच्छायामाश्रिता सुरभिः पथि॥७
धर्मलोपभयाद्राज्ञीमृतुस्नातामिमां स्मरन् ।
प्रदक्षिणक्रियार्हायां तस्यां त्वं साधु नाचरः ॥७६॥

लोचने यस्य सः ध्यानस्तिमितलोचनः निश्चलाक्षः सन् क्षणमा
सुप्तमीनः ह्रदः इव तस्थौ ॥ ७३ ॥

सोऽपश्यदिति । सः मुनिः प्रणिधानेन चित्तैकाग्र्ये
भावितात्मा शुद्धान्तःकरणः भुवो भर्त्तुः नृपस्य सन्ततेः स्तम्भ
कारणं सन्तानप्रतिबन्धकारणम् अपश्यत् । अथ अनन्तरम् ए
नृपं प्रत्यबोधयत्, स्वदृष्टं ज्ञापितवान् इत्यर्थः । एनमिति "गति
बुद्धि—" इत्यादिना अणिकर्त्तुः कर्मत्वम् ॥ ७४ ॥

पुरेति । पुरा पूर्वं शक्रम् इन्द्रम् उपस्थाय संसेव्य उर्वीं प्रति
भुवम् उद्दिश्य यास्यतः गमिष्यतः तव पथि कल्पतरुच्छायाम्
आश्रिता सुरभिः कामधेनुः आसीत्, तत्र स्थिता इत्यर्थः ॥७५॥

ततः किमित्याह—

धर्मलोपेति । ऋतुः पुष्पं, रजः इति यावत् । "ऋतुः स्त्री
कुसुमेऽपि च" इत्यमरः । ऋतुना निमित्तेन स्नाताम् इमां
राज्ञीं सुदक्षिणां धर्मस्य ऋत्वभिगमनलक्षणस्य लोपात् भ्रंशात्
यत् भयं तस्मात् स्मरन् ध्यायन् । "मृदङ्गं दैवतं विप्रं घृतं मधु
चतुष्पथम् । प्रदक्षिणानि कुर्वीत विज्ञातांश्च वनस्पतीन् ॥" इति
शास्त्रात् प्रदक्षिणक्रियार्हायां प्रदक्षिणकरणयोग्यायां तस्यां धेन्वां
त्वं साधु प्रदक्षिणादिसत्कारं न आचरः न आचरितवान् असि,

अवजानासि मां यस्मादतस्ते न भविष्यति ।
मत्प्रसूतिमनाराध्य प्रजेति त्वां शशाप सा ॥७७॥
स शापो न त्वया राजन् ! न च सारथिना श्रुतः ।
नदत्याकाशगङ्गायाः स्रोतस्युद्दामदिग्गजे ॥७८॥
ईप्सितं तदवज्ञानात् विद्धि सार्गलमात्मनः ।
प्रतिबध्नाति हि श्रेयः पूज्यपूजाव्यतिक्रमः ॥७९॥

वासना हि विस्मरन्तीति भावः । ऋतुकालाभिगमने मनुः,—"ऋतुकालाभिगामी स्यात् स्वदारनिरतः सदा" । इति । अकरणे दोषमाह पराशरः,—ऋतुस्नातां तु यो भार्य्यां स्वस्थः सन्नोपगच्छति । बालगोघ्नापराधेन विध्यते नात्र संशयः ॥" इति ॥७६॥

अवजानासीति । यस्मात् कारणात् माम् अवजानासि तिरस्करोषि, अतः कारणात् मत्प्रसूतिं मम सन्ततिम् अनाराध्य असेवयित्वा ते तव प्रजा न भविष्यतीति सा सुरभिः त्वां शशाप । शप आक्रोशे ॥ ७७ ॥

कथं तदस्माभिर्न श्रुतमित्याह—

स शाप इति । हे राजन् ! सः शापः त्वया न श्रुतः, सारथिना च न श्रुतः । अश्रवणे हेतुमाह,—क्रीड़ार्थम् आगताः उद्दामानः दाम्नः उद्गताः दिग्गजाः यस्मिन् तथोक्ते आकाशगङ्गायाः मन्दाकिन्याः स्रोतसि प्रवाहे नदति सति ॥ ७८ ॥

अस्तु प्रस्तुते किमायातमित्यत्राह—

ईप्सितमिति । तदवज्ञानात् तस्याः धेनोः अवज्ञानात् अपमानात् आत्मनः स्वस्य आप्तुम् इष्टम् ईप्सितं मनोरथम् । आप्नोतेः सन्नन्तात् क्तः, ईकारश्च । सार्गलं सप्रतिबन्धं विद्धि

हविषे दीर्घसत्रस्य सा चेदानीं प्रचेतसः।
भुजङ्गपिहितद्वारं पातालमधितिष्ठति ॥८०॥
सुतां तदीयां सुरभेः कृत्वा प्रतिनिधिं शुचिः।
आराधय सपत्नीकः प्रीता कामदुघा हि सा ॥८१॥
इति वादिन एवास्य होतुराहुतिसाधनम्।
अनिन्द्या नन्दिनी नाम धेनुराववृते वनात् ॥८२॥

जानीहि। हि तथाहि। पूज्यपूजायाः व्यतिक्रमः अतिक्रमः श्रेयः प्रतिबध्नाति ॥ ७९ ॥

तर्हि गत्वा तामाराधयामि। सा वा कथञ्चिदागमिष्यती त्याशा न कर्त्तव्येत्याह—

हविष इति। सा च सुरभिः इदानीं दीर्घं सत्रं चिरका साध्यो यागविशेषः यस्य तस्य प्रचेतसः वरुणस्य हविषे दध्य ज्यादिहविरर्थं भुजङ्गपिहितद्वारं भुजङ्गावरुद्धद्वारं ततः दुष्प्रवे पातालम् अधितिष्ठति पाताले तिष्ठति इत्यर्थः। "अधिशीङ् स्थासां कर्म" इति कर्मत्वम् ॥ ८० ॥

तर्हि का गतिरित्यत आह—

सुतामिति। तस्याः सुरभेः इयं तदीया, तां सुतां सुरभेः प्रतिनिधिं कृत्वा शुचिः शुद्धः, सह पत्न्या वर्त्तते इति सपत्नीकः सन्। "नद्यृतश्च" इति कप्प्रत्ययः। आराधय; हि यस्मात् कारणात् सा प्रीता तुष्टा सती। कामान् दोग्धीति कामदुघा भवति। "दुहः कप्घश्च" इति कप्प्रत्ययः, घादेशश्च ॥८१॥

इतीति। इति वादिनः वदतः एव होतुः हवनशीलस्य। "तृन्" इति तृन्प्रत्ययः। अस्य मुनेः आहुतीनां साधनं कारणम्। नन्दयतीति व्युत्पत्त्या नन्दिनी नाम, अनिन्द्या अगर्ह्या

ललाटोदयमाभुग्नं पल्लवस्निग्धपाटला।
बिभ्रती श्वेतरोमाङ्कं सन्ध्येव शशिनं नवम्॥८३॥
भुवं कोष्णेन कुण्डोध्नी मेध्येनावभृथादपि।
प्रस्नवेनाभिवर्षन्ती वत्सालोकप्रवर्त्तिना॥८४॥
रजःकणैः खुरोद्धूतैः स्पृशद्भिर्गात्रमन्तिकात्।
तीर्थाभिषेकजां शुद्धिमादधाना महीक्षितः॥८५॥

अयस्ता धेनुः वनात् आवृत्ते प्रत्यागता। "अव्याक्षेपो भविष्यन्त्याः कार्य्यसिद्धेर्हि लक्षणम्" इति भावः॥ ८२॥

सम्प्रति धेनुं विशिनष्टि—

ललाट इति। पल्लववत् स्निग्धा चासौ पाटला च। सन्ध्यायामपि एतद्विशेषणं योज्यम्। ललाटे उदयः यस्य सः ललाटोदयः, तम्। आभुग्नम् ईषद्वक्रम्। "आविद्धं कुटिलं भुग्नं वेल्लितं वक्रमित्यपि"। इत्यमरः। "ओदितश्च" इति निष्ठा-तस्य नत्वम्। श्वेतरोमाणि एव अङ्कः तं; बिभ्रती। नवं शशिनं बिभ्रती सन्ध्या इव स्थिता॥ ८३॥

भुवमिति। कोष्णेन किञ्चित् उष्णेन। "कवञ्चोष्णे" इति चकारात् कादेशः। अवभृथात् अपि अवभृथस्नानात् अपि,मेध्येन पवित्रेण।"पूतं पवित्रं मेध्यं च"इत्यमरः। वत्सस्य आलोकेन प्रदर्शनेन प्रवर्त्तिना, प्रवहता प्रस्नवेन क्षीराभिस्यन्देन, भुवम् अभिवर्षन्ती सिञ्चन्ती। कुण्डम् इव ऊधः आपीनं यस्याः सा कुण्डोध्नी। "ऊधस्तु क्लीवमापीनम्" इत्यमरः। "ऊधसोऽनङ्" इत्यनङादेशः। "बहुव्रीहेरूधसो ङीष्" इति ङीष्॥ ८४॥

रज इति। खुरोद्धूतैः अन्तिकात् समीपे गात्रं स्पृशद्भिः।

तां पुण्यदर्शनां दृष्ट्वा निमित्तज्ञस्तपोनिधिः।
याज्यमाशंसितावन्ध्यप्रार्थनं पुनरब्रवीत् ॥८६॥
अदूरवर्त्तिनीं सिद्धिं राजन्! विगणयात्मनः।
उपस्थितेयं कल्याणी नाम्नि कीर्त्तित एव यत् ॥८७॥
वन्यवृत्तिरिमां शश्वदात्मानुगमनेन गाम्।
विद्यामभ्यसनेनेव प्रसादयितुमर्हसि ॥ ८८ ॥

"दूरान्तिकार्थेभ्यो द्वितीया च" इति चकारात् पञ्चमी। राज्ञः कर्वेः, महीं क्षियते ईष्टे इति महीक्षित् तस्य। तीर्थाभिषेकेण जातां तीर्थाभिषेकजां, शुद्धिम् आदधाना कुर्वाणा। एतेन वायव्यस्नानमुक्तम्। उक्तञ्च मनुना,—"आग्नेयं भस्मना स्नानमवगाह्यन्तु वारुणम्। आपोहिष्ठेति च ब्राह्मं वायव्यं गोरजः स्मृतम् ॥" इति ॥ ८५ ॥

तामिति। निमित्तज्ञः शकुनज्ञः तपोनिधिः वशिष्ठः, पुण्यं दर्शनं यस्याः तां, तां धेनुं दृष्ट्वा, आशंसितं मनोरथः। "नपुंसके भावे क्तः"। तत्र अवन्ध्यं सफलं प्रार्थनं यस्य स तम्, अवन्ध्यमनोरथम् इत्यर्थः। याजयितुं योग्यं याज्यं, पार्थिवं पुनः अब्रवीत् ॥ ८६ ॥

अदूरेति। हे राजन्! आत्मनः कार्य्यस्य सिद्धिम् अदूरवर्त्तिनीं शीघ्रभाविनीं विगणय विद्धि, यत् यस्मात् कारणात् कल्याणी मङ्गलमूर्त्तिः। "बह्वादिभ्यश्च" इति ङीष्। इयं धेनुः नाम्नि कीर्त्तिते कथिते सति एव उपस्थिता ॥ ८७ ॥

वन्येति। वने भवं वन्यं, कन्दमूलादिकं, वृत्तिः आहारः यस्य तथाभूतः सन्, इमां गां शश्वत् सदा, आप्रसादात् अविच्छेदेन इत्यर्थः। आत्मनः तव कर्तुः अनुगमनेन अनुसरणेन,

प्रस्थितायां प्रतिष्ठेथाः स्थितायां स्थितिमाचरेः।
निषस्सायां निषीदास्यां पीताम्भसि पिबेरपः ॥८९॥

वधूर्भक्तिमती चैनामर्चितामातपोवनात्।
प्रयता प्रातरन्वेतु सायं प्रत्युद्व्रजेदपि ॥९०॥

इत्याप्रसादादस्यास्त्वं परिचर्य्यापरो भव।
अविघ्नमस्तु ते स्थेयाः पितेव धुरि पुत्रिणाम् ॥९१॥

अभ्यसनेन अनुष्ठातुः अभ्यासेन विद्याम् इव, प्रसादयितुं प्रसन्नां कर्त्तुम् अर्हसि ॥ ८८ ॥

अथानुसरणप्रकारमाह—

प्रस्थितेति। अस्यां नन्दिन्यां प्रस्थितायां प्रतिष्ठेथाः प्रयाहि। "समवप्रविभ्यः स्थः" इति आत्मनेपदम्। स्थितायां निवृत्तगतिकायां स्थितिम् आचरेः स्थितिं कुरु, तिष्ठ इत्यर्थः। निषस्सायाम् उपविष्टायां निषीद उपविश। विध्यर्थे लोट्। पीतम् अम्भः यया तस्यां पीताम्भसि सत्याम् अपः पिबेः पिब ॥ ८९ ॥

वधूरिति। वधूः जाया च भक्तिमती प्रयता सती गन्धादिभिः अर्चिताम् एनां गां प्रातः आतपोवनात्। आङ्मर्य्यादायां, पदद्वयञ्चैतत्। अन्वेतु अनुगच्छतु। सायम् अपि प्रत्युद्व्रजेत् प्रत्युद्गच्छेत्। विध्यर्थे लिङ् ॥ ९० ॥

इतीति। इत्यनेन प्रकारेण त्वम् आप्रसादात् प्रसादपर्य्यन्तम्। "आङ्मर्य्यादाभिविध्योः" इत्यस्य वैभाषिकत्वात् असमासत्वम्। अस्याः धेनोः परिचर्य्यापरः शुश्रूषापरः भव, ते तव अविघ्नं विघ्नस्य अभावः अस्तु। "अव्ययं विभक्ति—" इत्यादिना अर्थाभावेऽव्ययीभावः। पितेव पुत्रिणां सत्पुत्रवताम्। प्रशंसायाम् इनिप्रत्ययः। धुरि अग्रे स्थेयाः तिष्ठेः। आशीरर्थे लिङ्।

तथेति प्रतिजग्राह प्रीतिमान् सपरिग्रहः।
आदेशं देशकालज्ञः शिष्यः शासितुरानतः॥९२॥
अथ प्रदोषे दोषज्ञः संवेशाय विशाम्पतिम्।
सूनुः सूनृतवाक् स्रष्टु र्विससर्जोर्जितश्रियम्॥९३॥
सत्यामपि तपःसिद्धौ नियमापेक्षया मुनिः।
कल्पवित् कल्पयामास वन्यामेवास्य संविधाम्॥९४॥

"एर्लिङि" इत्याकारस्य एकारादेशः। त्वत्सदृशो भवत्पुत्त्रोऽस्तु इति भावः॥ ९१॥

तथेति। देशकालज्ञः, देशः अग्निसन्निधिः, कालः अग्निहोत्रावसानसमयः; विशिष्टदेशकालोत्पन्नमार्षं ज्ञानमव्याहतम् इति जानन्; अत एव प्रीतिमान् शिष्यः अन्तेवासी, राजा सपरिग्रहः सपत्नीकः। "पत्नीपरिजनादानमूलशापाः परिग्रहाः"। इत्यमरः। आनतः विनयनम्रः सन्, शासितुः गुरोः आदेशम् आज्ञां तथेति प्रतिजग्राह स्वीचकार॥ ९२॥

अथेति। अथ प्रदोषे रात्रौ दोषज्ञः विद्वान्। "विद्वान् विपश्चिद् दोषज्ञः" इत्यमरः। सूनृतवाक् सत्यप्रियवाक्। "प्रियं सत्यं च सूनृतम्" इति हलायुधः। स्रष्टुः सूनुः ब्रह्मपुत्त्रः मुनिः। अनेन प्रकृतकार्य्यनिर्वाहकत्वं सूचयति। ऊर्जितश्रियं विशाम्पतिं मनुजेश्वरम्। "द्वौ विशौ वैश्यमनुजौ" इत्यमरः। संवेशाय निद्रायै। "स्यान्निद्रा शयनं स्वापः स्वप्नः संवेश इत्यपि"। इत्यमरः। विससर्ज आज्ञापयामास॥ ९३॥

सत्यामपीति। कल्पवित् व्रतप्रयोगाभिज्ञः मुनिः, तपःसिद्धौ सत्याम् अपि, तपसा एव राजयोग्याहारसम्पादनसामर्थ्ये सत्यपि इत्यर्थः। नियमापेक्षया तदाप्रभृति एव व्रतचर्य्यापेक्षया,

निर्दिष्टां कुलपतिना स पर्णशाला-
मध्यास्य प्रयतपरिग्रहद्वितीयः।
तच्छिष्याध्ययननिवेदितावसानां
संविष्टः कुशशयने निशां निनाय ॥९५॥

इति श्रीरघुवंशे महाकाव्ये कालिदासकृतौ
वशिष्ठाश्रमगमनो नाम प्रथमः सर्गः।

अस्य राज्ञः वन्याम् एव, संविधीयते अनयेति संविधां कुशादि-शयनसामग्रीम्। "आतश्चोपसर्गे" इति कप्रत्ययः। "अकर्त्तरि च कारके संज्ञायाम्" इति कर्म्माद्यर्थत्वम्। कल्पयामास सम्पादयामास ॥ ९४ ॥

निर्दिष्टामिति। सः राजा कुलपतिना मुनिकुलेश्वरेण वशिष्ठेन निर्दिष्टां पर्णशालाम् अध्यास्य अधिष्ठाय, तस्याम् अधिष्ठानं कृत्वा इत्यर्थः। "अधिशीङ्—" इत्यादिना आधारस्य कर्म्मत्वं, कर्म्मणि द्वितीया। प्रयतः नियतः परिग्रहः पत्नी द्वितीयः यस्येति सः तथोक्तः, कुशानां शयने संविष्टः सुप्तः सन्, तस्य वशिष्ठस्य शिष्याणाम् अध्ययनेन अपररात्रवेदपाठेन निवेदितम् अवसानं यस्याः तां, निशां निनाय गमयामास। अपररात्राध्ययने मनुः—"निशान्ते न परिश्रान्तो ब्रह्माधीत्य पुनः स्वपेत्"। "न चापररात्रमधीत्य पुनः स्वपेत्" इति गौतमश्च। प्रहर्षिणीवृत्तमेतत्। तदुक्तम्,—"म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम्" ॥ ९५ ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां रघुवंशटीकायां सञ्जीवनीसमाख्यायां प्रथमः सर्गः।

## द्वितीयः सर्गः ।

अथ प्रजानामधिपः प्रभाते
जायाप्रतिग्राहितगन्धमाल्याम् ।
वनाय पीतप्रतिबद्धवत्सां
यशोधनो धेनुमृषेर्मुमोच ॥ १ ॥

आशासु राशीभवदङ्गवल्लीभासैव दासीकृतदुग्धसिन्धुम् ।
मन्दस्मितैर्निन्दितशारदेन्दुं वन्देऽरविन्दाननसुन्दरि ! त्वाम् ॥

अथेति । अथ निशानयनानन्तरं यशोधनः प्रजानाम् अधिपः प्रजेश्वरः प्रभाते प्रातःकाले जायया सुदक्षिणया प्रतिग्राहिते स्वीकारिते गन्धमाल्ये यया सा जायाप्रतिग्राहितगन्धमाल्या, तां तथोक्ताम्, पीतं पानम् अस्यास्तीति पीतः, पीतवान् इत्यर्थः । "अर्शआदिभ्योऽच्" इति अच्प्रत्ययः । "पीता गावो भुक्ता ब्राह्मणाः" इति महाभाष्ये दर्शनात् । पीतः प्रतिबद्धः वत्सः यस्याः ताम् ; ऋषेः धेनुं वनाय वनं गन्तुम् । "क्रियार्थोपपद—" इत्यादिना चतुर्थी । मुमोच मुक्तवान् । जायापदसामर्थ्यात् सुदक्षिणायाः पुत्रजननयोग्यत्वमनुसन्धेयम् । तथाहि श्रुतिः,—"पतिर्जायां प्रविशति गर्भोभूत्वेह मातरम् । तस्यां पुनर्नवो भूत्वा दशमे मासि जायते । तज्जाया जाया भवति यदस्यां जायते पुनः" ॥ इति । यशोधन इत्यनेन पुत्रवतां कीर्त्तिलोभात् राजानई गोरक्षणे प्रवृत्त इति गम्यते । अस्मिन् सर्गे वृत्तमुपजातिः,—"अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः" । इति ॥ १ ॥

तस्याः खुरन्यासपवित्रपांशु-
मपांशुलानां धुरि कीर्त्तनीया।
मार्गं मनुष्येश्वरधर्मपत्नी
श्रुतेरिवार्थं स्मृतिरन्वगच्छत्॥ २॥
निवर्त्त्य राजा दयितां दयालु-
स्तां सौरभेयीं सुरभिर्यशोभिः।
पयोधरीभूतचतुःसमुद्रां
जुगोप गोरूपधरामिवोर्वीम्॥ ३॥

तस्या इति। पांशवः दोषाः आसां सन्तीति पांशुलाः स्वैरिण्यः। "स्वैरिणी पांशुला" इत्यमरः। "सिध्मादिभ्यश्च" इति लच्प्रत्ययः। अपांशुलानां पतिव्रतानां धुरि अग्रे कीर्त्तनीया परिगणनीया मनुष्येश्वरधर्मपत्नी, खुरन्यासैः पवित्राः पांशवः यस्य तम्। "रेणुर्द्वयोः स्त्रियां धूलिः पांशुर्ना न द्वयोरजः"। इत्यमरः। तस्याः धेनोः मार्गम्। स्मृतिः मन्वादिवाक्यं श्रुतेः वेदवाक्यस्य अर्थम् अभिधेयम् इव। अन्वगच्छत् अनुसृतवती। यथा स्मृतिः श्रुतिक्षुण्णमेवार्थमनुसरति तथा सापि गोखुरक्षुण्णमेव मार्गमनुससार इत्यर्थः। धर्मपत्नीत्यत्र अश्वघासादिवत् तादर्थ्ये षष्ठीसमासः प्रकृतिविकाराभावात्। पांशुलपथप्रवृत्तावप्यपांशुलानामिति विरोधालङ्कारो ध्वन्यते॥ २॥

निवर्त्त्येति। दयालुः कारुणिकः। "स्याद् दयालुः कारुणिकः" इत्यमरः। "स्पृहिगृहि—" इत्यादिना आलुच्प्रत्ययः। यशोभिः सुरभिः मनोज्ञः। "सुरभिः स्यान्मनोज्ञेऽपि" इति विश्वः। राजा तां दयितां निवर्त्त्य सौरभेयीं कामधेनुसुतां

व्रताय तेनानुचरेण धेनो-
र्न्यषेधि शेषोऽप्यनुयायिवर्गः ।
न चान्यतस्तस्य शरीररक्षा
स्ववीर्य्यगुप्ता हि मनोः प्रसूतिः ॥ ४ ॥
आस्वादवद्भिः कवलैस्तृणानां
कण्डूयनैर्दंशनिवारणैश्च ।

नन्दिनीम्। धरन्तीति धराः। पचाद्यच्। पयसां धराः पयोधराः स्तनाः। "स्त्रीस्तनाब्दौ पयोधरौ" इत्यमरः। अपयोधराः पयोधराः सम्पद्यमानाः पयोधरीभूताः। अभूततद्भावे च्विः। "कुगतिप्रादयः" इति समासः। पयोधरीभूताः चत्वारः समुद्राः यस्याः ताम्। "अनेकमन्यपदार्थे" इत्यनेकपदार्थग्रहणसामर्थ्यात् त्रिपदो बहुव्रीहिः। गोरूपधराम् उर्वीम् इव जुगोप ररक्ष, भूरक्षणप्रयत्नेनेव ररक्ष इति भावः। धेनुपक्षे पयसा दुग्धेन अधरीभूताः चत्वारः समुद्राः यस्याः सा, तयोक्तां दुग्धतिरस्कृतसागराम् इत्यर्थः॥ ३ ॥

व्रतायेति। व्रताय धेनोः अनुचरेण, न तु जीवनाय इति भावः। तेन दिलीपेन शेषः अवशिष्टोऽपि अनुयायिवर्गः अनुचरवर्गः न्यषेधि निवर्त्तितः। शेषत्वं सुदक्षिणापेक्षया। कथं तर्हि आत्मरक्षणम्? अत आह—न चेति। तस्य दिलीपस्य शरीररक्षा च अन्यतः पुरुषान्तरात् न। कुतः? हि यस्मात् कारणात् मनोः; प्रसूयते इति प्रसूतिः सन्ततिः स्ववीर्य्यगुप्ता स्ववीर्य्येणैव रक्षिता। न हि स्वपरनिर्वाहकस्य परापेक्षा इति भावः॥ ४ ॥

आस्वादवद्भिरिति। सम्राट् मण्डलेश्वरः। "येनेष्टं राज

अव्याहतैः स्वैरगतैः स तस्याः
सम्राट् समाराधनतत्परोऽभूत् ॥ ५ ॥
स्थितः स्थितामुच्चलितः प्रयातां
निषेदुषीमासनबन्धधीरः।
जलाभिलाषी जलमाददानां
छायेव तां भूपतिरन्वगच्छत् ॥ ६ ॥
स न्यस्तचिह्नामपि राजलक्ष्मीं
तेजोविशेषानुमितां दधानः।

…वेन मण्डलस्येश्वरश्च यः। शास्ति यश्चाज्ञया राज्ञः स सम्राट्—" ॥ इत्यमरः। सः राजा, आस्वादवद्भिः रसवद्भिः, …ादयुक्तैः इत्यर्थः। तृणानां कवलैः ग्रासैः। "ग्रासस्तु कव…ार्थकः" इत्यमरः। कण्डूयनैः खर्जनैः, दंशानां वनमक्षिकाणां निवारणैः। "दंशस्तु वनमक्षिका" इत्यमरः। अव्याहतैः अप्रतिहतैः स्वैरगतैः स्वच्छन्दगमनैश्च; तस्याः धेन्वाः समारा…धनतत्परः शुश्रूषासक्तः अभूत्। तदेव परं प्रधानं यस्य इति …तत्परः। "तत्परे प्रसितासक्तौ" इत्यमरः ॥ ५ ॥

स्थित इति। भूपतिः तां गां स्थितां सतीं स्थितः सन्, …स्थितिः ऊर्द्धावस्थानम्। प्रयातां प्रस्थिताम् उच्चलितः प्रस्थितः, निषेदुषीं निषण्णाम्, उपविष्टाम् इत्यर्थः। "भाषायां सदवसश्रुवः" इति क्वसुप्रत्ययः। "उगितश्च" इति ङीप्। आसनबन्धे उप…वेशने धीरः स्थितः, उपविष्टः सन् इत्यर्थः। जलम् आददानां पिबन्तीं जलाभिलाषी, पिबन् इत्यर्थः, । इत्थं छाया इव अन्व…गच्छत् अनुसृतवान् ॥ ६ ॥

आसीदनाविष्कृतदानराजि-
रन्तर्मदावस्थ इव द्विपेन्द्रः॥ ७॥
लताप्रतानोद्ग्रथितैः स केशै-
रधिज्यधन्वा विचचार दावम्।
रक्षापदेशान्मुनिहोमधेनो-
र्वन्यान् विनेष्यन्निव दुष्टसत्त्वान्॥ ८॥

स इति। न्यस्तानि परिहृतानि चिह्नानि छत्रचामरादी
कस्याः तां तथाभूताम् अपि, तेजोविशेषेण प्रभावातिशं
अनुमितां; सर्वथा राजा एवायं भवेत् इति ऊहितां राजल
दधानः सः राजा अनाविष्कृतदानराजिः बहिरप्रकटितमदरे
अन्तर्गता मदावस्था यस्य सः अन्तर्मदावस्थः, तथाभूतः द्विपे
इव, आसीत्॥ ७॥

लतेति। लतानां वल्लीनां प्रतानैः कुटिलतन्तुभिः उ
ग्रथिताः उन्नमय्य ग्रथिताः ये केशाः तैः उपलक्षितः। "इत्थं भू
लक्षणे" इति तृतीया। सः राजा, अधिज्यम् आरोपितमौर्व
धनुः यस्य सः अधिज्यधन्वा सन्। "धनुषश्च" इत्यनङादेश
मुनिहोमधेनोः रक्षापदेशात् रक्षणव्याजात्, वन्यान् वने भव
दुष्टसत्त्वान् दुष्टजन्तून्। "द्रव्यासु व्यवसायेषु सत्त्वमस्त्री
जन्तुषु"। इत्यमरः। विनेष्यन् शिक्षयिष्यन् इव, दावं वना
"वने च वनवह्नौ च दवो दाव इहेष्यते"। इति यादव
विचचार, वने चचार इत्यर्थः। "देशकालाध्वगन्तव्याः क
संज्ञा ह्यकर्मणाम्" इति दावस्य कर्मत्वम्॥ ८॥

विसृष्टपार्श्वानुचरस्य तस्य
पार्श्वद्रुमाः पाशभृता समस्य ।
उदीरयामासुरिवोन्मदाना
मालोकशब्दं वयसां विरावैः ॥ ९ ॥

मरुत्प्रयुक्ताश्च मरुत्सखाभं
तमर्च्यमारादभिवर्त्तमानम् ।
अवाकिरन् बाललताः प्रसूनै-
राचारलाजैरिव पौरकन्याः ॥१०॥

"विसृष्ट—" इत्यादिभिः षड्भिः श्लोकैस्तस्य महामहिम-
त्वात् द्रुमादयोऽपि राजोपचारं चक्रुरित्याह,—

विसृष्टेति । विसृष्टाः पार्श्वानुचराः पार्श्ववर्त्तिनो जनाः
न तस्य, पाशभृता वरुणेन समस्य तुल्यस्य । "प्रचेता वरुणः
शी" इत्यमरः । अनुभावोऽनेन सूचितः । तस्य राज्ञः पार्श्वयोः
माः, उन्मदानाम् उत्कटमदानां वयसां खगानाम् । "खगवाल्या-
र्नोवयः" इत्यमरः । विरावैः शब्दैः ; आलोकस्य शब्दं वाच-
म् आलोकय इति शब्दं, जयशब्दम् इत्यर्थः । "आलोको
यशब्दः स्यात्" इति विश्वः । उदीरयामासुरिव, अवदन् इव ।
त्प्रेक्षा ॥ ९ ॥

मरुदिति । मरुत्प्रयुक्ताः वायुना प्रेरिताः बाललताः च आरात्
मीपे अभिवर्त्तमानम् । "आरात् दूरसमीपयोः" इत्यमरः ।
रुतः वायोः सखा मरुत्सखः अग्निः, सः इव आभातीति
रुत्सखाभम् । "आतश्चोपसर्गे" इति कप्रत्ययः । अर्च्यं पूज्यं
दिलीपं प्रसूनैः पुष्पैः, पौरकन्याः पौराश्च ताः कन्याः आचा-

धनुर्भृतोऽप्यस्य दयार्द्रभाव-
माख्यातमन्तःकरणैर्विशङ्कैः ।
विलोकयन्त्यो वपुरापुरक्ष्णां
प्रकामविस्तारफलं हरिण्यः ॥११॥

स कीचकैर्मारुतपूर्णरन्ध्रैः
कूजद्भिरापादितवंशकृत्यम् ।
शुश्राव कुञ्जेषु यशः स्वमुच्चै-
रुद्गीयमानं वनदेवताभिः ॥१२॥

सर्थैः लाजैः आचारलाजैः इव, अवाकिरन्, तस्योपरि निचि
वत्यः इत्यर्थः । सखा हि सखायमागतमुपचरति इति भावः ॥१०

धनुर्भृत इति । धनुर्भृतोऽपि अस्य राज्ञः, एतेन भयसम्भावना
दर्शिता, तथापि विशङ्कैः निर्भीकैः अन्तःकरणैः कर्तृभिः दय
कृपारसेन आर्द्रः भावः अभिप्रायः यस्य तत् दयार्द्रभावं त
आख्यातं, दयार्द्रभावमेतदित्याख्यातम् इत्यर्थः । "भावः सत्त
स्वभावाभिप्रायचेष्टात्मजन्मसु" । इत्यमरः । तथाविधं वपु
विलोकयन्त्यः हरिण्यः अक्ष्णां प्रकामविस्तारस्य अत्यन्तविशाल
तायाः फलम् आपुः । "विमलं कलुषीभवच्च चेतः कथयत्ये
हितैषिणं रिपुं च" इति न्यायेन स्वान्तःकरणवृत्तिप्रामाण्यादे
विस्रब्धं ददृशुः इत्यर्थः ॥ ११ ॥

स इति । सः दिलीपः मारुतपूर्णरन्ध्रैः, अत एव कूजद्भि
स्वनद्भिः, कीचकैः वेणुविशेषैः । "वेणवः कीचकास्ते स्युः
स्वनन्त्यनिलोद्धताः" । इत्यमरः । वंशः शुषिरवाद्यविशेषः
"वंशादिकं तु शुषिरम्" इत्यमरः । आपादितं सम्पादित

पृक्तस्तुषारैर्गिरिनिर्झराणा-
मनोकहाकम्पितपुष्पगन्धी ।
तमातपक्लान्तमनातपत्र-
माचारपूतं पवनः सिषेवे ॥१३॥

शशाम वृष्ट्यापि विना दवाग्नि-
रासीद्विशेषा फलपुष्पवृद्धिः ।
ऊनं न सत्त्वेष्वधिको बबाधे
तस्मिन् वनं गोप्तरि गाहमाने ॥१४॥

वंशस्य कृत्यं कार्य्यं यस्मिन् कर्मणि तत् तथा ; कुञ्जेषु लता-गृहेषु । "निकुञ्जकुञ्जौ वा क्लीवे लतादिपिहितोदरे" इत्यमरः । वनदेवताभिः उद्गीयमानम् उच्चैः गीयमानं स्वं यशः शुश्राव श्रुतवान् ॥ १२ ॥

पृक्त इति । गिरिषु निर्झराणां वारिप्रवाहाणाम् । "वारि-प्रवाहो निर्झरो झरः" इत्यमरः । तुषारैः सीकरैः । "तुषारौ हिमसीकरौ" इति शाश्वतः । पृक्तः सम्पृक्तः अनोकहानां वृक्षा-णाम् आकम्पितानि ईषत्कम्पितानि पुष्पाणि तेषां यः गन्धः सः अस्यास्तीति आकम्पितपुष्पगन्धी, ईषत्कम्पितपुष्पगन्धवान्, एवं शीतः मन्दः सुरभिः पवनः वायुः अनातपत्रं व्रतार्थं परित्यक्त-छत्रम् ; अतएव आतपक्लान्तम् आचारेण पूतं शुद्धं तं नृपं सिषेवे । आचारपूतत्वात् स राजा जगत्पावनस्यापि सेव्यः आसीत् इति भावः ॥ १३ ॥

शशामेति । गोप्तरि तस्मिन् राज्ञि वनं गाहमाने प्रविशति सति वृष्ट्या विना अपि, दवाग्निः वनाग्निः । "दवदावौ वना-

सञ्चारपूतानि दिगन्तराणि
कृत्वा दिनान्ते निलयाय गन्तुम् ।
प्रचक्रमे पल्लवरागताम्रा
प्रभा पतङ्गस्य मुनेश्च धेनुः ॥१५॥

तां देवतापित्रतिथिक्रियार्था-
मन्वग्ययौ मध्यमलोकपालः ।
बभौ च सा तेन सतां मतेन
श्रद्धेव साक्षाद्विधिनोपपन्ना ॥१६॥

मले" इति हैमः । शशाम ; फलानां पुष्पाणाञ्च वृद्धिः, विशेषवती इति विशेषा, अतिशयिता आसीत् । कर्मार्थे घञ्प्रत्ययः । सत्त्वेषु जन्तुषु मध्ये । "यतश्च निर्द्धारणम्" इति सप्तमी । अधिकः प्रबलः व्याघ्रादिः जनं दुर्बलं हरिणादिकं न बबाधे ॥ १४ ॥

सञ्चारपूतानीति । पल्लवस्य रागः वर्णः पल्लवरागः । "रागोऽनुरक्तौ मात्सर्ये क्लेशादौ लोहितादिषु"। इति शाश्वतः । सः इव ताम्रा पल्लवरागताम्रा, पतङ्गस्य सूर्य्यस्य प्रभा कान्तिः । "पतङ्गः पक्षिसूर्य्ययोः" इति शाश्वतः । मुनेः धेनुश्च, दिगन्तराणि दिशाम् अवकाशान् । "अन्तरमवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्ये" इत्यमरः । सञ्चारेण पूतानि शुद्धानि कृत्वा दिनान्ते सायंकाले निलयाय अस्तमयाय । धेनुपक्षे आलयाय च, गन्तुं प्रचक्रमे ॥ १५ ॥

तामिति । मध्यमलोकपालः भूपालः, देवतापित्रतिथीनां क्रियाः यागश्राद्धदानानि, ताः एव अर्थः प्रयोजनं यस्याः तां धेनुम् अन्वक् अनुपदं ययौ । "अन्वगन्वक्षमनुगेऽनुपदं क्लीब-

स पल्वलोत्तीर्णवराहयूथा-
न्यावासवृक्षोन्मुखबर्हिणानि।
ययौ मृगाध्यासितशाद्वलानि
श्यामायमानानि वनानि पश्यन् ॥१७॥
आपीनभारोद्वहनप्रयत्नाद्-
गृष्टिर्गुरुत्वाद्वपुषो नरेन्द्रः।

मव्ययम्" इत्यमरः। सतां मतेन सद्भिः मान्येन। "गतिबुद्धि—" इत्यादिना वर्त्तमाने क्तः। "क्तस्य च वर्त्तमाने" इति षष्ठी। तेन राज्ञा उपपन्ना युक्ता सा धेनुः, सतां मतेन विधिना अनुष्ठानेन उपपन्ना युक्ता साक्षात् प्रत्यक्षा श्रद्धा आस्तिक्यबुद्धिः इव बभौ च ॥ १६ ॥

स इति। सः राजा, पल्वलेभ्यः अल्पजलाशयेभ्यः उत्तीर्णानि निर्गतानि वराहाणां यूथानि कुलानि येषु तानि, बर्हाणि एषां सन्तीति बर्हिणाः मयूराः। "मयूरो बर्हिणो बर्ही" इत्यमरः। 'फलबर्हाभ्यामिनच्प्रत्ययो वक्तव्यः'। आवासवृक्षाणाम् उन्मुखाः बर्हिणाः येषु तानि, श्यामायमानानि वराहबर्हिणादिमलिनिम्ना अश्यामानि, श्यामानि भवन्तीति श्यामायमानानि। "लोहितादिडाज्भ्यः क्यष्" इति क्यष्प्रत्ययः। "वा क्यषः" इत्यात्मनेपदे शानच्। मृगैः अध्यासिताः अधिष्ठिताः शाद्वलाः येषु तानि। शादाः शष्पाणि, एषु देशेषु सन्तीति शाद्वलाः शष्पश्यामदेशाः। "शाद्वलः शादहरिते" इत्यमरः। "शादः कर्दमशष्पयोः" इति विश्वः। "नड़शादाड्ड्वलच्" इति ड्वलच्प्रत्ययः। वनानि पश्यन् ययौ ॥ १७ ॥

उभावलञ्चक्रतुरञ्चिताभ्यां
तपोवनावृत्तिपथं गताभ्याम् ॥१८॥
वशिष्ठधेनोरनुयायिनं त-
मावर्त्तमानं वनिता वनान्तात् ।
पपौ निमेषालसपक्ष्मपङ्क्ति-
रुपोषिताभ्यामिव लोचनाभ्याम् ॥१९॥
पुरस्कृता वर्त्मनि पार्थिवेन
प्रत्युद्गता पार्थिवधर्मपत्न्या ।

आपीनेति गृष्टिः सकृत् प्रसूता गौः । "गृष्टिः सकृत्प्रसूता गौः" इति हलायुधः । नरेन्द्रश्च उभौ यथाक्रमम् आपीनम् ऊधः । "ऊधस्तु क्लीवमापीनम्" इत्यमरः । आपीनस्य भारोद्वहने प्रयत्नात् प्रयासात्, वपुषः गुरुत्वात् आधिक्याच्च अञ्चिताभ्यां चारुभ्यां गताभ्यां गमनाभ्यां, तपोवनात् आवृत्तेः पन्थाः तं तपोवनावृत्तिपथम् । "ऋक्पूर्—" इत्यादिना समासान्तः अप्रत्ययः । अलञ्चक्रतुः भूषितवन्तौ ॥ १८ ॥

वशिष्ठेति । वशिष्ठधेनोः अनुयायिनम् अनुचरं वनान्तात् आवर्त्तमानं प्रत्यागतं तं दिलीपं वनिता सुदक्षिणा निमिषेषु, अलसा मन्दा, पक्ष्मणां पङ्क्तिः यस्याः सा, निर्निमेषा सती इत्यर्थः; लोचनाभ्यां करणाभ्याम् उपोषिताभ्याम् इव, उपवासः भोजननिवृत्तिः तद्वद्भ्याम् इव । वसतेः कर्त्तरि क्तः । पपौ । यथा उपोषितः अतितृष्णया जलमधिकं पिबति तद्वदतितृष्णया अधिकं व्यलोकयत् इत्यर्थः ॥ १९ ॥

पुरस्कृतेति । वर्त्मनि पार्थिवेन पृथिव्याः ईश्वरेण । "तस्ये-

तदन्तरे सा विरराज धेनु-
र्दिनक्षपामध्यगतेव सन्ध्या ॥२०॥
प्रदक्षिणीकृत्य पयस्विनीं तां
सुदक्षिणा साक्षतपात्रहस्ता।
प्रणम्य चानर्च विशालमस्याः
शृङ्गान्तरं द्वारमिवार्थसिद्धेः ॥२१॥
वत्सोत्सुकापि स्तिमिता सपर्य्यां
प्रत्यग्रहीत् सेति ननन्दतुस्तौ।
भक्त्योपपन्नेषु हि तद्विधानां
प्रसादचिह्नानि पुरःफलानि ॥२२॥

ख्यः” इत्यच् प्रत्ययः। पुरस्कृता अग्रतः कृता, धर्मस्य पत्नी धर्मपत्नी धर्मार्थपत्नी इत्यर्थः। अश्वघासादिवत् तादर्थ्ये षष्ठी-समासः। पार्थिवस्य धर्मपत्न्या प्रत्युद्गता सा धेनुः तदन्तरे तयोः दम्पत्योः मध्ये, दिनक्षपयोः दिनरात्र्योः मध्यगता सन्ध्या इव विरराज ॥२०॥

प्रदक्षिणीकृत्येति। अक्षतानां पात्रेण सह वर्त्तेते इति साक्षतपात्रौ हस्तौ यस्याः सा सुदक्षिणा पयस्विनीं प्रशस्तक्षीरां तां धेनुं प्रदक्षिणीकृत्य प्रणम्य च तस्याः धेन्वाः विशालं शृङ्गा-न्तरं शृङ्गमध्यम् अर्थसिद्धेः कार्य्यसिद्धेः द्वारं प्रवेशमार्गम् इव आनर्च अर्चयामास। अर्चतेर्भौवादिकात् लिट् ॥ २१ ॥

वत्सोत्सुकेति। सा धेनुः वत्सोत्सुकापि वत्से उत्कण्ठितापि स्तिमिता निश्चला सती सपर्य्यां पूजां प्रत्यग्रहीत् इति हेतोः

गुरोः सदारस्य निपीड्य पादौ
समाप्य साम्ध्यञ्च विधिं दिलीपः।
दोहावसाने पुनरेव दोग्ध्रीं
भेजे भुजोच्छिन्नरिपुर्निषसाम् ॥२३॥

तामन्तिकन्यस्तबलिप्रदीपा-
मन्वास्य गोप्ता गृहिणीसहायः।
क्रमेण सुप्तामनु संविवेश
सुप्तोत्थितां प्रातरनूदतिष्ठत् ॥२४॥

तौ दम्पती ननन्दतुः। पूजास्वीकारस्य आनन्दहेतुत्वमाह,— भक्त्येति। पूज्येषु अनुरागः भक्तिः तया उपपन्नेषु युक्तेषु विषये तद्विधानां तस्याः धेन्वाः विधा इव विधा प्रकारः येषां तेषां महताम् इत्यर्थः; प्रसादस्य चिह्नानि लिङ्गानि, पूजास्वीकारादीनि, पुरःफलानि पुरोगतानि प्रत्यासन्नानि फलानि येषां तानि हि। अविलम्बितफलसूचकलिङ्गदर्शनादानन्दो युज्यते इत्यर्थः ॥२२॥

गुरोरिति। भुजोच्छिन्नरिपुः दिलीपः सदारस्य दारैः अरुन्धत्या सह वर्त्तमानस्य गुरोः उभयोरपि इत्यर्थः। "भार्य्या जायाथ पुं भूम्नि दाराः" इत्यमरः। पादौ निपीड्य अभिवन्द्य साम्ध्यं सन्ध्यायां विहितं विधिम् अनुष्ठानं च समाप्य दोहावसाने निषसाम् आसीनां दोग्ध्रीं दोहनशीलाम्। "तृन्" इति तृन्प्रत्ययः। धेनुम् एव पुनः भेजे सेवितवान्। दोग्ध्रीमिति निरुपपदप्रयोगात् कामधेनुत्वं गम्यते ॥२३॥

तामिति। गोप्ता रक्षकः गृहिणीसहायः पत्नीद्वितीयः सन् उभावपि इत्यर्थः; अन्तिके न्यस्ताः बलयः प्रदीपाश्च यस्याः

इत्थं व्रतं धारयतः प्रजार्थं
समं महिष्या महनीयकीर्त्तेः ।
सप्त व्यतीयुस्त्रिगुणानि तस्य
दिनानि दीनोद्धरणोचितस्य ॥२५॥

अन्येद्युरात्मानुचरस्य भावं
जिज्ञासमाना मुनिहोमधेनुः ।
गङ्गाप्रपातान्तविरूढशष्पं
गौरीगुरोर्गह्वरमाविवेश ॥२६॥

ां तयोर्ता, तां निषसां धेनुम् अन्वास्य अनूपविश्य क्रमेण
साम् अनु अनन्तरं संविवेश सुष्वाप, प्रातः सुप्तोत्थिताम् अनु
दतिष्ठत् उत्थितवान् । अत्र अनुशब्देन धेनुराजव्यापारयोः
ौर्वापर्य्यमुच्यते, क्रमशब्देन धेनुव्यापाराणामेव इति अपौन-
क्त्यम् । "कर्मप्रवचनीययुक्ते—" इति द्वितीया ॥२४॥

इत्थमिति । इत्थम् अनेन प्रकारेण प्रजार्थं सन्तानाय
हिष्या समम् अभिषिक्तपत्न्या सह । "कृताभिषेका महिषी"
त्यमरः । व्रतं धारयतः, महनीया पूज्या कीर्त्तिः यस्य तस्य,
ीनानाम् उद्धरणं दैन्यविमोचनं ; तत्र उचितस्य परिचितस्य
स्य नृपस्य, त्रयः गुणाः आवृत्तयः येषां तानि त्रिगुणानि
त्रावृत्तानि सप्त दिनानि एकविंशतिदिनानि व्यतीयुः ॥२५॥

अन्येद्युरिति । अन्येद्युः अन्यस्मिन् दिने द्वाविंशे दिने ।
द्यः परुत्परारि—" इत्यादिना निपातनात् अव्ययम् ।
अद्यात्राह्नाथ पूर्वेऽह्नीत्यादौ पूर्वोत्तरापरात् । तथाधरान्यान्य-
तरात् पूर्वेद्युरादयः" ॥ इत्यमरः । मुनिहोमधेनुः, आत्मानु-

सा दुष्प्रधर्षा मनसापि हिंस्रै-
रित्यद्रिशोभाप्रहितेक्षणेन।
अलक्षिताभ्युत्पतनो नृपेण
प्रसह्य सिंहः किल तां चकर्ष ॥२७॥

तदीयमाक्रन्दितमार्त्तसाधो-
र्गुहानिबद्धप्रतिशब्ददीर्घम्।
रश्मिष्विवादाय नगेन्द्रसक्तां
निवर्त्तयामास नृपस्य दृष्टिम् ॥२८॥

चरस्य भावम् अभिप्रायं दृढ़भक्तित्वम्। "भावोऽभिप्राय आशयः" इति यादवः। जिज्ञासमाना ज्ञातुमिच्छन्ती। "ज्ञाश्रुस्मृदृशां सनः" इत्यात्मनेपदे शानच्। प्रपतति अस्मिन् इति प्रपातः पतनप्रदेशः, गङ्गायाः प्रपातः तस्य अन्ते समीपे विरूढ़ानि जातानि शष्पाणि बालतृणानि यस्मिन् तत्। "शष्पं बालतृ घासः" इत्यमरः। गौरीगुरोः पार्वतीपितुः हिमालयस्य गह्व गुहाम् आविवेश ॥ २६ ॥

सेति। सा धेनुः हिंस्रैः व्याघ्रादिभिः मनसा अपि दुष्प्रधर्ष इति हेतोः अद्रिशोभायां प्रहितेक्षणेन दत्तदृष्टिना नृपेण अल क्षितम् अभ्युत्पतनम् आभिमुख्येन उत्पतनं यस्य सः सिंहः त धेनुं प्रसह्य हठात्। "प्रसह्य तु हठार्थकम्" इत्यमरः। चक किलेत्यलीके ॥ २७ ॥

तदीयमिति। गुहानिबद्धेन प्रतिशब्देन प्रतिध्वनिना दीर्घं तस्याः इदं तदीयम्, आक्रन्दितम् आर्त्तघोषणम्, आर्त्तेषु आपन्न साधोः हितकारिणः नृपस्य नगेन्द्रसक्तां दृष्टिं, रश्मिषु प्रग्रहेषु

स पाटलायां गवि तस्थिवांसं
धनुर्धरः केशरिणं ददर्श ।
अधित्यकायामिव धातुमय्यां
लोध्रद्रुमं सानुमतः प्रफुल्लम् ॥२९॥

ततो मृगेन्द्रस्य मृगेन्द्रगामी
बधाय बध्यस्य शरं शरण्यः ।
जाताभिषङ्गो नृपतिर्निषङ्गा-
दुद्धर्तुमैच्छत् प्रसभोद्धृतारिः ॥३०॥

किरणप्रग्रहौ रश्मी" इत्यमरः । आदाय इव गृहीत्वा इव, नवर्त्तयामास ॥ २८ ॥

स इति । धनुर्धरः सः नृपः पाटलायां रक्तवर्णायां गवि स्थिवांसं स्थितम् । "क्वसुश्च" इति क्वसुप्रत्ययः । केशरिणं सिंहं, ानुमतः अद्रेः, धातोः गैरिकस्य विकारः धातुमयी, तस्याम् ाधित्यकायाम् ऊर्द्धभूमौ । "उपत्यकाद्रेरासन्ना भूमिरूर्द्धमधि- ाका" इत्यमरः । "उपाधिभ्यां त्यकन्नासन्नारूढ़योः" इति ाकन्प्रत्ययः । प्रफुल्लः विकसितः तम् । "फुल्ल विकसने" इति ातोः पचाद्यच् । "प्रफुल्तम्" इति तकारपाठे "ञिफला ाशरणे" इति धातोः कर्त्तरि क्तः । "उत्परस्यातः" इत्युकारा- ाः । लोध्राख्यं द्रुमम् इव, ददर्श ॥ २९ ॥

तत इति । ततः सिंहदर्शनानन्तरं मृगेन्द्रगामी सिंहगामी । रणं रक्षणम् । "शरणं गृहरक्षित्रोः" इत्यमरः । "शरणं धबे गृहे" इति यादवः । शरणे साधुः शरण्यः । "तत्र साधुः" ति यप्रत्ययः । प्रसभेन बलात्कारेण उद्धृताः अरयः येन सः

वामेतरस्तस्य करः प्रहर्तु-
र्नखप्रभाभूषितकङ्कपत्रे ।
सक्ताङ्गुलिः सायकपुङ्ख एव
चित्रार्पितारम्भ इवावतस्थे ॥३१॥

बाहुप्रतिष्टम्भविवृद्धमन्यु-
रभ्यर्णमागस्कृतमस्पृशद्भिः ।
राजा स्वतेजोभिरदह्यतान्त-
र्भोगीव मन्त्रौषधिरुद्धवीर्य्यः ॥३२॥

नृपतिः राजा जाताभिषङ्गः जातपराभवः सन् । "अभिषङ्गः परा-
भवः" इत्यमरः । बध्यस्य बधार्हस्य । "दण्डादिभ्यो यत्" इति
यत्प्रत्ययः । मृगेन्द्रस्य बधाय निषङ्गात् तूणीरात् । "तूणोपास
तूणीरनिषङ्गा इषुधिर्द्वयोः" इत्यमरः । शरम् उद्धर्त्तुम् ऐच्छत् ॥३०॥

वामेति । प्रहर्त्तुः तस्य वामेतरः दक्षिणः करः । नखप्रभाभि
भूषितानि विच्छुरितानि कङ्कस्य पक्षिविशेषस्य पत्राणि यस्
तस्मिन् । "कङ्कः पक्षिविशेषे स्यात् गुप्ताकारे युधिष्ठिरे" । इति
विश्वः । "कङ्कस्तु कर्कटः" इति यादवः । सायकस्य पुङ्खे ए
कर्त्तर्य्याख्ये मूलप्रदेशे । "कर्त्तरी पुङ्खे" इति यादवः । सक्ता
ङ्गुलिः सन् । चित्रार्पितारम्भः चित्रलिखितशरोद्धरणोद्यो
इव, अवतस्थे ॥ ३१ ॥

बाह्विति । बाह्वोः प्रतिष्टम्भेन प्रतिबन्धेन । "प्रतिबन्ध
प्रतिष्टम्भः" इत्यमरः । विवृद्धमन्युः प्रवृद्धरोषः राजा ; मन्त्रौ
षधिभ्यां रुद्धवीर्य्यः प्रतिबद्धशक्तिः भोगी सर्पः इव । "भोगी
राजभुजङ्गयोः" इति शाश्वतः । अभ्यर्णम् अन्तिकम् । "उप

तमार्य्यगृह्यं निगृहीतधेनु-
र्मनुष्यवाचा मनुवंशकेतुम् ।
विस्माययन् विस्मितमात्मवृत्तौ
सिंहोरुसत्त्वं निजगाद सिंहः ॥३३॥
अलं महीपाल ! तव श्रमेण
प्रयुक्तमप्यस्त्रमितो वृथा स्यात् ।

ठान्तिकाभ्यर्णाभ्यग्रा अप्यभितोऽव्ययम्" इत्यमरः । आम-
तम् अपराधकारिणम् अस्त्रवद्भिः स्वतेजोभिः अन्तः अदह्यत ।
धिक्षेपाद्यसहनं तेजः प्राणात्ययेष्वपि" इति यादवः ॥३२॥

तमिति । निगृहीता पीड़िता धेनुः येन सः सिंहः,
र्य्याणां सतां गृह्यं पक्ष्यम्। पदास्वैरिवाह्यापक्ष्येषु च इति क्यप् ।
वंशस्य केतुं चिह्नं केतुवत् व्यावर्त्तकम् । सिंहः इव उरुसत्त्वः
ावलः तम् । आत्मनः वृत्तौ बाहुस्तम्भरूपे व्यापारे अभूत-
त्वात् विस्मितम्। कर्त्तरि क्तः। तं दिलीपं मनुष्यवाचा
येन; पुनः विस्माययन् विस्मयम् आश्चर्य्यं प्रापयन् निजगाद ।
ङ् ईषद्धसने" इति धातोर्णिचि वृद्धौ आयादेशे शतृप्रत्यये च
। विस्माययन्निति रूपं सिद्धम् । "विस्मापयन्" इति पाठे
ममात्रं वक्तव्यं, तच्च चिन्त्यम् । "नित्यं स्मयतेः" इति
भयविवक्षायामेवेति "भीस्म्योर्हेतुभय" इत्यात्मनेपदे विस्मा-
मानः इति स्यात् । तस्मात् मनुष्यवाचा विस्माययन्निति
सिद्धं ; करणविवक्षायां न कश्चित् दोषः ॥ ३३ ॥

अलमिति । हे महीपाल ! तव श्रमेण अलम्, साध्याभा-
[ श्रमो न कर्त्तव्यः इत्यर्थः । अत्र गम्यमानसाधनक्रिया-

न पादपोन्मूलनशक्ति रंहः
शिलोच्चये मूर्च्छति मारुतस्य ॥३४॥

कैलासगौरं वृषमारुरुक्षोः
पादार्पणानुग्रहपूतपृष्ठम् ।
अवेहि मां किङ्करमष्टमूर्त्तेः
कुम्भोदरं नाम निकुम्भमित्रम् ॥३५॥

अमुं पुरः पश्यसि देवदारुं
पुत्रीकृतोऽसौ वृषभध्वजेन ।

पेक्षया श्रमस्य करणत्वात् तृतीया। उक्तञ्च "न्यासोद्यो "न केवलं श्रूयमाणैव क्रिया निमित्तं करणभावस्य, अपि तु गम्यमानापि" इति। "अलं भूषणपर्य्याप्तिशक्तिवारणवाचकम् इत्यमरः। इतः अस्मिन् मयि। सार्वविभक्तिकस्तसिः। ... क्तम् अपि अस्त्रं वृथा स्यात्। तथाहि, पादपोन्मूलने शक्ति यस्य तत् तथोक्तं मारुतस्य रंहः वेगः शिलोच्चये पर्वते मूर्च्छति न प्रसरति ॥ ३४ ॥

कैलासेति। कैलासः इव गौरः शुभ्रः तम्। "चामीकर... शुभ्रश्च गौरमाहुर्मनीषिणः" इति शाश्वतः। वृषं वृषभम् आ... रुक्षोः आरोढुम् इच्छोः, स्वस्योपरि पदं निक्षिप्य वृषमारो... इत्यर्थः। अष्टौ मूर्त्तयः यस्य सः तस्य अष्टमूर्त्तेः शिवस्य पादार्... पादन्यासः तत् एव अनुग्रहः प्रसादः तेन पूतं पृष्ठं यस्य ... तथोक्तं निकुम्भमित्रं कुम्भोदरं नाम किङ्करं माम् अवे... विद्धि। "पृथिवी सलिलं तेजो वायुराकाशमेव च। सूर्य्याचन्... मसौ सोमयाजी चेत्यष्टमूर्त्तयः" ॥ इति यादवः ॥ ३५ ॥

यो हेमकुम्भस्तननिःसृतानां
स्कन्दस्य मातुः पयसां रसज्ञः ॥३६॥
कण्डूयमानेन कटं कदाचिद्-
वन्यद्विपेनोन्मथिता त्वगस्य।
अथैनमद्रेस्तनया शुशोच
सेनान्यमालीढमिवासुरास्त्रैः ॥३७॥
तदाप्रभृत्येव वनद्विपानां
त्रासार्थमस्मिन्नहमद्रिकुक्षौ।

अमुमिति। पुरः अग्रतः अमुं देवदारुं पश्यसि? इति ...कुः। असौ देवदारुः, वृषभः ध्वजः यस्य सः, तेन शिवेन ...कृतः पुत्त्रत्वेन स्वीकृतः। अभूततद्भावे च्विः। यः देवदारुः ...न्दस्य मातुः गौर्य्याः हेम्नः कुम्भः एव स्तनः, तस्मात् निःसृ...नां पयसाम् अम्बूनां रसज्ञः स्वादज्ञः। स्कन्दपक्षे हेमकुम्भः ...व स्तनः इति विग्रहः। पयसां क्षीराणाम्। "पयः क्षीरं पयोऽम्बु च" इत्यमरः। स्कन्दसमानप्रेमास्पदम् इति भावः॥ ३६॥

कण्डूयमानेनेति। कदाचित् कटं कपोलं कण्डूयमानेन ...र्षता। "कण्ड्वादिभ्यो यक्" इति यक्, ततः शानच्। वन्य...द्विपेन अस्य देवदारोः त्वक् उन्मथिता। अथ अद्रेः तनया ...री, असुरास्त्रैः आलीढं क्षतं, सेनां नयतीति सेनानीः स्कन्दः। "पार्वतीनन्दनः स्कन्दः सेनानीः" इत्यमरः। "सत्सूद्विष—" इत्यादिना क्विप्। तम् इव, एनं देवदारुं शुशोच॥३७॥

तदेति। तदा तत्कालः प्रभृतिः आदिः यस्मिन् कर्म्मणि ...त् तथा तत्कालः प्रभृति एव वनद्विपानां त्रासार्थं भयार्थं शूल-

व्यापारितः शूलभृता विधाय
सिंहत्वमङ्कागतसत्त्ववृत्ति ॥३८॥

तस्यालमेषा क्षुधितस्य तृप्त्यै
प्रदिष्टकाला परमेश्वरेण।
उपस्थिता शोणितपारणा मे
सुरद्विषश्चान्द्रमसी सुधेव ॥ ३९ ॥

स त्वं निवर्त्तस्व विहाय लज्जां
गुरोर्भवान् दर्शितशिष्यभक्तिः।
शस्त्रेण रक्ष्यं यदशक्यरक्षं
न तद् यशः शस्त्रभृतां क्षिणोति ॥ ४०

भृता शिवेन, अङ्कं समीपम् आगताः प्राप्ताः सत्त्वाः प्राणि
वृत्तिः यस्मिन् तत्। "अङ्कः समीपे उत्सङ्गे चिह्ने स्थानाप
धयोः" इति केशवः। सिंहत्वं विधाय, अस्मिन् अद्रिकु
गुहायाम् अहं व्यापारितः नियुक्तः ॥ ३८ ॥

तस्येति। परमेश्वरेण प्रदिष्टः निर्दिष्टः कालः भोजनवे
यस्याः सा उपस्थिता प्राप्ता एषा गोरूपा शोणितपारणा क
रस्य व्रतान्तभोजनं, सुरद्विषः राहोः, चन्द्रमसः इयं चान्द्रम
सुधा इव, क्षुधितस्य बुभुक्षितस्य, तस्य अङ्कागतसत्त्ववृत्तेः
मम सिंहस्य तृप्त्यै अलं पर्य्याप्ता। "नमः स्वस्ति—" इत्यादि
चतुर्थी ॥ ३९ ॥

स इति। सः एवम् उपायशून्यः त्वं लज्जां विहाय निव-
र्त्तस्व। भवान् त्वं गुरोः दर्शिता प्रकाशिता शिष्यस्य कर्त्तव्या
भक्तिः येन सः तथोक्तः अस्ति। ननु गुरुधनं विनाश्य तत्कथं त-

इति प्रगल्भं पुरुषाधिराजो
मृगाधिराजस्य वचो निशम्य ।
प्रत्याहतास्त्रो गिरिशप्रभावा-
दात्मन्यवज्ञां शिथिलीचकार ॥४१॥

प्रत्यब्रवीच्चैनमिषुप्रयोगे
तत्पूर्वभङ्गे वितथप्रयत्नः ।
जडीकृतस्त्र्यम्बकवीक्षणेन
वज्रं मुमुक्षन्निव वज्रपाणिः ॥४२॥

समीपं गच्छेयम् अतः आह—शस्त्रेणेति । यत् रक्ष्यं धनं शस्त्रेण आयुधेन । "शस्त्रमायुधलोहयोः" इत्यमरः । अशक्या रक्षा यस्य तत् अशक्यरक्षं, रक्षितुमशक्यम् इत्यर्थः । तत् रक्ष्यं नष्टम् अपि शस्त्रभृतां यशः न क्षिणोति, न हिनस्ति । अशक्यार्थेष्व-प्रतिविधानं न दोषाय इति भावः ॥ ४० ॥

इतीति । पुरुषाणाम् अधिराजः नृपः इति प्रगल्भं मृगाधिराजस्य वचः निशम्य श्रुत्वा गिरिशस्य ईश्वरस्य प्रभावात् प्रत्याहतास्त्रः कुण्ठितास्त्रः सन् आत्मनि विषये अवज्ञाम् अप-मानं शिथिलीचकार, तत्याज इत्यर्थः । अवज्ञातोऽहमिति निर्वेदं न प्राप इत्यर्थः । समानेषु हि क्षत्रियाणाम् अभिमानो न सर्वेश्वरं प्रति इति भावः ॥ ४१ ॥

प्रतीति । सः एव पूर्वः प्रथमः भङ्गः प्रतिबन्धः यस्य तस्मिन् तत्पूर्वभङ्गे इषु प्रयोगे वितथप्रयत्नः विफलप्रयासः, अत एव वज्रं कुलिशं मुमुक्षन् मोक्तुम् इच्छन्, अम्बकं लोचनम् । "दृग्दृष्टि-नेत्रलोचनचक्षुर्नयनाम्बकेक्षणाक्षीणि" इति हलायुधः । त्रीणि

संरुद्धचेष्टस्य मृगेन्द्र! कामं
हास्यं वचस्तद् यदहं विवक्षुः।
अन्तर्गतं प्राणभृतां हि वेद
सर्वं भवान् भावमतोऽभिधास्ये॥४३॥
मान्यः स मे स्थावरजङ्गमानां
सर्गस्थितिप्रत्यवहारहेतुः।

त्र्यम्बकानि यस्य सः त्र्यम्बकः हरः। तस्य वीक्षणेन जडीकृतः निष्पन्दीकृतः। वज्रं पाणौ यस्य सः वज्रपाणिः इन्द्रः। "प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवतः इति वक्तव्यम्" इति पाणेः सप्तम्यन्तस्योत्तरनिपातः। सः इव स्थितः नृपः एनं सिंहं प्रत्यब्रवीच्च। "बाहुं सवज्रं शक्रस्य क्रुद्धस्यास्तम्भयत् प्रभुः।" इति महाभारते॥ ४२॥

संरुद्धेति। हे मृगेन्द्र! संरुद्धचेष्टस्य प्रतिबद्धव्यापारस्य मम तद्वचः वाक्यं कामं हास्यं परिहसनीयम्। यत् वचः "स त्वं मदीयेन" (२।४५) इत्यादिकम् अहं विवक्षुः वक्तुम् इच्छुः अस्मि। तर्हि तूष्णीं स्थीयतामित्याशङ्क्य ईश्वरकिङ्करत्वात् सर्वज्ञं त्वां प्रति न हास्यमित्याह,—अन्तरिति। हि यतः भवान् प्राणभृताम् अन्तर्गतं हृद्गतं वाग्वृत्त्या बहिरप्रकाशितम् एव सर्वं भावं वेद वेत्ति। "विदो लटो वा" इति णलादेशः। अत अहम् अभिधास्ये वक्ष्यामि, वच इति प्रकृतं कर्म्म सम्बध्यते। अन्ये तु ईदृग्वचनमाकर्ण्यासम्भावितार्थमेतदित्युपहसन्ति। अतस्तु मौनमेव भूषणं, त्वं तु वाङ्मनसयोरेकविध एवायमिति जानासि। अतोऽभिधास्ये यद्वचोऽहं विवक्षुः इत्यर्थः॥४३॥

मान्य इति। प्रत्यवहारः प्रलयः। स्थावराणां तरुशैला-

गुरोरपीदं धनमाहिताग्ने-
र्नश्यत् पुरस्तादनुपेक्षणीयम् ॥ ४४ ॥
स त्वं मदीयेन शरीरवृत्तिं
देहेन निर्वर्त्तयितुं प्रसीद ।
दिनावसानोत्सुकबालवत्सा
विसृज्यतां धेनुरियं महर्षेः ॥४५॥
अथान्धकारं गिरिगह्वराणां
दंष्ट्रामयूखैः शकलानि कुर्वन् ।
भूयः स भूतेश्वरपार्श्ववर्त्ती
किञ्चिद्विहस्यार्थपतिं बभाषे ॥ ४६ ॥

दीनां जङ्गमानां मनुष्यादीनां सर्गस्थितिप्रत्यवहारेषु हेतुः सः ईश्वरः मे मम मान्यः पूज्यः अलङ्घ्यशासनः इत्यर्थः। शासनञ्च "सिंहत्वमङ्कागतसत्त्ववृत्ति" (२।३८) इत्युक्तरूपम्। तर्हि विसृज्य गम्यताम्। नेत्याह,—गुरोरपीति। पुरस्तात् अग्रे नश्यत् इदम् आहिताग्नेः गुरोः धनम् अपि गोरूपम् अनुपेक्षणीयम्। आहिताग्नेरिति विशेषणेनानुपेक्षाकारणं हविःसाधनत्वं सूचयति ॥ ४४ ॥

स इति। सः अङ्कागतसत्त्ववृत्तिः त्वं मदीयेन देहेन शरीरस्य वृत्तिं जीवनं निर्वर्त्तयितुं सम्पादयितुं प्रसीद। दिनावसाने उत्सुकः माता समागमिष्यतीत्युत्कण्ठितः बालवत्सः यस्याः सा महर्षेः इयं धेनुः विसृज्यताम् ॥४५॥

अथेति। अथ भूतेश्वरस्य पार्श्ववर्त्ती अनुचरः सः सिंहः

एकातपत्रं जगतः प्रभुत्वं
नवं वयः कान्तमिदं वपुश्च ।
अल्पस्य हेतोर्बहु हातुमिच्छन्
विचारमूढ़ः प्रतिभासि मे त्वम् ॥४७॥
भूतानुकम्पा तव चेदियं गौ-
रेका भवेत् स्वस्तिमती त्वदन्ते ।
जीवन् पुनः शश्वदुपप्लवेभ्यः
प्रजाः प्रजानाथ ! पितेव पासि ॥४८॥

गिरेः गह्वराणां गुहानाम् । "देवखातविले गुहा । गह्वरम्" इत्यमरः । अन्धकारं ध्वान्तं दंष्ट्रामयूखैः शकलानि खण्डानि कुर्वन्, निरस्यन् इत्यर्थः । किञ्चित् विहस्य अर्थपतिं नृप भूयः बभाषे । हासकारणम् "अल्पस्य हेतोर्बहु हातुमिच्छन्" ( २।४७ ) इति वक्ष्यमाणं द्रष्टव्यम् ॥ ४६ ॥

एकेति । एकातपत्रम् एकच्छत्रं जगतः प्रभुत्वं स्वामित्वं, नवं वयः यौवनम् । इदं कान्तं रम्यं वपुश्च । इत्येवं बहु। अल्पस्य हेतोः अल्पेन कारणेन । अल्पफलाय इत्यर्थः । "षष्ठी हेतुप्रयोगे" इति षष्ठी । हातुं त्यक्तुम् इच्छन् त्वं विचारे कार्य्याकार्य्यविमर्शे मूढ़ः मूर्खः मे मम प्रतिभासि ॥ ४७ ॥

भूतेति । तव भूतेषु अनुकम्पा कृपा चेत् । "कृपा दयानुकम्पा स्यात्" इत्यमरः । कृपैव वर्त्तते चेत् इत्यर्थः । तर्हि त्वदन्ते तव नाशे सति इयम् एका गौः, स्वस्ति क्षेमम् अस्याः अस्तीति स्वस्तिमती, भवेत्, जीवेत् इत्यर्थः । "स्वस्त्याशीः क्षेमपुण्यादौ" इत्यमरः । हे प्रजानाथ ! जीवन् पुनः पिता इव प्रजाः

अथैकधेनोरपराधचण्डा-
द्गुरोः कृशानुप्रतिमाद्विभेषि ?
शक्योऽस्य मन्युर्भवता विनेतुं
गाः कोटिशः स्पर्शयता घटोध्नीः ॥४९॥
तदृक्ष कल्याणपरम्पराणां
भोक्तारमूर्जस्वलमात्मदेहम् ।

उपप्लवेभ्यः विघ्नेभ्यः शश्वत् सदा। "पुनः सदार्थयोः शश्वत्" इत्यमरः। पासि रक्षसि। स्वप्राणव्ययेनैकधेनुरक्षणादरं जीवितेनैव शश्वदखिलजगत्त्राणम् इत्यर्थः॥ ४८॥

न धर्मलोपादियं प्रवृत्तिः, किन्तु गुरुभयादित्यत आह—

अथेति। अथेति पक्षान्तरे, अथवा। एका एव धेनुः यस्य तस्मात्। अयं कोपकारणोपन्यास इति ज्ञेयम्। अत एव अपराधे गवोपेक्षालक्षणे सति चण्डात् अतिकोपनात्। "चण्डस्त्वत्यन्तकोपनः" इत्यमरः। अत एव कृशानुः प्रतिमा उपमा यस्य तस्मात् अग्निकल्पात् गुरोः बिभेषि ? इति काकुः। "भीत्रार्थानां भयहेतुः" इत्यपादानात् पञ्चमी। अल्पवित्तस्य धनहानिरतिदुःसहा इति भावः। अस्य गुरोः मन्युः क्रोधः। "मन्युर्दैन्ये क्रतौ क्रुधि" इत्यमरः। घटा इव ऊधांसि यासां ताः घटोध्नीः। "ऊधसोऽनङ्" इत्यनङादेशः। "बहुव्रीहेरूधसो ङीष्" इति ङीष्। कोटिशः गाः स्पर्शयता प्रतिपादयता। "विश्राणनं वितरणं स्पर्शनं प्रतिपादनम्"। इत्यमरः। भवता विनेतुम् अपनेतुं शक्यः॥ ४९॥

तदिति। तत् तस्मात् कारणात् कल्याणपरम्पराणां भोक्तारम्। कर्मणि षष्ठी। ऊर्जः बलम् अस्यास्तीति ऊर्जस्वलम्।

महीतलस्पर्शनमात्रभिन्न-
मृद्धं हि राज्यं पदमैन्द्रमाहुः ॥५०॥

एतावदुक्त्वा विरते मृगेन्द्रे
प्रतिस्वनेनास्य गुहागतेन।
शिलोच्चयोऽपि क्षितिपालमुच्चैः
प्रीत्या तमेवार्थमभाषतेव ॥ ५१ ॥

निशम्य देवानुचरस्य वाचं
मनुष्यदेवः पुनरप्युवाच।

"ज्योत्स्नातमिस्रा—" इत्यादिना वलच्प्रत्ययान्तो निपात
आत्मदेहं रक्ष। ननु गामुपेक्ष्य आत्मदेहरक्षणे स्वर्गहानिः स्या
नेत्याह,—महीतलेति। ऋद्धं समृद्धं राज्यं महीतलस्पर्श
मात्रेण भूतलसम्बन्धमात्रेण भिन्नम् ऐन्द्रम् इन्द्रसम्बन्धि प
स्थानम् आहुः, स्वर्गान्न भिद्यते इत्यर्थः ॥ ५० ॥

एतावदिति। मृगेन्द्रे एतावत् उक्त्वा विरते सति, गु
गतेन अस्य सिंहस्य प्रतिस्वनेन शिलोच्चयः शैलोऽपि प्रीत्या त
एव अर्थं क्षितिपालम् उच्चैः अभाषत इव, इत्युत्प्रेक्षा। भाषि
ब्रुविसमानार्थत्वात् द्विकर्म्मकः। ब्रुविस्तु द्विकर्मकेषु पठित
तदुक्तम्,—"दुहियाचिरुधिप्रच्छिभिक्षिचिञामुपयोगनिमित्त
पूर्वविधौ। ब्रुविशासिगुणेन च यत् सचते तदकीर्त्तितमाचरि
कविना" इति ॥ ५१ ॥

निशम्येति। देवानुचरस्य ईश्वरकिङ्करस्य सिंहस्य वा
निशम्य मनुष्यदेवः राजा पुनः अपि उवाच। किम्भूतः सन्
तेन सिंहेन यत् अध्यासितं व्याक्रमणम्। "नपुंसके भावे क्तः"

धेन्वा तदध्यासितकातराक्ष्या
निरीक्ष्यमाणः सुतरां दयालुः ॥५२॥
क्षतात् किल त्रायत इत्युदग्रः
क्षत्रस्य शब्दो भुवनेषु रूढः।
राज्येन किं तद्विपरीतवृत्तेः
प्राणैरुपक्रोशमलीमसैर्वा ॥५३॥

तेन कातरे अक्षिणी यस्याः तया। "बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्" इति षच्। "षिद्गौरादिभ्यश्च" इति ङीष्। किं वा वक्ष्यतीति भीत्यैवं स्थितया इत्यर्थः। धेन्वा निरीक्ष्यमाणः। अत एव सुतरां दयालुः सन्। सुतरामित्यत्र "द्विवचनविभज्य—" इत्यादिना सुशब्दात् तरप्। "किमेत्तिङव्यय—" इत्यादिना आम्प्रत्ययः। "तद्धितश्चासर्वविभक्तिः" इत्यव्ययसंज्ञा ॥ ५२ ॥

किमुवाचेत्याह—

क्षतादिति। "क्षणु हिंसायाम्" इति धातोः सम्पदादित्वात् क्विप्। "गमादीनाम्" इति वक्तव्यादनुनासिकलोपे तुगागमे च क्षदिति रूपं सिद्धम्। क्षतः नाशात् त्रायते इति क्षत्रः। "सुपि—" इति योगविभागात् कः। तामेतां व्युत्पत्तिं कविरर्थतोऽनुक्रामति—क्षतादित्यादिना। उदग्रः उन्नतः क्षत्रस्य क्षत्रवर्णस्य शब्दः वाचकः, क्षत्रशब्द इत्यर्थः। क्षतात् त्रायते इति व्युत्पत्त्या भुवनेषु रूढः किल प्रसिद्धः खलु। नाग्नकर्णादिवत् केवलरूढः किन्तु पङ्कजादिवत् योगरूढः इत्यर्थः। ततः किमित्यत आह,—तस्य क्षत्रशब्दस्य विपरीतवृत्तेः विरुद्धव्यापारस्य क्षतः त्राणम् अकुर्वतः पुंसः राज्येन किम्? उपक्रोशमलीमसैः निन्दामलिनैः। "उपक्रोशो जुगुप्सा च कुत्सा निन्दा च गर्हणे"।

कथं नु शक्योऽनुनयो महर्षे-
र्विश्राणनाच्चान्यपयस्विनीनाम् ।
इमामनूनां सुरभेरवेहि
रुद्रौजसा तु प्रहृतं त्वयास्याम् ॥५४॥
सेयं स्वदेहार्पणनिष्क्रयेण
न्याय्या मया मोचयितुं भवत्तः ।

इत्यमरः । "ज्योत्स्ना तमिस्रा—" इत्यादिना मलीमस
निपातितः । "मलीमसं तु मलिनं कच्चरं मलदूषितम्
इत्यमरः । तैः प्राणैर्वा किम् ? निन्दितस्य सर्वं व्यर्थम् इत्य
एतेन "एकातपत्रम्" (२।४७) इत्यादिना श्लोकद्वयेनो
प्रत्युक्तमिति वेदितव्यम् ॥ ५३ ॥

"अथैकधेनोः" (२।४८) इत्यस्योत्तरमाह—

कथमिति । अनुनयः क्रोधापनयः । चकारो वाकारार्
महर्षेः अनुनयः वा अन्यासां पयस्विनीनां दोग्ध्रीणां
विश्राणनात् दानात् । "त्यागो वितरणं दानमुत्सर्जनविसर्ज
विश्राणनं वितरणम्" इत्यमरः । कथं नु शक्यः ? न श
इत्यर्थः । अत्र हेतुमाह,—इमां गां सुरभेः कामधेनोः । "प
विभक्ते" इति पञ्चमी । अनूनाम् अन्यूनाम् अवेहि जानी
तर्हि कथमस्याः परिभवोऽभूत् इत्याह,—रुद्रौजसेति । अ
गवि त्वया कर्त्रा प्रहृतं तु प्रहारस्तु । नपुंसके भावे
रुद्रौजसा ईश्वरसामर्थ्येन, न तु स्वयम् इत्यर्थः । "सप्तमी
कारणे च" इति सप्तमी ॥ ५४ ॥

तर्हि किं चिकीर्षितमित्यत्राह—

सेयमिति । सा इयं गौः मया, निष्क्रीयते प्रत्याह्रिय

न पारणा स्याद्विहता तवैवं
भवेदलुप्तश्च मुनेः क्रियार्थः ॥५५॥
भवानपीदं परवानवैति
महान् हि यत्नस्तव देवदारौ।
स्थातुं नियोक्तुर्न हि शक्यमग्रे
विनाश्य रक्ष्यं स्वयमक्षतेन॥ ५६ ॥

ानेन परगृहीतम् इति निष्क्रयः प्रतिशीर्षकम्। "एरच्" इति च्प्रत्ययः। स्वदेहार्पणम् एव निष्क्रयः तेन, भवत्तः त्वत्तः। ाञ्चम्यास्तसिल्। मोचयितुं न्याय्या न्यायात् अनपेता युक्ता त्यर्थः। "धर्मपथ्यर्थ—" इत्यादिना यत्प्रत्ययः। एवं सति तव पारणा भोजनं विहता न स्यात्, मुनेः क्रिया होमादिः, सः एव अर्थः प्रयोजनम्, स च अलुप्तः भवेत्। स्वप्राणव्ययेनापि स्वामिगुरुधनं संरक्ष्यम् इति भावः॥ ५५ ॥

अत्र भवानेव प्रमाणमित्याह—

भवानिति। परवान् स्वामिपरतन्त्रः भवान् अपि। "पर-तन्त्रः पराधीनः परवान् नाथवानपि"। इत्यमरः। इदं वक्ष्य-माणम् अवैति, भवता अनुभूयते एव इत्यर्थः। "शेषे प्रथमः" इति प्रथमपुरुषः। किमित्यत आह,—हि यस्मात् हेतोः। "हि हेतावधारणे" इत्यमरः। तव देवदारौ विषये महान् यत्नः, महता यत्नेन रक्ष्यते इत्यर्थः। इदं शब्दोक्तमप्यर्थं दर्शयति,— स्थातुमिति। रक्ष्यं वस्तु विनाश्य विनाशं गमयित्वा स्वयम् अक्षतेन अव्रणेन, नियुक्तेन इति शेषः। नियोक्तुः स्वामिनः अग्रे स्थातुं शक्यं नहि॥ ५६ ॥

किमप्यहिंस्यस्तव चेन्मतोऽहं
यशःशरीरे भव मे दयालुः।
एकान्तविध्वंसिषु मद्विधानां
पिण्डेष्वनास्था खलु भौतिकेषु ॥ ५७॥

सम्बन्धमाभाषणपूर्वमाहु-
र्वृत्तः स नौ सङ्गतयोर्वनान्ते।
तद्भूतनाथानुग ! नार्हसि त्वं
सम्बन्धिनो मे प्रणयं विहन्तुम् ॥ ५८॥

सर्वथा चैतदप्रतिहार्य्यमित्याह—

किमिति। किम् अपि किं वा अहं तव अहिंस्यः अवध्यः मतः चेत् तर्हि मे यशः एव शरीरं तस्मिन् दयालुः कारुणिकः भव। "स्याद् दयालुः कारुणिकः" इत्यमरः। ननु मुख्य-मुपेक्ष्यामुख्यशरीरे कोऽभिनिवेशः ? अत आह,—एकान्तेति। मद्विधानां मादृशानां विवेकिनाम् एकान्तविध्वंसिषु अवश्य-विनाशिषु भौतिकेषु पृथिव्यादिभूतविकारेषु पिण्डेषु शरीरेषु अनास्था खलु अनपेक्षा एव। "आस्था त्वालम्बनास्थानयत्ना-पेक्षासु कथ्यते" इति विश्वः ॥ ५७ ॥

सौहार्दादहमनुसरणीयोऽस्मीत्याह—

सम्बन्धमिति। सम्बन्धं सख्यम्, आभाषणम् आलापः पूर्वं कारणं यस्य तम्, आहुः। "स्यादाभाषणमालापः" इत्यमरः। सः तादृक् सम्बन्धः वनान्ते सङ्गतयोः नौ आवयोः वृत्तः जातः। तत् तस्मात् हेतोः हे भूतनाथानुग ! शिवानुचर ! एतेन तस्य महत्त्वं सूचयति। अत एव सम्बन्धिनः मित्रस्य मे प्रणयं

तथेति गामुक्तवते दिलीपः
सद्यः प्रतिष्टम्भविमुक्तबाहुः।
स न्यस्तशस्त्रो हरये स्वदेह-
मुपानयत् पिण्डमिवामिषस्य॥ ५९॥

तस्मिन् क्षणे पालयितुः प्रजाना-
मुत्पश्यतः सिंहनिपातमुग्रम्।
अवाङ्मुखस्योपरि पुष्पवृष्टिः
पपात विद्याधरहस्तमुक्ता॥ ६०॥

उत्तिष्ठ वत्सेत्यमृतायमानं
वचो निशम्योत्थितमुत्थितः सन्।

याञ्चाम्। "प्रणयास्त्वमी। विस्रम्भयाञ्चाप्रेमाणः" इत्यमरः। विहन्तुं न अर्हसि॥ ५८॥

तथेति। तथा इति गाम् उक्तवते हरये सिंहाय। "कपौ सिंहे सुवर्णे च वर्णे विष्णौ हरिं विदुः" इति शाश्वतः। सद्यः तत्क्षणे प्रतिष्टम्भात् प्रतिबन्धात् विमुक्तः बाहुः यस्य स दिलीपः, न्यस्तशस्त्रः त्यक्तायुधः सन्, स्वदेहम् आमिषस्य मांसस्य "पललं क्रव्यमामिषम्" इत्यमरः। पिण्डं कवलम् इव उपानयत् समर्पितवान्। एतेन निर्ममत्वमुक्तम्॥ ५९॥

तस्मिन्निति। तस्मिन् क्षणे उग्रं सिंहनिपातम् उत्पश्यतः उत्प्रेक्षमाणस्य तर्कयतः अवाङ्मुखस्य अधोमुखस्य। "स्यादवाङप्यधोमुखः" इत्यमरः। प्रजानां पालयितुः राज्ञः उपरि उपरिष्टात्। "उपर्युपरिष्टात्" इति निपातः। विद्याधराणां देवयोनिविशेषाणां हस्तैः मुक्ता पुष्पवृष्टिः पपात॥ ६०॥

७

ददर्श राजा जननीमिव स्वां
गामग्रतः प्रस्नविणीं न सिंहम्॥ ६१ ॥
तं विस्मितं धेनुरुवाच साधो!
मायां मयोद्भाव्य परीक्षितोऽसि।
ऋषिप्रभावान्मयि नान्तकोऽपि
प्रभुः प्रहर्तुं किमुतान्यहिंस्राः॥ ६२ ॥
भक्त्या गुरौ मय्यनुकम्पया च
प्रीतास्मि ते पुत्र! वरं वृणीष्व।

उत्तिष्ठेति। राजा अमृतमिव आचरतीति अमृतायमानं तत्। "उपमानादाचारे" इति क्यङ्, ततः शानच्। उत्थितम् उत्पन्नं "हे वत्स! उत्तिष्ठ" इति वचः निशम्य श्रुत्वा उत्थितः सन्। अस्तेः शतृप्रत्ययः। अग्रतः अग्रे प्रस्नवः क्षीरस्रावः अस्ति यस्याः सा तां प्रस्नविणीं गां स्वां जननीम् इव ददर्श, न सिंहं ददर्श॥ ६१ ॥

तमिति। विस्मितम् आश्चर्यं गतम्। कर्त्तरि क्तः। तं दिलीपं धेनुः उवाच। किमित्यत्राह, हे साधो! मया मायाम् उद्भाव्य कल्पयित्वा परीक्षितः असि। ऋषिप्रभावात् मयि अन्तकः यमः अपि प्रहर्त्तुं न प्रभुः न समर्थः। अन्ये हिंस्राः घातुकाः। "शरारुर्घातुको हिंस्रः" इत्यमरः। "नमिकम्पि—" इत्यादिना रप्रत्ययः। किमुत? सुष्ठु न प्रभवः इति योज्यम्। "बलवत् सुष्ठु किमुत स्वत्यतीव च निर्भरः" इत्यमरः॥ ६२ ॥

भक्त्येति। हे पुत्र! गुरौ भक्त्या। मयि अनुकम्पया च ते तुभ्यं प्रीता अस्मि। "क्रियाग्रहणमपि कर्त्तव्यम्" इ

न केवलानां पयसां प्रसूति-
मवेहि मां कामदुघां प्रसन्नाम् ॥ ६३ ॥
ततः समानीय स मानितार्थी
हस्तौ स्वहस्तार्जितवीरशब्दः।
वंशस्य कर्त्तारमनन्तकीर्त्तिं
सुदक्षिणायां तनयं ययाचे ॥ ६४ ॥
सन्तानकामाय तथेति कामं
राज्ञे प्रतिश्रुत्य पयस्विनी सा।
दुग्ध्वा पयः पत्रपुटे मदीयं
पुत्रोपभुङ्क्ष्वेति तमादिदेश ॥ ६५ ॥

चतुर्थी। वरं देवेभ्यो वरणीयम् अर्थम्। "देवाद्वृते वरः श्रेष्ठे त्रिषु क्लीबे मनाक् प्रिये" इत्यमरः। वृणीष्व स्वीकुरु। तथाहि। मां केवलानां पयसां प्रसूतिं कारणं न अवेहि न विद्धि। किन्तु प्रसन्नां मां कामान् दोग्धीति कामदुघा ताम् अवेहि। "दुहः कप् घश्च" इति कप्प्रत्ययः॥ ६३ ॥

तत इति। ततः मानितार्थी। स्वहस्तार्जितः वीरः इति शब्दो येन सः। एतेनास्य दातृत्वं दैन्यराहित्यं चोक्तम्। सः राजा हस्तौ समानीय सन्धाय। अञ्जलिं बद्ध्वा इत्यर्थः। वंशस्य कर्त्तारं प्रवर्त्तयितारम्। अतएव रघुकुलमिति प्रसिद्धिः। अनन्तकीर्त्तिं स्थिरयशसं तनयं सुदक्षिणायां ययाचे ॥ ६४ ॥

सन्तानेति। सा पयस्विनी गौः, सन्तानं कामयते इति सन्तानकामः। "कर्मण्यण्"। तस्मै राज्ञे तथेति। काम्यते

वत्सस्य होमार्थविधेश्च शेष-
मृषेरनुज्ञामधिगम्य मातः!।
औधस्यमिच्छामि तवोपभोक्तुं-
षष्ठांशमुर्व्या इव रक्षितायाः॥ ६६॥
इत्थं क्षितीशेन वशिष्ठधेनुः
विज्ञापिता प्रीततरा बभूव।
तदन्विता हैमवताच्च कुक्षेः
प्रत्याययावाश्रममश्रमेण॥ ६७॥

इति कामः वरः। कामार्थे घञ्प्रत्ययः। तं प्रतिश्रुत्य प्रतिज्ञाय "हे पुत्र! मदीयं पयः पत्रपुटे पत्रनिर्मिते पात्रे दुग्ध्वा उपभुङ्क्ष्व पिब" इति तम् आदिदेश आज्ञापितवती "उपयुङ्क्ष्व" इति वा पाठः॥ ६५॥

वत्सस्येति। हे मातः! वत्सस्य वत्सपीतस्य शेषं वत्सपीतावशिष्टम् इत्यर्थः। होमः एव अर्थः तस्य विधिः अनुष्ठानम् तस्य च शेषं होमावशिष्टम् इत्यर्थः। तव ऊधसि भवम् औधस्यं क्षीरम्। "शरीरावयवाच्च" इति यत्प्रत्ययः। रक्षितायाः उर्व्याः षष्ठांशं षष्ठभागम् इव। ऋषेः अनुज्ञाम् अधिगम्य उपभोक्तुम् इच्छामि॥ ६६॥

इत्थमिति। इत्थं क्षितीशेन विज्ञापिता वशिष्ठस्य धेनुः प्रीततरा पूर्वं शुश्रूषया प्रीता। सम्प्रति अनया विज्ञापनया प्रीततरा अतिसन्तुष्टा बभूव। तदन्विता तेन दिलीपेन अन्विता हैमवतात् हिमवत्सम्बन्धिनः कुक्षेः गुहायाः सकाशात् अश्रमेण अनायासेन आश्रमं प्रत्याययौ आगता च॥ ६७॥

तस्याः प्रसन्नेन्दुमुखः प्रसादं
गुरुर्नृपाणां गुरवे निवेद्य ।
प्रहर्षचिह्नानुमितं प्रियायै
शशंस वाचा पुनरुक्तयेव ॥६८॥
स नन्दिनीस्तन्यमनिन्दितात्मा
सद्वत्सलो वत्सहुतावशेषम् ।
पपौ वशिष्ठेन कृताभ्यनुज्ञः
शुभ्रं यशो मूर्त्तमिवातितृष्णः ॥६९॥
प्रातर्यथोक्तव्रतपारणान्ते
प्रास्थानिकं स्वस्त्ययनं प्रयुज्य ।

तस्या इति । प्रसन्नेन्दुरिव मुखं यस्य सः नृपाणां गुरुः दिलीपः प्रहर्षचिह्नैः मुखरागादिभिः अनुमितम् ऊहितं तस्याः धेनोः प्रसादम् अनुग्रहं प्रहर्षचिह्नैरेव ज्ञातत्वात् पुनरुक्तया इव वाचा गुरवे निवेद्य विज्ञाप्य पश्चात् प्रियायै शशंस। कथितस्यैव कथनं पुनरुक्तिः। न चेह तदस्ति। किन्तु चिह्नैः कथितप्रायत्वात् पुनरुक्तयेव स्थितया इत्युत्प्रेक्षा ॥ ६८ ॥

स इति । अनिन्दितात्मा अगर्हितस्वभावः। सत्सु वत्सलः प्रेमवान् सद्वत्सलः। "वत्सांसाभ्यां कामबले" इति लच्प्रत्ययः। वशिष्ठेन कृताभ्यनुज्ञः कृतानुमतिः सः राजा वत्सस्य हुतस्य च अवशेषं पीतहुतावशिष्टं नन्दिन्याः स्तन्यं क्षीरम्। शुभ्रं मूर्त्तं परिच्छिन्नं यशः इव। अतितृष्णः सन् पपौ ॥ ६९ ॥

प्रातरिति । वशी वशिष्ठः प्रातः यथोक्तस्य पूर्वोक्तस्य व्रतस्य गोसेवारूपस्य अङ्गभूता या पारणा तस्याः अन्ते प्रास्था-

तौ दम्पती स्वां प्रति राजधानीं
प्रस्थापयामास वशी वशिष्ठः ॥ ७० ॥
प्रदक्षिणीकृत्य हुतं हुताश-
मनन्तरं भर्त्तुररुन्धतीञ्च ।
धेनुं सवत्साञ्च नृपः प्रतस्थे
सन्मङ्गलोदग्रतरप्रभावः ॥ ७१ ॥
श्रोत्राभिरामध्वनिना रथेन
स धर्मपत्नीसहितः सहिष्णुः ।

निकं प्रस्थानकाले भवम् । तत्कालोचितम् इत्यर्थः । "काला
ठञ्" इति ठञ्प्रत्ययः । "यथाकथञ्चित् गुणवृत्त्यापि का
वर्त्तमानत्वात् तत्तत्प्रत्यय इष्यते" इति वृत्तिकारः । ईयते प्राप्य
अनेनेति अयनं स्वस्त्ययनं शुभावहम् आशीर्वादं प्रयुज्य
दम्पती स्वां राजधानीं पुरीं प्रति प्रस्थापयामास ॥ ७० ॥

प्रदक्षिणीकृत्येति । नृपः हुतं तर्पितम् । हुतम् अश्न
तीति हुताशः अग्निः । "कर्मणि अण्" । तं भर्त्तुः मुनेः अ
न्तरम् । प्रदक्षिणानन्तरम् इत्यर्थः । अरुन्धतीञ्च सवत्सां धेनु
प्रदक्षिणीकृत्य । प्रगतो दक्षिणं प्रदक्षिणम् । "तिष्ठद्
प्रभृतीनि च" इत्यव्ययीभावः । ततः च्विः । अप्रदक्षिणं प्रदक्षि
सम्पद्यमानं कृत्वा प्रदक्षिणीकृत्य । सद्भिः मङ्गलैः प्रदक्षि
दिभिः मङ्गलाचारैः उदग्रतरप्रभावः सन् प्रतस्थे ॥ ७१ ॥

श्रोत्रेति । धर्मपत्नीसहितः सहिष्णुः व्रतादिदुःखसह
शीलः सः नृपः श्रोत्राभिरामध्वनिना कर्णाह्लादकरस्वने
अनुद्घातः पाषाणादिप्रतिघातरहितः । अतएव सुखयती

ययावनुद्घातसुखेन मार्गं
स्वेनेव पूर्णेन मनोरथेन ॥ ७२ ॥
तमाहितौत्सुक्यमदर्शनेन
प्रजाः प्रजार्थव्रतकर्शिताङ्गम्।
नेत्रैः पपुस्तृप्तिमनाप्नुवद्भिः
नवोदयं नाथमिवौषधीनाम् ॥७३॥
पुरन्दरश्रीः पुरमुत्पताकं
प्रविश्य पौरैरभिनन्द्यमानः।

सुखः तेन रथेन स्वेन पूर्णेन सफलेन मनोरथेन इव। मार्गम् अध्वानं ययौ। मनोरथपक्षे अनुद्घातः प्रतिबन्धनिवृत्तिः ॥ ७२ ॥

तमिति। अदर्शनेन प्रवासनिमित्तेन आहितौत्सुक्यं जनितदर्शनोत्कण्ठम्। प्रजार्थेन सन्तानार्थेन व्रतेन नियमेन कर्शितं कृशीकृतम् अङ्गं यस्य तम्। नवोदयं नवाभ्युदयं प्रजाः तृप्तिम् अनाप्नुवद्भिः अतितृष्णुभिः नेत्रैः। ओषधीनां नाथं सोमम् इव। तं राजानं पपुः। अत्यास्थया ददृशुः इत्यर्थः। चन्द्रपक्षे, अदर्शनं कलाक्षयनिमित्तम्। प्रजार्थं लोकहितार्थम्। व्रतं देवताभ्यः कलादाननियमः। "तञ्च सोमं पपुर्देवाः पर्यायेणानुपूर्वशः" इति व्यासः। उदयः आविर्भावः। अन्यत् समानम् ॥ ७३ ॥

पुरन्दरेति। पुरः पुरीः असुराणां दारयतीति पुरन्दरः शक्रः। "पूःसर्वयोर्दारिसहोः" इति खच्प्रत्ययः, "वाचंयमपुरन्दरौ च" इति मुमागमो निपातितः। तस्य श्रीरिव श्रीः

भुजे भुजङ्गेन्द्रसमानसारे
भूयः स भूमेर्धुरमाससञ्ज ॥ ७४ ॥
अथ नयनसमुत्थं ज्योतिरत्रेरिव द्यौः
सुरसरिदिव तेजो वह्निनिष्ठ्यूतमैशम्।

यस्य सः नृपः पौरैः अभिनन्द्यमानः। उत्पताकम् उच्छ्रि
ध्वजम्। "पताका वैजयन्ती स्यात् केतनं ध्वजमस्त्रियाम्
इत्यमरः। पुरं प्रविश्य भुजङ्गेन्द्रेण समानसारे तुल्यबले। "सा
बले स्थिरांशे च न्याय्ये क्लीवं वरे त्रिषु" इत्यमरः। भुजे भू
भूमेः धुरम् आससञ्ज स्थापितवान् ॥ ७४ ॥

अथेति। अथ द्यौः सुरवर्त्म। "द्यौः स्वर्गसुरवर्त्मनोः" इ
विश्वः। अत्रेः महर्षेः नयनयोः समुत्थम् उत्पन्नं नयनसमुत्थम्
"आतश्चोपसर्गे" इति कप्रत्ययः। ज्योतिः इव। चन्द्रमि
इत्यर्थः। "अत्रिनेत्रप्रसूतः" इति हलायुधः
चन्द्रस्यात्रिनेत्रोद्भूतत्वमुक्तं हरिवंशे,—"नेत्राभ्यां वारि सुस्रा
दशधा द्योतयद् दिशः। तद्गर्भविधिना हृष्टा दिशो दे
दधुस्तदा। समेत्य धारयामासुर्न च ताः समशक्नुवन्। स ता
सहसैवाथ दिग्भ्यो गर्भः प्रभान्वितः। पपात भासयन् लोका
शीतांशुः सर्वभावनः" इति। सुरसरित् गङ्गा वह्निना निष्ठ्यू
विक्षिप्तम्। "ष्ठिवुक्लमुचमां शितिः" ... "ष्ठिवोः शूद्रनुनासिके च" इत्यनेन निपूर्वात् ष्ठीवते
कारस्य ऊठ्। "जुग्नजुप्तास्तनिष्ठ्यूतविद्धक्षिप्तेरिताः समाः
इत्यमरः। ऐशं तेजः स्कन्दम् इव। अत्र रामायणम्,—"
गत्वा पर्वतं राम! कैलासं धातुमण्डितम्। अग्निं नियोजय
मासुः पुत्रार्थं सर्वदेवताः। देवकार्य्यमिदं देव! समाधत्स्व
हुताशन! शैलपुत्र्यां महातेजो गङ्गायां तेज उत्सृज। देवता

रपतिकुलभूत्यै गर्भमाधत्त राज्ञी
कभिरभिनिविष्टं लोकपालानुभावैः ॥७५॥

ति श्रीरघुवंशे महाकाव्ये कालिदासकृतौ
नन्दिनीवरप्रदानं नाम द्वितीयः सर्गः।

तेजाय गङ्गामभ्येत्य पावकः। गर्भं धारय वै देवि! देवताना-
दं प्रियम्। इत्येतद्वचनं श्रुत्वा दिव्यं रूपमधारयत्। स
ा महिमां दृष्ट्वा समन्तादवधीर्यत। समन्ततस्तु तां देवी-
वसिञ्चत पावकः। सर्वस्रोतांसि पूर्णानि गङ्गाया रघुनन्दन!"
। राज्ञी सुदक्षिणा नरपतेः दिलीपस्य कुलभूत्यै सन्तति-
ार्थे गुरुभिः महद्भिः लोकपालानाम् अनुभावैः तेजोभिः
भिनिविष्टम् अनुप्रविष्टं गर्भम् आधत्त दधौ इत्यर्थः। अत्र
,—अष्टानां लोकपालानां वपुर्धारयते नृपः" इति। अत्र
ाधत्त" इत्यनेन स्त्रीकर्तृकधारणमात्रमुच्यते। तथा मन्त्रे च
ते—"यथेयं पृथिवी मह्युत्ताना गर्भमादधे। एवं त्वं गर्भ-
ेहि दशमे मासि सूतये" इति आश्वलायनानां सीमन्तमन्त्रे
ापारधारणे आधानशब्दप्रयोगदर्शनादिति। मालिनी-
मितत्। तदुक्तम्,—"ननमयययुतेयं मालिनी भोगिलोकैः"
लक्षणात् ॥ ७५ ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविर-
चितायां रघुवंशटीकायां सञ्जीवनीसमाख्यायां
द्वितीयः सर्गः।

---

## तृतीयः सर्गः ।

अथेप्सितं भर्त्तुरुपस्थितोदयं
सखीजनोद्वीक्षणकौमुदीमुखम् ।
निदानमिक्ष्वाकुकुलस्य सन्ततेः
सुदक्षिणा दौर्हृदलक्षणं दधौ ॥ १ ॥

उपाधिगम्योऽप्यनुपाधिगम्यः समावलोक्योऽप्यसमावलोक्यः
भवोऽपि योऽभूदभवः शिवोऽयं अमत्यपायादपि नः स पाय

राज्ञी गर्भमाधत्तेत्युक्तम् । सम्प्रति गर्भलक्षणानि वर्ण
प्रस्तौति—

अथेति । अथ गर्भधारणानन्तरं सुदक्षिणा । उपस्थित
प्राप्तकालं भर्त्तुः दिलीपस्य ईप्सितं मनोरथम् । भावे
सखीजनस्य उद्वीक्षणानां दृष्टीनां कौमुदीमुखं चन्द्रिका
र्भावम् । यद्वा, कौमुदी नाम दीपोत्सवतिथिः । तदुक्तं भवि
त्तरे,—"कौ मोदन्ते जना यस्यां तेनासौ कौमुदी मता"
तस्याः मुखं प्रारम्भम् । "सखीजनोद्वीक्षणकौमुदीमहम्"
पाठं केचित् पठन्ति । इक्ष्वाकुकुलस्य सन्ततेः अविच्छे
निदानं मूलकारणम् । "निदानं त्वादिकारणम्" इत्यम
एवंविधं दौर्हृदलक्षणं गर्भचिह्नं वक्ष्यमाणं दधौ । स्वहृ
गर्भहृदयेन च द्विहृदया गर्भिणी । यथाह वाग्भटः,—"
जन्यस्य हृदयं मातुश्च हृदयञ्च तत् । सम्बद्धं तेन गर्भि
श्रेष्ठं श्रद्धाभिमाननम्" ॥ इति । तत्सम्बन्धित्वाद्गर्भो दौ
मित्युच्यते । सा च तद्योगात् दौर्हृदिनीति तदुक्तम् संग्रहे

शरीरसादादसमग्रभूषणा
मुखेन सालच्यत लोध्रपाण्डुना ।
तनुप्रकाशेन विचेयतारका
प्रभातकल्पा शशिनेव शर्वरी ॥ २ ॥

तदाननं मृत्सुरभि क्षितीश्वरो
रहस्युपाघ्राय न तृप्तिमाययौ ।
करीव सिक्तं पृषतैः पयोमुचां
शुचिव्यपाये वनराजिपल्वलम् ॥३॥

हृदयां नारीं दौहृदिनीमाचक्षते" इति । अत्र दौहृद-
लक्षेप्सितत्वेन कौमुदीमुखत्वेन च निरूपणात् रूपकाल-
रः । अस्मिन् सर्गे वंशस्थं वृत्तम्,—"जतौ तु वंशस्थमुदीरितं
रौ" इति लक्षणात् ॥ १ ॥

सम्प्रति क्षामताख्यं गर्भलक्षणं वर्णयति,—

शरीरेति । शरीरस्य सादात् कार्श्यात् असमग्रभूषणा परि-
ताभरणा लोध्रपुष्पेण इव पाण्डुना मुखेन उपलक्षिता सा
दक्षिणा । विचेयाः मृग्याः तारकाः यस्यां सा तथोक्ता । विरल-
रका इत्यर्थः । तनुप्रकाशेन अल्पकान्तिना शशिना उप-
क्षिता ईषदसमाप्तप्रभाता प्रभातकल्पा प्रभातादीषदूना
र्थः । "तसिलादिष्वाकृत्वसुचः" इति प्रभातशब्दस्य पुंव-
वः । शर्वरी रात्रिः इव अलक्ष्यत । शरीरसादादि गर्भलक्षण-
ह वाग्भटः, "क्षामता गरिमा कुक्षेर्मूर्च्छा छर्दिररोचकम् ।
था प्रसेकः सदनं रोमराज्याः प्रकाशनम्" इति ॥ २ ॥

तदिति । क्षितीश्वरः रहसि मृत्सुरभि मृदा सुगन्धि तस्याः

दिवं मरुत्वानिव भोक्ष्यते भुवं
दिगन्तविश्रान्तरथो हि तत्सुतः।
अतोऽभिलाषे प्रथमं तथाविधे
मनो बबन्धान्यरसान् विलङ्घ्य सा ॥ ४ ॥
न मे ह्रिया शंसति किञ्चिदीप्सितं
स्पृहावती वस्तुषु केषु मागधी।

आननं तदाननं सुदक्षिणामुखम् उपाघ्राय तृप्तिं न आययौ
कः कमिव? शुचिव्यपाये ग्रीष्मावसाने। "शुचिः शुद्धेऽनुप
शृङ्गाराषाढयोः सिते। ग्रीष्मे हुतवहेऽपि स्यात् उपधाशु
मन्त्रिणि॥" इति विश्वः। पयोमुचां मेघानां पृषतैः बिन्दुभिः
"पृषन्ति बिन्दुपृषताः" इत्यमरः। सिक्तम् उक्षितं वनराज
पल्वलम् उपाघ्राय करी गजः इव। अत्र करिवनराजिपल्वला
कान्तकामिनीवदनसमाधिरनुसन्धेयः। गर्भिणीनां मृद्भक्ष
लोकप्रसिद्धमेव। एतेन दोहदाख्यं गर्भलक्षणमुच्यते ॥ ३ ॥

दोहदलक्षणे मृद्भक्षणे हेत्वन्तरमुत्प्रेक्षते—

दिवमिति। हि यस्मात् दिगन्तविश्रान्तरथः चक्रवर्ती
तस्याः सुतः तत्सुतः मरुत्वान् इन्द्रः। "इन्द्रो मरुत्वा
मघवा" इत्यमरः। दिवं स्वर्गम् इव। भुवं भोक्ष्यते। "भुजो
ऽनवने" इत्यात्मनेपदम्। अतः प्रथमं सा सुदक्षिणा तथावि
भूविकारे मद्रूपे। अभिलष्यते इति अभिलाषः भोग्यवस्तु
तस्मिन्। कर्मणि घञ्प्रत्ययः। रस्यन्ते स्वाद्यन्ते इति रसा
भोग्यार्थाः। अन्ये च ते रसाश्च तान् विलङ्घ्य विहाय मन
बबन्ध विदधौ इत्यर्थः। दोहदहेतुकस्य मृद्भक्षणस्य पुत्रभूभो
सूचनार्थत्वमुत्प्रेक्षते ॥ ४ ॥

इति स्म पृच्छत्यनुवेलमादृतः
प्रियासखीरुत्तरकोशलेश्वरः ॥ ५ ॥
उपेत्य सा दोहददुःखशीलतां
यदेव वव्रे तदपश्यदाहृतम् ।
न हीष्टमस्य त्रिदिवेऽपि भूपते-
रभूदनासाद्यमधिज्यधन्वनः ॥ ६ ॥

मेति । मगधस्य राज्ञः अपत्यं स्त्री मागधी सुदक्षिणा । राज मगधकलिङ्गसूरमसादण्” इत्यण्प्रत्ययः । क्रिया किंस्वित् कमपि ईप्सितम् इष्टं मे मह्यं न शंसति न आचष्टे । केषु वस्तुषु स्पृहावती इति अनुवेलम् अनुक्षणम् आदृतः आदृतवान् । कर्तरि क्तः । “आदृतौ सादरार्चितौ” इत्यमरः । प्रियायाः सखीः सहचरीः उत्तरकोशलेश्वरः दिलीपः पृच्छति स्म पप्रच्छ । “लट् स्मे” इत्यनेन भूतार्थे लट् । सखीनां विस्रम्भभूमित्वात् इति भावः ॥ ५ ॥

उपेत्येति । दोहदं गर्भिणीमनोरथः । “दोहदं दौहृदं श्रद्धा लालसञ्च समं स्मृतम्” इति हलायुधः । सा सुदक्षिणा दोहदेन गर्भिणीमनोरथेन दुःखशीलतां दुःखस्वभावताम् उपेत्य प्राप्य यत् वस्तु वव्रे आचकाङ्क्ष, तत् आहृतम् आनीतं भर्त्रा इति शेषः, अपश्यत् एव अलभत इत्यर्थः । कुतः ? हि यस्मात् अस्य भूपतेः त्रिदिवे अपि स्वर्गे अपि इष्टं वस्तु अनासाद्यम् अनवाप्यं न अभूत् । किं याञ्चया ? नेत्याह,—अधिज्यधन्वन इति । न हि वीरपत्नीनामलभ्यं नाम किञ्चिदस्ति इति भावः । अत्र वाग्भटः,—“पादशोफो विदाहोऽन्ते श्रद्धा च विविधात्मिका” इति । एतच्च पत्नीमनोरथपूरणाकरणे इष्टदोषसम्भ-

क्रमेण निस्तीर्य्य च दोहदव्यथां
प्रचीयमानावयवा रराज सा।
पुराणपत्रापगमादनन्तरं
लतेव सन्नद्धमनोज्ञपल्लवा ॥७॥

दिनेषु गच्छत्सु नितान्तपीवरं
तदीयमानीलमुखं स्तनद्वयम्।
तिरश्चकार भ्रमराभिलीनयोः
सुजातयोः पङ्कजकोशयोः श्रियम् ॥८॥

वात्। न तु राज्ञः प्रीतिलौल्यात्। तदुक्तम्,—"देयमप्यहितं तस्यै हिताय हितमल्पकम्। श्रद्धाविघाते गर्भस्य विकृतिश्च्युतिरेव वा।" अन्यच्च,—"दोहदस्याप्रदानेन गर्भो दोषमवाप्नुयात्" इति ॥ ६ ॥

क्रमेणेति। सा सुदक्षिणा क्रमेण दोहदव्यथाञ्च निस्तीर्य प्रचीयमानावयवा पुष्यमाणावयवा सती। पुराणपत्राणाम् अपगमात् नाशात् अनन्तरं सन्नद्धाः सञ्जाताः प्रत्यग्रत्वात् मनोज्ञाः पल्लवाः यस्याः सा लता इव रराज ॥ ७ ॥

लक्षणान्तरं वर्णयति,—

दिनेष्विति। दिनेषु दोहददिवसेषु गच्छत्सु नितान्तपीवरम् अतिस्थूलम्। आ समन्तात् नीले मुखे चूचुके यस्य तत् तदीयं स्तनद्वयं भ्रमरैः अभिलीनयोः अभिव्याप्तयोः सुजातयोः सुन्दरयोः पङ्कजकोशयोः पद्ममुकुलयोः श्रियं तिरश्चकार। अत्र वाग्भटः,—"अम्लेष्टता स्तनौ पीनौ श्वेतान्तौ कृष्णचूचुकौ" इति ॥ ८ ॥

निधानगर्भामिव सागराम्बरां
शमीमिवाभ्यन्तरलीनपावकाम्।
नदीमिवान्तःसलिलां सरस्वतीं
नृपः ससत्त्वां महिषीममन्यत ॥९॥
प्रियानुरागस्य मनःसमुन्नतेः
भुजार्जितानाञ्च दिगन्तसम्पदाम्।
यथाक्रमं पुंसवनादिकाः क्रियाः
धृतेश्च धीरः सदृशीर्व्यधत्त सः ॥१०॥

निधानेति। नृपः ससत्त्वाम् आपन्नसत्त्वां गर्भिणीम् इत्यर्थः। "आपन्नसत्त्वा स्याद् गुर्विण्यन्तर्वत्नी च गर्भिणी" इत्यमरः। महिषीं निधानं निधिः गर्भे यस्याः तां सागराम्बरां समुद्रवसनां भूमिमिव इत्यर्थः। "भूतधात्री रत्नगर्भा विपुला सागराम्बरा" इति कोषः। अभ्यन्तरे लीनः पावकः यस्याः तां शमीम् इव। शमीतरौ वह्निरस्ति इत्यत्र लिङ्गं शमीगर्भादग्निं जनयतीति। अन्तःसलिलाम् अन्तर्गतजलां सरस्वतीं नदीम् इव अमन्यत। एतेन गर्भस्य भाग्यवत्त्वतेजस्वित्वपावनत्वानि विवक्षितानि ॥ ९ ॥

प्रियेति। धीरः सः राजा प्रियायाम् अनुरागस्य स्नेहस्य मनसः समुन्नतेः औदार्य्यस्य। भुजेन भुजबलेन करेण वा अर्जितानाम्, न तु वाणिज्यादिना। दिगन्तेषु सम्पदाम्। धृतेः पुत्रो मे भविष्यतीति सन्तोषस्य च। "धृतिर्योगान्तरे धैर्य्ये धारणाध्वरतुष्टिषु" इति विश्वः। सदृशीः अनुरूपाः। पुमान् सूयते अनेनेति पुंसवनम्। तत् आदिः यासां ताः क्रियाः

सुरेन्द्रमात्राश्रितगर्भगौरवात्
प्रयत्नमुक्तासनया गृहागतः।
तयोपचाराञ्जलिखिन्नहस्तया
ननन्द पारिप्लवनेत्रया नृपः॥ ११ ॥

कुमारभृत्याकुशलैरनुष्ठिते
भिषग्भिराप्तैरथ गर्भभर्मणि।
पतिः प्रतीतः प्रसवोन्मुखीं प्रियां
ददर्श काले दिवमभ्रितामिव ॥१२॥

यथाक्रमं क्रममनतिक्रम्य व्यधत्त कृतवान्। आदिशब्देन अनवलोभनसीमन्तोन्नयने गृह्येते। अत्र मासि द्वितीये तृतीये वा पुंसवनं, यदाह—"पुंसा नक्षत्रेण चन्द्रमा युक्तः स्यात्" इति पारस्करः। "चतुर्थेऽनवलोभनम्" इति आश्वलायनः। "षष्ठेऽष्टमे वा सीमन्तोन्नयनम्" इति याज्ञवल्क्यः॥ १०॥

सुरेन्द्रमात्रेति। गृहागतः नृपः सुरेन्द्राणां लोकपालानां मात्राभिः अंशैः आश्रितस्य अनुप्रविष्टस्य गर्भस्य गौरवात् भारात् प्रयत्नेन मुक्तासनया आसनादुत्थितया इत्यर्थः। उपचारस्य अञ्जलौ अञ्जलिकरणे खिन्नहस्तया पारिप्लवनेत्रया तरलाक्ष्या। "चञ्चलं तरलं चैव पारिप्लवपरिप्लवे" इत्यमरः। तया सुदक्षिणया ननन्द। "सुरेन्द्रमात्राश्रित" इत्यत्र मनुः,—"अष्टाभिश्च सुरेन्द्राणां मात्राभिर्निर्मितो नृपः" इति॥ ११॥

कुमारेति। अथ कुमारभृत्या बालचिकित्सा। "संज्ञायां समजनिषद—" इत्यादिना क्यप्। तस्यां कुशलैः कृतिभिः। "कृती कुशलः" इत्यमरः। आप्तैः हितैः भिषग्भिः वैद्यैः।

ग्रहैस्ततः पञ्चभिरुच्चसंश्रयै-
रसूर्य्यगैः सूचितभाग्यसम्पदम्।
असूत पुत्रं समये शचीसमा
त्रिसाधना शक्तिरिवार्थमक्षयम् ॥१३॥

"भिषग्वैद्यौ चिकित्सकौ" इत्यमरः। गर्भस्य भर्म्मणि भरणे। "भरणे पोषणे भर्म्म" इति हैमः। "भृतिर्भर्म्म" इति शाश्वतः। भृञो मनिच्प्रत्ययः। गर्भकर्म्मणीति पाठे गर्भाधानप्रतीतावौचित्यभङ्गः अनुष्ठिते कृते सति काले दशमे मासि। अन्यत्र ग्रीष्मावसाने प्रसवस्य गर्भमोचनस्य उन्मुखीम् आसन्नप्रसवाम् इत्यर्थः। "स्यादुत्पादे फले पुष्पे प्रसवो गर्भमोचने" इत्यमरः। प्रियां भार्य्याम्। अभ्राणि अस्याः सञ्जातानि अभ्रिता ताम्। "तदस्य सञ्जातं तारकादिभ्य इतच्" इति इतच्प्रत्ययः। दिवम् इव। पतिः भर्त्ता प्रतीतः हृष्टः सन्। "ख्याते हृष्टे प्रतीतः" इत्यमरः। ददर्श दृष्टवान् ॥ १२ ॥

ग्रहैरिति। ततः शच्या इन्द्राण्या समा। "पुलोमजा शचीन्द्राणी" इत्यमरः। सा सुदक्षिणा समये प्रसूतिकाले सति, दशमे मासि इत्यर्थः। "दशमे मासि जायते" इति श्रुतेः। उच्चसंश्रयैः उच्चसंस्थैः तुङ्गस्थानगैः असूर्य्यगैः अनस्तमितैः केचित् यथासम्भवं पञ्चभिः ग्रहैः सूचिता भाग्यसम्पद् यस्य तं पुत्रम्। त्रीणि प्रभावमन्त्रोत्साहात्मकानि साधनानि उत्पादकानि यस्याः सा त्रिसाधना शक्तिः। "शक्तयस्तिस्रः प्रभावोत्साहमन्त्रजाः" इत्यमरः। अक्षयम् अर्थम् इव असूत। "षूङ् प्राणिगर्भविमोचने" इत्यात्मनेपदिषु पठ्यते। तस्माद्धातोः कर्त्तरि, लङ्। अत्रेदमनुसन्धेयम्,—"अजवृषभमृगाङ्गनाकुलीराः झष-

दिशः प्रसेदुर्मरुतो ववुः सुखाः
प्रदक्षिणार्चिर्हविरग्निराददे ।
बभूव सर्वं शुभशंसि तत्क्षणं
भवो हि लोकाभ्युदयाय तादृशाम् ॥१४॥

वणिजौ च दिवाकरादितुङ्गाः। दशशिखिमनुयुक्तिथीन्द्रियांशैस्त्रिनवकविंशतिभिश्च तेऽस्तनीचाः" ॥ इति । सूर्य्यादीनां सप्तानां ग्रहाणां मेषवृषभादयो राशयः श्लोकोक्तक्रमविशिष्टाः, उच्चस्थानानि स्वस्वतुङ्गापेक्षया सप्तमस्थानानि च नीचानि । तत्रोच्चेष्वपि दशमादयो राशित्रिंशांशाः यथाक्रमम् उच्चेषु परमोच्चा नीचेषु परमनीचा इति जातकश्लोकार्थः । अत्रांशस्त्रिंशो भागः। यथाह नारदः,—"त्रिंशद्भागात्मकं लग्नम्" इति । सूर्य्यप्रत्यासत्तिर्ग्रहाणामस्तमयो नाम । तदुक्तं लघुजातके,—"रविणास्तमयो योगो वियोगस्तूदयो भवेत्" इति । ते च स्वोच्चस्थाः फलन्ति नास्तगा नापि नीचगाः। तदुक्तं राजमृगाङ्के,—"स्वोच्चे पूर्णं स्वर्क्षकेऽर्द्धं सुहृद्भे पादं द्विड्भेऽल्पं शुभं खेचरेन्द्रः। नीचस्थायी नास्तगो वा न किञ्चित् पादं नूनं स्वत्रिकोणे ददाति।" इति। तदिदमाह कविः,—उच्चसंश्रयैरसूर्य्यगैः इति च। एवं सति यस्य जन्मकाले पञ्चप्रभृतयो ग्रहाः स्वोच्चस्थाः स एव तुङ्गो भवति। तदुक्तं कूटस्थीये,—सुखिनः प्रकृष्टकार्य्या राजप्रतिरूपकाश्च राजानः एकद्वित्रिचतुर्भिर्जायन्तेऽतःपरं दिव्याः" इति । तदिदमाह—पञ्चभिरिति ॥१३॥

दिश इति। तत्क्षणं तस्मिन् क्षणे। "कालाध्वनोरत्यन्तसंयोगे" द्वितीया । दिशः प्रसेदुः प्रसन्नाः बभूवुः। मरुतः वाताः सुखाः मनोहराः ववुः। अग्निः प्रदक्षिणार्चिः सन् हविः

अरिष्टशय्यां परितो विसारिणा
सुजन्मनस्तस्य निजेन तेजसा ।
निशीथदीपाः सहसा हतत्विषो
बभूवुरालेख्यसमर्पिता इव ॥ १५ ॥
जनाय शुद्धान्तचराय शंसते
कुमारजन्मामृतसम्मिताक्षरम् ।
अदेयमासीत् त्रयमेव भूपतेः
शशिप्रभं छत्रमुभे च चामरे ॥ १६ ॥

माददे स्वीचकार, इत्थं सर्वं शुभशंसि शुभसूचकं बभूव। तथा हि—तादृशां रघुप्रकाराणां भवः जन्म लोकाभ्युदयाय भवति इति शेषः, ततो देवा अपि सन्तुष्टाः इत्यर्थः ॥ १४ ॥

अरिष्टेति। "अरिष्टं सूतिकागृहम्" इत्यमरः। अरिष्टे सूतिकागृहे शय्यां तल्पं परितः अभितः। "अभितःपरितः समयानिकषाहाप्रतियोगेषु दृश्यते" इति द्वितीया। विसारिणा सुजन्मनः शोभनोत्पत्तेः। "जनुर्जननजन्मानि जनिरुत्पत्तिरुद्भवः" इत्यमरः। तस्य शिशोः निजेन नैसर्गिकेण तेजसा सहसा हतत्विषः क्षीणकान्तयः निशीथदीपाः अर्द्धरात्रप्रदीपाः। "अर्द्धरात्रनिशीथौ द्वौ" इत्यमरः। आलेख्यसमर्पिताः चित्रार्पिताः इव बभूवुः। निशीथशब्दो दीपानां प्रभाधिक्यसम्भावनार्थः ॥१५॥

जनायेति। भूपतेः दिलीपस्य अमृतसम्मिताक्षरम् अमृतसमानाक्षरम्। "सरूपसमसम्मिताः" इत्याह दण्डी। कुमारजन्म पुत्रोत्पत्तिं शंसते कथयते शुद्धान्तचराय अन्तःपुरचारिणे जनाय त्रयम् एव अदेयम् आसीत्। किं तत्? शशिप्रभम्

निवातपद्मस्तिमितेन चक्षुषा
नृपस्य कान्तं पिबतः सुताननम्।
महोदधेः पूर इवेन्दुदर्शना-
द्गुरुः प्रहर्षः प्रबभूव नात्मनि॥ १७॥
स जातकर्मण्यखिले तपस्विना
तपोवनादेत्य पुरोधसा कृते।
दिलीपसूनुर्मणिराकरोद्भवः
प्रयुक्तसंस्कार इवाधिकं बभौ॥१८॥

उज्ज्वलं छत्रम्। उभे चामरे च। छत्रादीनां राज्ञः प्रधानाङ्गत्वात् इति भावः॥ १६॥

निवातेति। निवातः निर्वातप्रदेशः। "निवातावाश्रयावातौ" इत्यमरः। तत्र यत् पद्मं तद्वत् स्तिमितेन निष्पन्देन चक्षुषा नेत्रेण कान्तं सुन्दरं सुताननं पुत्रमुखं पिबतः तृष्णया पश्यतः नृपस्य गुरुः उत्कटः प्रहर्षः कर्त्ता, इन्दुदर्शनात् गुरुः महोदधेः पूरः जलौघः इव। आत्मनि शरीरे न प्रबभूव स्थातुं न शशाक, अन्तः न माति स्म इति यावत्, न ह्यल्पाधारे अधिकं मीयते इति भावः। यद्वा हर्षः आत्मनि स्वस्मिन् विषये न प्रबभूव। आत्मानं नियन्तुं न शशाक, किन्तु वहिर्निर्जगाम इत्यर्थः॥१७॥

स इति। सः दिलीपसूनुः। तपस्विना पुरोधसा पुरोहितेन। "पुरोधास्तु पुरोहितः" इत्यमरः। वशिष्ठेन। तपस्वित्वात् तदनुष्ठितं कर्म सवीर्य्यं स्यात् इति भावः। तपोवनात् एत्य आगत्य। अखिले समग्रे जातकर्मणि जातस्य कर्त्तव्यसंस्कारविशेषे कृते सति। प्रयुक्तः संस्कारः शाणोल्लेखनादिः

सुखश्रवा मङ्गलतूर्य्यनिस्वनाः
प्रमोदनृत्यैः सह वारयोषिताम् ।
न केवलं सद्मनि मागधीपतेः
पथि व्यजृम्भन्त दिवौकसामपि ॥१९॥

न संयतस्तस्य बभूव रक्षितु-
र्विसर्जयेद् यं सुतजन्महर्षितः ।
ऋणाभिधानात् स्वयमेव केवलं
तदा पितॄणां मुमुचे स बन्धनात् ॥२०॥

स्य सः तथोक्तः । आकरोद्भवः खनिप्रभवः । “खनिः स्त्रिया-
ाकरः स्यात्” इत्यमरः । मणिः इव । अधिकं बभौ वशिष्ठ-
स्यप्रभावात् तेजिष्ठोऽभूत् इत्यर्थः । अत्र मनुः,—प्राङ्नाभि-
र्द्धनात् पुंसो जातकर्म विधीयते” इति ॥ १८ ॥

सुखश्रवा इति । सुखः सुखकरः श्रवः श्रवणं येषां ते सुख-
वाः श्रुतिसुखाः इत्यर्थः । मङ्गलतूर्य्यनिस्वना मङ्गलवाद्य-
नयः वारयोषितां वेश्यानाम् । “वारस्त्री गणिका वेश्या रूपा-
ीवा” इत्यमरः । प्रमोदनृत्यैः हर्षनर्त्तनैः सह मागधीपतेः
लीपस्य सद्मनि केवलं गृहे एव न व्यजृम्भन्त । किन्तु द्यौः
कः येषां ते दिवौकसः देवाः । पृषोदरादित्वात् साधुः । तेषां
ये आकाशेऽपि व्यजृम्भन्त । तस्य देवांशत्वात् देवोपकारि-
ाच्च देवदुन्दुभयोऽपि नेदुः इति भावः ॥ १९ ॥

नेति । रक्षितुः सम्यक्पालनशीलस्य तस्य दिलीपस्य ।
त एव चौराद्यभावात्, संयतः बद्धः न बभूव न अभूत् ।
ं तेनात आह,—विसर्जयेदिति । सुतजन्मना हर्षितः तोषितः

श्रुतस्य यायादयमन्तमर्भक-
स्तथा परेषां युधि चेति पार्थिवः ।
अवेक्ष्य धातोर्गमनार्थमर्थवित्
चकार नाम्ना रघुमात्मसम्भवम् ॥२१॥
पितुः प्रयत्नात् स समग्रसम्पदः
शुभैः शरीरावयवैर्दिने दिने ।

सन्, यं बद्धं विसर्जयेत् विमोचयेत् । किन्तु सः राजा तदा पितृणाम् ऋणाभिधानात् बन्धनात् केवलम् एकं यथा तथा। स्वयम् एव एक एव इत्यर्थः । "केवलः कृत्स्न एकश्च केवलश्चाव-धीरितः" इति शाश्वतः । मुमुचे । कर्मकर्त्तरि लिट्। स्वयमेव मुक्तः इत्यर्थः । अस्मिन्नर्थे "एष वा अनृणो यः पुत्री" इति श्रुतिः प्रमाणम् ॥ २० ॥

श्रुतस्येति । अर्थवित् शब्दार्थज्ञः पार्थिवः पृथिवीश्वरः दिलीपः । अयम् अर्भकः बालकः श्रुतस्य शास्त्रस्य अन्तं पारं यायात् । तथा युधि परेषां शत्रूणामन्तं पारं च यायात् यातुं शक्नुयात् इत्यर्थः । "शकि लिङ् च" इति शक्यार्थे लिङ् । इति हेतोः धातोः "अघिवघिलघिगत्यर्थाः" इति लघिधातोः गमनाख्यम् अर्थम् अर्थवित्त्वात् अवेक्ष्य आलोच्य आत्मसम्भवं पुत्रं नाम्ना रघुं चकार । "लङ्घिवङ्घ्योर्न लोपश्च" इत्युप्रत्यये "बालमूललघ्वलमङ्गुलीनां वा लो रत्वमापद्यते" इति वैकल्पिके रेफादेशे रघुरिति रूपं सिद्धम् । अत्र शङ्कः,— "अशौचे तु व्यतिक्रान्ते नामकर्म विधीयते" इति ॥ २१ ॥

पितुरिति । सः रघुः समग्रसम्पदः पूर्णलक्ष्मीकस्य पितुः दिलीपस्य प्रयत्नात् शुभैः मनोहरैः शरीरावयवैः । हरिद

पुपोष वृद्धिं हरिदश्वदीधिते-
रनुप्रवेशादिव बालचन्द्रमाः ॥२२॥
उमावृषाङ्कौ शरजन्मना यथा
यथा जयन्तेन शचीपुरन्दरौ ।
तथा नृपः सा च सुतेन मागधी
ननन्दतुस्तत्सदृशेन तत्समौ ॥२३॥
रथाङ्गनाम्नोरिव भावबन्धनं
बभूव यत् प्रेम परस्पराश्रयम् ।

दीधितेः सूर्यरश्मेः । "भास्वद्विवस्वत्सप्ताश्वहरिदश्वोष्णरश्मयः" इत्यमरः । अनुप्रवेशात् बालचन्द्रमा इव । दिने दिने प्रतिदिनम् । "नित्यवीप्सयोः" इति द्विर्वचनम् । वृद्धिं पुपोष । अत्र वराहसंहितावचनम्,—"सलिलमये शशिनि रवेर्दीधितयो मूर्च्छितास्तमो नैशम् । क्षपयन्ति दर्पणोदरनिहिता इव मन्दिरस्यान्तः" ॥ इति ॥ २२ ॥

उमेति । उमावृषाङ्कौ पार्वतीवृषभध्वजौ शरजन्मना कार्त्तिकेयेन । "कार्त्तिकेयो महासेनः शरजन्मा षडाननः" इत्यमरः । यथा ननन्दतुः, शचीपुरन्दरौ जयन्तेन पाकशासनिना । "जयन्तः पाकशासनिः" इत्यमरः । यथा ननन्दतुः, तथा तत्समौ ताभ्याम् उमावृषाङ्काभ्यां शचीपुरन्दराभ्यां च समौ समानौ सा मागधी नृपश्च तत्सदृशेन ताभ्यां कुमारजयन्ताभ्यां सदृशेन सुतेन ननन्दतुः । मागधी प्राक् व्याख्याता ॥ २३ ॥

रथाङ्गेति । रथाङ्गनाम्नी च रथाङ्गनामा च रथाङ्गनामानौ चक्रवाकौ । "पुमान् स्त्रिया" इत्येकशेषः । तयोः इव, तयोः

विभक्तमप्येकसुतेन तत् तयोः
परस्परस्योपरि पर्य्यचीयत ॥२४॥
उवाच धात्र्या प्रथमोदितं वचो
ययौ तदीयामवलम्ब्य चाङ्गुलिम् ।
अभूच्च नम्रः प्रणिपातशिक्षया
पितुर्मुदं तेन ततान सोऽर्भकः ॥२५॥
तमङ्कमारोप्य शरीरयोगजैः
सुखैर्निषिञ्चन्तमिवामृतं त्वचि ।

दम्पत्योः भावबन्धनं हृदयाकर्षकं परस्पराश्रयम् अन्योन्यविष यत् प्रेम बभूव, तत् एकेन केवलेन ताभ्याम् अन्येन वा । "ए मुख्यान्यकेवलाः" इत्यमरः । सुतेन विभक्तम् अपि कृतविभाम अपि, परस्परस्योपरि पर्य्यचीयत ववृधे । कर्मकर्त्तरि लिट अकृत्रिमत्वात् स्वयमेव उपचितम् इत्यर्थः । यदेकाधारं व तदाधारद्वये विभज्यमानं क्षीयते । अत्र तु तयोः प्रागेकैकक कमेकैकविषयं प्रेम सम्प्रति द्वितीयविषयलाभेऽपि नाक्षीय प्रत्युतोपचितमेवाभूत् इति भावः ॥ २४ ॥

उवाचेति । सः अर्भकः शिशुः । "पोतः पाकोऽर्भ डिम्भः पृथुकः शावकः शिशुः" इत्यमरः । धात्र्या उपमात्र "धात्री जनन्यामलकी वसुमत्युपमातृषु" इति विश्वः । प्रथम उदितम् उपदिष्टं वचः उवाच । तदीयाम् अङ्गुलिम् अवलम्ब ययौ च । प्रणिपातस्य शिक्षया उपदेशेन नम्रः अभूत् च इति यत् तेन पितुः मुदं ततान ॥ २५ ॥

तमिति । शरीरयोगजैः सुखैः त्वचि त्वगिन्द्रिये अम

उपान्तसम्मीलितलोचनो नृप-
श्चिरात् सुतस्पर्शरसज्ञतां ययौ ॥२६॥

अमंस्त चानेन परार्ध्यजन्मना
स्थितेरभेत्ता स्थितिमन्तमन्वयम् ।
स्वमूर्त्तिभेदेन गुणाग्र्यवर्त्तिना
पतिः प्रजानामिव सर्गमात्मनः ॥२७॥

स वृत्तचूलश्चलकाकपक्षकै-
रमात्यपुत्रैः सवयोभिरन्वितः ।

षिञ्चन्तं वर्षन्तम् इव तं पुत्रम् अङ्कम् आरोप्य मुदाविर्भावात् ान्तयोः प्रान्तयोः सम्मीलितलोचनः सन्, नृपः चिरात् स्पर्शरसज्ञतां ययौ । रसः स्वादः ॥ २६ ॥

अमंस्तेति । स्थितेः अभेत्ता मर्य्यादापालकः सः नृपः परार्ध्य- मना उत्कृष्टजन्मना अनेन रघुणा अन्वयं वंशं, प्रजानां तः ब्रह्मा । गुणाः सत्त्वादयः, तेषु अग्र्येण मुख्येन, सत्त्वेन ते व्याप्रियते इति गुणाग्र्यवर्त्ती तेन, स्वस्य मूर्त्तिभेदेन अव- रविशेषेण विष्णुना आत्मनः सर्गं सृष्टिम् इव । स्थितिमन्तं ष्ठावन्तम् अमंस्त च मन्यते स्म च । मन्यतेः अनुदात्तत्वात् प्रतिषेधः । अत्र उपमानोपमेययोः इतरेतरविशेषणानि रितरत्र योज्यानि । तत्र रघुपक्षे गुणाः विद्याविनयादयः । णोऽप्रधाने रूपादौ मौर्व्यां सूदे वृकोदरे । शुक्ले सत्त्वादि- आदिविद्यादिहरितादिषु"॥ इति विश्वः । शेषं सुगमम् ॥२७॥

स इति । "चूड़ा कार्य्या द्विजातीनां सर्वेषामेव धर्म्मतः । थमेऽब्दे तृतीये वा कर्त्तव्या श्रुतिचोदनात्"॥ इति मनुस्मरणात्

लिपेर्यथावद्ग्रहणेन वाङ्मयं
नदीमुखेनेव समुद्रमाविशत् ॥२८॥
अथोपनीतं विधिवद्विपश्चितो
विनिन्युरेनं गुरवो गुरुप्रियम्।
अवन्ध्ययत्नाश्च बभूवुरत्र ते
क्रिया हि वस्तूपहिता प्रसीदति ॥२९

तृतीये वर्षे वृत्तचूलः निष्पन्नचूडाकर्म्मा सन्। डलयोरभेदः
रघुः। "प्राप्ते तु पञ्चमे वर्षे विद्यारम्भञ्च कारयेत्" इति
नात् पञ्चमे वर्षे चलकाकपक्षकैः चञ्चलशिखण्डकैः। "बा
तु शिखा प्रोक्ता काकपक्षः शिखण्डकः" इति हलायुधः।
योभिः स्निग्धैः। "स्निग्धो वयस्यः सवयाः" इत्यमरः। अ
पुत्रैः अन्वितः सन्, लिपेः पञ्चाशद्वर्णात्मिकायाः मातृ
यथावत् ग्रहणेन सम्यक् बोधेन उपायभूतेन वाङ्मयं शब्दजा
नद्याः मुखं द्वारम्। "मुखं तु वदने मुख्यारम्भे द्वाराभ्युपाय
इति यादवः। तेन नदीमुखेन कश्चित् मकरादिः समुद्रम्
आविशत् प्रविष्टः ज्ञातवान् इत्यर्थः ॥ २८ ॥

अथेति। "गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनाय
गर्भादेकादशे राज्ञो गर्भाच्च द्वादशे विशः॥" इति मनु
णात्। अथ गर्भैकादशे अब्दे विधिवत् उपनीतं गुरुप्रिय
रघुं विपश्चितः विद्वांसः गुरवः विनिन्युः शिक्षितवन्तः। ते
अत्र अस्मिन् रघौ अवन्ध्ययत्नाश्च बभूवुः। तथा हि,
शिक्षा। "क्रिया तु निष्कृतौ शिक्षाचिकित्सोपायकर्म्मसु"
यादवः। वस्तुनि पात्रभूते उपहिता प्रयुक्ता प्रसीदति फ
"क्रिया हि द्रव्यं विनयति नाऽद्रव्यम्" इति कौटिल्यः ॥ २

धियः समग्रैः स गुणैरुदारधीः
क्रमाच्चतस्रश्चतुरर्णवोपमाः ।
ततार विद्याः पवनातिपातिभि-
र्दिशो हरिद्भिर्हरितामिवेश्वरः ॥३०॥
त्वचं स मेध्यां परिधाय रौरवी-
मशिक्षतास्त्रं पितुरेव मन्त्रवत् ।
न केवलं तद्गुरुरेकपार्थिवः
क्षितावभूदेकधनुर्धरोऽपि सः ॥३१॥

धिय इति । अत्र कामन्दकः,—"शुश्रूषा श्रवणञ्चैव ग्रहणं
रणं तथा । ऊहोऽपोहार्थविज्ञानं तत्त्वज्ञानञ्च धीगुणाः ॥"
ति "आन्वीक्षिकी त्रयी वार्त्ता दण्डनीतिश्च शाश्वती । एता
द्याश्चतस्रस्तु लोकसंस्थितिहेतवः ॥" इति च उदारधीः उत्-
ष्टबुद्धिः सः रघुः समग्रैः धियः गुणैः । चत्वारः अर्णवाः
पमा यासां ताः चतुरर्णवोपमाः । "तद्धितार्थोत्तरपदसमाहारे
" इति उत्तरपदसमासः । चतस्रः विद्याः । हरितां दिशाम्
श्वरः सूर्य्यः पवनातिपातिभिः हरिद्भिः निजाश्वैः । "हरित्
कुभि वर्णे च तृणवाजिविशेषयोः" इति विश्वः । चतस्रः दिशः
व, क्रमात् ततार । चतुरर्णवोपमत्वं दिशामपि द्रष्टव्यम् ॥३०॥
त्वचमिति । सः रघुः । "कार्ष्णरौरववास्तानि चर्म्माणि
ह्मचारिणः । वसीरन्नानुपूर्व्येण शाणक्षौमाविकानि च ॥"
इति मनुस्मरणात् मेध्यां शुद्धां रौरवीं रुरुसम्बन्धिनीम् । "रुरु-
महाकृष्णसारः" इति यादवः । त्वचं चर्म्म परिधाय वसित्वा
न्त्रवत् समन्त्रकम् अस्त्रम् आग्नेयादिकं पितुः एव उपा-

महोक्षतां वत्सतरः स्पृशन्निव
द्विपेन्द्रभावं कलभः श्रयन्निव।
रघुः क्रमाद्यौवनभिन्नशैशवः
पुपोष गाम्भीर्य्यमनोहरं वपुः ॥२२॥

अथास्य गोदानविधेरनन्तरं
विवाहदीक्षां निरवर्त्तयद्गुरुः।
नरेन्द्रकन्यास्तमवाप्य सत्पतिं
तमोनुदं दक्षसुता इवाबभुः ॥२३॥

न्यायात् अशिक्षत अभ्यस्तवान्। "भाख्यातोपयोगे" इत्यपादान
संज्ञा। पितुरेव इत्यवधारणम् उपपादयति,—नेति। तद्गुरु
एकः अद्वितीयः पार्थिवः केवलं पृथिवीश्वरः एव न अभूत्
किन्तु क्षितौ सः दिलीपः एकः धनुर्धरः अपि अभूत् ॥ २१ ॥

महोक्षतामिति। रघुः क्रमात् यौवनेन भिन्नशैशवः निरस्त
शिशुभावः सन्। महान् उक्षा महोक्षः महर्षभः। "अचतुर—"
इत्यादिसूत्रेण निपातनात् अकारान्तत्वम्। तस्य भावः तत्तां,
तां, स्पृशन् गच्छन् वत्सतरः दम्यः इव। "दम्यवत्सतरौ समौ"
इत्यमरः। द्विपेन्द्रभावं महागजत्वं श्रयन् व्रजन् कलभः करि
पोतः इव। गाम्भीर्य्येण अचापलेन मनोहरं वपुः पुपोष ॥२२॥

अथेति। "गौर्नादित्ये बलीवर्दे क्रतुभेदर्षिभेदयोः। स्त्री
तु स्याद्दिशि भारत्यां भूमौ च सुरभावपि। पुंस्त्रियोः स्वर्ग
वज्राम्बुरश्मिदृग्बाणलोमसु" ॥ इति केशवः। गावः लोमानि
केशाः दीयन्ते खण्ड्यन्ते अस्मिन् इति व्युत्पत्त्या गोदानं नाम
ब्राह्मणादीनां षोड़शादिषु वर्षेषु कर्त्तव्यं केशान्ताख्यं कर्म

युवा युगव्यायतबाहुरंसलः
कपाटवक्षाः परिणद्धकन्धरः।
वपुःप्रकर्षादजयद्गुरुं रघु-
स्तथापि नीचैर्विनयाददृश्यत ॥३४॥

ति। तदुक्तं मनुना,—"केशान्तः षोडशे वर्षे ब्राह्मणस्य विधी-
ते। राजन्यबन्धोर्द्वाविंशे वैश्यस्य द्व्यधिके ततः"॥ इति।
व गुरुः पिता। "गुरुर्गीष्पतिपित्रादौ" इत्यमरः। अस्य गो-
नविधेः अनन्तरं विवाहदीक्षां निरवर्त्तयत्, कृतवान् इत्यर्थः।
थ नरेन्द्रकन्याः तं रघुं दक्षस्य सुताः रोहिण्यादयः तमोनुदं
द्रम् इव। "तमोनुदोऽग्निचन्द्रार्काः" इति विश्वः। सत्पतिम्
वाप्य आबभुः। रघुरपि तमोनुत्। अत्र मनुः,—"वेदानधीत्य
दौ वा वेदं वापि यथाक्रमम्। अविप्लुतब्रह्मचर्य्यो गृहस्थाश्रम-
ाविशेत्॥" इति॥३३॥

सम्प्रति यौवराज्ययोग्यतामाह,—

युवेति। युवा युगो नाम धुर्य्यस्कन्धगः सच्छिद्रप्रान्तो
नाङ्गभूतो दारुविशेषः। "यानाद्यङ्गे युगः पुंसि युगं युग्मे
तादिषु" इत्यमरः। युगवत् व्यायतौ दीर्घौ बाहू यस्य सः। अंसौ
स्य स्तः इति अंसलः बलवान्। मांसलश्चेति वृत्तिकारः।
ालवान् मांसलोऽंसलः" इत्यमरः। "वत्सांसाभ्यां कामबले"
ति लच्प्रत्ययः। कपाटवक्षाः परिणद्धकन्धरः विशालग्रीवः।
ारिणाहो विशालता" इत्यमरः। रघुः वपुषः प्रकर्षात्
ाधिक्यात् यौवनकृतात् वपुःप्रकर्षात् गुरुं पितरम् अजयत्,
ापि विनयात् नम्रत्वेन नीचैः अल्पकः अदृश्यत। अनौद्धत्यञ्च
ाचरितम्॥ ३४॥

ततः प्रजानां चिरमात्मना धृतां
नितान्तगुर्वीं लघयिष्यता धुरम् ।
निसर्गसंस्कारविनीत इत्यसौ
नृपेण चक्रे युवराजशब्दभाक् ॥३५॥
नरेन्द्रमूलायतनादनन्तरं
तदास्पदं श्रीर्युवराजसंज्ञितम् ।
अगच्छदंशेन गुणाभिलाषिणी
नवावतारं कमलादिवोत्पलम् ॥ ३६ ॥

सम्प्रति तस्य यौवराज्यमाह—

तत इति । ततः आत्मना चिरं धृतां नितान्तगुर्वीम् । "वोतो
गुणवचनात्" इति ङीष् । प्रजानां धुरं पालनप्रयासं लघयिष्यता
लघुं करिष्यता । "तत् करोति तदाचष्टे" इति लघुशब्दात् णिच्
ततो "लृटः सद्वा" इति शतृप्रत्ययः । नृपेण दिलीपेन असौ रघुः
निसर्गेण स्वभावेन संस्कारेण शास्त्राभ्यासजनितवासनया च
विनीतः नम्रः इति हेतोः । युवराज इति शब्दं भजतीति
तथोक्तः । "भजो ण्विः" इति ण्विप्रत्ययः । चक्रे कृतः । "द्विविधो
विनयः—स्वाभाविकः कृत्रिमश्च" इति कौटिल्यः । तदुभय-
सम्पन्नत्वात् पुत्रं युवराजं चकार इत्यर्थः । अत्र कामन्दकः,—
"विनयोपग्रहान् भूत्यै कुर्वीत नृपतिः सुतान् । अविनीतकुमारं
हि कुलमाशु विशीर्य्यते । विनीतमौरसं पुत्रं यौवराज्येऽभि-
षेचयेत् ॥" इति ॥ ३५ ॥

नरेन्द्रेति । गुणान् विनयादीन् सौरभ्यादीन् च अभिलष-
तीति गुणाभिलाषिणी श्रीः राजलक्ष्मीः पद्माश्रया च नरेन्द्र-

विभावसुः सारथिनेव वायुना
घनव्यपायेन गभस्तिमानिव ।
बभूव तेनातितरां सुदुःसहः
कटप्रभेदेन करीव पार्थिवः ॥ ३७ ॥

नियुज्य तं होमतुरङ्गरक्षणे
धनुर्धरं राजसुतैरनुद्रुतम् ।
अपूर्णमेकेन शतक्रतूपमः
शतं क्रतूनामपविघ्नमाप सः ॥ ३८ ॥

दिलीपः एव मूलायतनं प्रधानस्थानं तस्मात् अपादानात् अनन्तरं सन्निहितं, युवराज इति संज्ञा अस्य सञ्जाता युवराजसंज्ञितम्। तारकादित्वात् इतच्प्रत्ययः। आत्मनः पदं स्थानम् आस्पदम्। "आस्पदं प्रतिष्ठायाम्" इति निपातः। सः रघुः इति आस्पदं तदास्पदं, कमलात् चिरोत्पन्नात् नवावतारम् अचिरोत्पन्नम् उत्पलम् इव अंशेन अगच्छत्। स्त्रियो हि यूनि रज्यन्ते इति भावः ॥ ३६ ॥

विभावसुरिति। सारथिना सहायभूतेन। एतत् विशेषणम् उत्तरवाक्येष्वपि अनुषञ्जनीयम्। वायुना विभावसुः वह्निः इव। "सूर्य्यवह्नी विभावसू" इत्यमरः। घनव्यपायेन शरत्समयेन सारथिना गभस्तिमान् सूर्य्यः इव। कटः गण्डः। "गण्डः कटो, मदो दानम्" इत्यमरः। तस्य प्रभेदः स्फुटनं मदोदयः इत्यर्थः, तेन करी इव। पार्थिवः दिलीपः तेन रघुणा अतितराम् अत्यन्तं सुदुःसहः सुष्ठु असह्यः बभूव ॥ ३७ ॥

नियुज्येति। शतक्रतुः इन्द्रः उपमा यस्य सः शतक्रतूपमः

ततः परं तेन मखाय यज्वना
तुरङ्गमुत्सृष्टमनर्गलं पुनः।
धनुर्भृतामग्रत एव रक्षिणां
जहार शक्रः किल गूढ़विग्रहः॥ ३९॥

विषादलुप्तप्रतिपत्ति विस्मितं
कुमारसैन्यं सपदि स्थितञ्च तत्।
वशिष्ठधेनुश्च यदृच्छयागता
श्रुतप्रभावा ददृशेऽथ नन्दिनी॥ ४०॥

सः दिलीपः "शतं वै तुल्या राजपुत्रा देवा आशापालाः" इत्यादिश्रुत्या। राजसुतैः अनुद्रुतम् अनुगतं धनुर्धरं तं रघुं होमतुरङ्गाणां रक्षणे नियुज्य। एकेन क्रतुना अपूर्णम् एकोनं क्रतूनाम् अश्वमेधानां शतम् अपविघ्नम् अपगतविघ्नं यथा तथा आप॥ ३८॥

तत इति। ततः परम् एकोनशतक्रतुप्राप्त्यनन्तरं यज्वना विधिना इष्टवता तेन दिलीपेन पुनः पुनरपि मखाय मखं कर्त्तुम्। "क्रियार्थोपपदस्य—" इत्यादिना चतुर्थी। उत्सृष्टं मुक्तम् अनर्गलम् अप्रतिबन्धम्, अव्याहतस्वैरगतिम् इत्यर्थः। "अपर्य्यावर्त्तयन्तोऽश्वमनुचरन्ति" इति आपस्तम्बस्मरणात्। तुरङ्गं धनुर्भृतां रक्षिणां रक्षकाणाम् अग्रतः एव शक्रः गूढ़विग्रहः सन्। जहार किल। किल इति ऐतिह्ये॥ ३९॥

विषादेति। तत् कुमारसैन्यं कुमारसेना सपदि। विषादः इष्टनाशकृतः मनोभङ्गः। तदुक्तम्,—"विषादश्चेतसो भङ्ग उपायाभावनाशयोः" इति। तेन लुप्ता प्रतिपत्तिः कर्त्तव्यज्ञान

तदङ्गनिस्यन्दजलेन लोचने
प्रमृज्य पुण्येन पुरस्कृतः सताम्।
अतीन्द्रियेष्वप्युपपन्नदर्शनो
बभूव भावेषु दिलीपनन्दनः॥ ४१॥

स पूर्वतः पर्वतपक्षशातनं
ददर्श देवं नरदेवसम्भवः।
पुनः पुनः सूतनिषिद्धचापलं
हरन्तमश्वं रथरश्मिसंयतम्॥ ४२॥

यस्य तत् तथोक्तं, विस्मितम् अञ्जनाशस्य आकस्मिकत्वात् आश्चर्याविष्टं सत् स्मितं तस्मौ च। अथ श्रुतप्रभावा यदृच्छया स्वेच्छया आगता। रघोः स्वप्रसादलब्धत्वात् अनुजिघृक्षया इति भावः। नन्दिनी नाम वशिष्ठधेनुश्च ददृशे। द्वौ चकारौ अविलम्बसूचकौ॥ ४०॥

तदिति। सतां पुरस्कृतः पूजितः दिलीपनन्दनः रघुः पुण्येन तस्याः नन्दिन्याः यत् अङ्गं तस्य निस्यन्दः द्रवः स एव जलं मूत्रम् इत्यर्थः, तेन लोचने प्रमृज्य शोधयित्वा अतीन्द्रियेषु इन्द्रियाणि अतिक्रान्तेषु। "अत्यादयः क्रान्ताद्यर्थे द्वितीयया" इति समासः। "द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषु" इति परवल्लिङ्गताप्रतिषेधात् विशेष्यनिघ्नत्वम्। भावेषु अपि वस्तुषु उपपन्नदर्शनः सम्पन्न-साक्षात्कारशक्तिः बभूव॥ ४१॥

स इति। नरदेवसम्भवः सः रघुः पुनःपुनः सूतेन निषिद्ध-चापलं निवारितौद्धत्यं रथस्य रश्मिभिः प्रग्रहैः। "किरणप्रग्रहौ

शतैस्तमक्ष्णामनिमेषवृत्तिभि-
र्हरिं विदित्वा हरिभिश्च वाजिभिः ।
अवोचदेनं गगनस्पृशा रघुः
स्वरेण धीरेण निवर्त्तयन्निव ॥ ४३ ॥

मखांशभाजां प्रथमो मनीषिभि-
स्त्वमेव देवेन्द्र ! सदा निगद्यसे ।
अजस्रदीक्षाप्रयतस्य मद्गुरोः
क्रियाविघाताय कथं प्रवर्त्तसे ? ॥ ४४ ॥

त्रिलोकनाथेन सदा मखद्विष-
स्त्वया नियम्या ननु दिव्यचक्षुषा ।

रश्मी" इत्यमरः । संयतं बद्धम् अश्वं हरन्तं पर्वतपक्षाणां शातनं छेदकं देवम् इन्द्रं पूर्वतः पूर्वस्यां दिशि ददर्श ॥ ४२ ॥

शतैरिति । रघुः तम् अश्वहर्त्तारम् अनिमेषवृत्तिभिः निमेषव्यापारशून्यैः अक्ष्णां शतैः हरिभिः हरिद्वर्णैः । "हरिर्वाच्यवदाख्यातः हरित्कपिलवर्णयोः" इति विश्वः । वाजिभिः अश्वैश्च हरिम् इन्द्रं विदित्वा । "हरिर्वातार्कचन्द्रेन्द्रयमोपेन्द्रमरीचिषु" इति विश्वः । एनम् इन्द्रं गगनस्पृशा व्योमव्यापिना धीरेण गभीरेण स्वरेण ध्वनिना एव निवर्त्तयन् इव अवोचत् ॥ ४३ ॥

मखेति । हे देवेन्द्र ! मनीषिभिः त्वम् एव मखांशभाजां यज्ञभागभुजां प्रथमः सदा निगद्यसे कथ्यसे, तथापि अजस्रदीक्षायां नित्यदीक्षायां प्रयतस्य मद्गुरोः क्रियाविघाताय क्रतुविघाताय क्रियां विहन्तुम् इत्यर्थः । "तुमर्थाच्च भाववचनात्" इति चतुर्थी । कथं प्रवर्त्तसे ? ॥ ४४ ॥

स चेत् स्वयं कर्मसु धर्मचारिणां
त्वमन्तरायो भवसि च्युतो विधिः ॥ ४५ ॥
तदङ्गमग्र्यं मघवन् ! महाक्रतो-
रमुं तुरङ्गं प्रतिमोक्तुमर्हसि ।
पथः श्रुतेर्दर्शयितार ईश्वरा
मलीमसामाददते न पद्धतिम् ॥ ४६ ॥
इति प्रगल्भं रघुणा समीरितं
वचो निशम्याधिपतिर्दिवौकसाम् ।

त्रिलोकेति । त्रयाणां लोकानां नाथः त्रिलोकनाथः । "तद्धितार्थ—" इत्यादिना उत्तरपदसमासः । तेन त्रिलोकनाथेन त्रैलोक्यनियामकेन दिव्यचक्षुषा अतीन्द्रियार्थदर्शिना त्वया मद्विधाः क्रतुविघातकाः सदा नियम्याः ननु शिक्ष्याः खलु, सः त्वं धर्मचारिणां कर्मसु क्रतुषु स्वयम् अन्तरायः विघ्नः भवसि चेत् विधिः अनुष्ठानं च्युतः हतः, लोके सत्कर्मकथैव अस्तमियात् इत्यर्थः ॥ ४५ ॥

तदिति । हे मघवन् ! तत् तस्मात् कारणात् महाक्रतोः अश्वमेधस्य अग्र्यं श्रेष्ठम् अङ्गं साधनम् अमुं तुरङ्गं प्रतिमोक्तुं प्रतिदातुम् अर्हसि । तथाहि—श्रुतेः पथः दर्शयितारः सन्मार्गप्रदर्शकाः ईश्वराः महान्तः मलीयसां मलिनां पद्धतिं मार्गं न आददते न स्वीकुर्वते, असन्मार्गं नावलम्बन्ते इत्यर्थः । "मलीमसन्तु मलिनं कच्चरं मलदूषितम्" इत्यमरः ॥ ४६ ॥

इतीति । इति रघुणा समीरितं प्रगल्भं वचः निशम्य आकर्ण्य दिवौकसः स्वर्गौकसः । "दिवं स्वर्गेऽन्तरिक्षे च" इति

निवर्त्तयामास रथं सविस्मयः
प्रचक्रमे च प्रतिवक्तुमुत्तरम् ॥ ४७ ॥

यदात्थ राजन्यकुमार! तत्तथा
यशस्तु रक्ष्यं परतो यशोधनैः।
जगत्प्रकाशं तदशेषमिज्यया
भवद्गुरुर्लङ्घयितुं ममोद्यतः ॥ ४८ ॥

हरिर्यथैकः पुरुषोत्तमः स्मृतो
महेश्वरस्त्र्यम्बक एव नापरः।
तथा विदुर्मां मुनयः शतक्रतुं
द्वितीयगामी न हि शब्द एष नः ॥ ४९ ॥

विशः। तेषाम् अधिपतिः देवेन्द्रः रघुप्रभावात् सविस्मयः सन् रथं निवर्त्तयामास;, उत्तरं प्रतिवक्तुं प्रचक्रमे च ॥ ४७ ॥

यदिति। हे राजन्यकुमार! क्षत्रियकुमार! "मूर्द्धाभिषिक्तो राजन्यो बाहुजः क्षत्रियो विराट्" इत्यमरः। यत् वाक्यम् आत्थ ब्रवीषि। "ब्रुवः पञ्चानाम्—" इत्यादिना आहादेशः। तत् तथा सत्यम्, तु किन्तु यशोधनैः अस्मादृशैः परतः शत्रुतः यशः रक्ष्यम्। ततः किमत आह,—भवद्गुरुः त्वत्पिता जगत्प्रकाशं लोकप्रसिद्धम् अशेषं सर्वं मम तत् यशः इज्यया यागेन लङ्घयितुं तिरस्कर्त्तुम् उद्यतः उद्युक्तः ॥ ४८ ॥

किं तत् यश इत्याह,—

हरिरिति। पुरुषेषु उत्तमः इति सप्तमीसमासः। "न निर्द्धारणे" इति षष्ठीसमासनिषेधात्, कर्मधारये तु—"सन्महत्परमो

धनोऽयमस्य: कपिलानुकारिणा
पितुस्त्वदीयस्य मयापहारितः ।
अलं प्रयत्नेन तवात्र मा निधाः
पदं पदव्यां सगरस्य सन्ततौ ॥ ५० ॥
ततः प्रहस्यापभयः पुरन्दरं
पुनर्बभाषे तुरगस्य रक्षिता ।

तमोत्कृष्टाः पूज्यमाने:" इत्युत्तमपुरुष इति स्यात् । यथा हरिः विष्णुः एकः एव पुरुषोत्तमः श्रुतः, यथा च—त्र्यम्बकः शिवः एव महेश्वरः श्रुतः न अपरः, अपरः पुमान् न, तथा मां मुनयः शतक्रतुं विदुः विदन्ति । "विदो लटो वा" इति झेर्जुसादेशः । नः अस्माकं हरिहरयोर्मम च इत्यर्थः, एषः त्रितयः अपि शब्दः द्वितीयगामी न हि । द्वितीयाप्रकरणे गमिगाम्यादीनामुपसंख्यानात् समासः ॥ ४९ ॥

अत इति । यतः अहम् एव शतक्रतुः, अतः त्वदीयस्य पितुः अयं शततमः अश्वः कपिलानुकारिणा कपिलमुनितुल्येन मया अपहारितः अपहृतः । अपहारित इति स्वार्थे णिच् । तव अत्र अश्वे प्रयत्नेन अलं, प्रयत्नो मा कारि इत्यर्थः । निषेध्यस्य निषेधं प्रति करणत्वात् तृतीया । सगरस्य राज्ञः सन्ततेः सन्तानस्य पदव्यां पदं मा निधाः न निधेहि । निपूर्वाद् धाधातोर्लुङ् । "न माङ्योगे" इत्यडागमप्रतिषेधः । अन्यदास्कन्दनं ते विनाशमूलं भवेत् इति भावः ॥ ५० ॥

तत इति । ततः तुरगस्य रक्षिता रघुः प्रहस्य प्रहासं कृत्वा, अपभयः निर्भीकः सन् पुनः पुरन्दरं बभाषे ।

गृहाण शस्त्रं यदि सर्ग एष ते
न खल्वनिर्जित्य रघुं कृती भवान् ॥५१॥
स एवमुक्त्वा मघवन्तमुन्मुखः
करिष्यमाणः सशरं शरासनम्।
अतिष्ठदालीढविशेषशोभिना
वपुःप्रकर्षेण विडम्बितेश्वरः ॥ ५२ ॥
रघोरवष्टम्भमयेन पत्त्रिणा
हृदि क्षतो गोत्रभिदप्यमर्षणः।

किमिति—हे देवेन्द्र! यदि एषः अश्वामोचनरूपः ते तव सर्गः निश्चयः। "सर्गः स्वभावनिर्मोक्षनिश्चयाध्यायसृष्टिषु" इत्यमरः। तर्हि शस्त्रं गृहाण, भवान् रघुं माम् अनिर्जित्य कृतमनेनेति कृती। कृतकृत्यः न खलु। "इष्टादिभ्यश्च" इति इनिप्रत्ययः। रघुमित्यनेनात्मनो दुर्जयत्वं सूचितम् ॥ ५१ ॥

स इति। सः रघुः उन्मुखः सन्। मघवन्तम् इन्द्रम् एवम् उक्त्वा शरासनं चापं सशरं करिष्यमाणः आलीढेन आलीढाख्येन स्थानकभेदेन, विशेषशोभिना अतिशयशोभिना, वपुःप्रकर्षेण देहौन्नत्येन विडम्बितेश्वरः अनुकृतपिनाकी सन्, अतिष्ठत्। आलीढलक्षणमाह यादवः,—"स्थानानि धन्विनां पञ्च तत्र वैशाखमस्त्रियाम्। वितितस्त्यन्तरौ पादौ मण्डलं तोरणाकृति। अन्वर्थं स्यात् समपदम् आलीढन्तु ततोऽग्रतः। दक्षिणे वाममाकुञ्च्य प्रत्यालीढं विपर्ययः" ॥ इति ॥ ५२ ॥

रघोरिति। रघोः अवष्टम्भमयेन स्तम्भरूपेण। "अवष्टम्भः सुवर्णे च स्तम्भप्रारम्भयोरपि" इति विश्वः। पत्त्रिणा बाणेन

नवाम्बुदानीकमुहूर्तलाञ्छने
धनुष्यमोघं समधत्त सायकम् ॥ ५३ ॥
दिलीपसूनोः स बृहद्भुजान्तरं
प्रविश्य भीमासुरशोणितोचितः ।
पपावनास्वादितपूर्वमाशुगः
कुतूहलेनेव मनुष्यशोणितम् ॥ ५४ ॥
हरेः कुमारोऽपि कुमारविक्रमः
सुरद्विपास्फालनकर्कशाङ्गुलौ ।
भुजे शचीपत्रविशेषकाङ्किते
स्वनामचिह्नं निचखान सायकम् ॥५५॥

हृदि हृदये क्षतः विद्धः । अतएव अमर्षणः असहनः, क्रुद्धः इत्यर्थः । गोत्रभित् इन्द्रः अपि । "सन्तावनीयवंशेऽपि गोत्रः क्षौणीधरे मतः" इति विश्वः । नवाम्बुदानाम् अनीकस्य वृन्दस्य मुहूर्तं क्षणमात्रं लाञ्छने चिह्नभूते, धनुषि, दिव्ये धनुषि इत्यर्थः । अमोघम् अवन्ध्यं सायकं बाणं समधत्त संहितवान् ॥ ५३ ॥

दिलीपेति । भीमानां भयङ्कराणाम् असुराणां शोणिते रुधिरे उचितः परिचितः सः इन्द्रमुक्तः आशुगः सायकः दिलीपसूनोः रघोः बृहत् विशालं भुजान्तरं वक्षः प्रविश्य । अनास्वादितपूर्वं पूर्वम् अनास्वादितम् । सुप्सुपेति समासः । मनुष्यशोणितं कुतूहलेन इव पपौ ॥ ५४ ॥

हरेरिति । कुमारस्य स्कन्दस्य विक्रमः इव विक्रमः यस्य सः रघोक्तः । "सप्तम्य पमानपूर्वस्य—" इत्यादिना समासः । कुमारः

जहार चान्येन मयूरपत्रिणा
शरेण शक्रस्य महाशनिध्वजम् ।
चुकोप तस्मै स भृशं सुरश्रियः
प्रसह्य केशव्यपरोपणादिव ॥ ५६ ॥

तयोरुपान्तस्थितसिद्धसैनिकं
गरुत्मदाशीविषभीमदर्शनैः ।
बभूव युद्धं तुमुलं जयैषिणो-
रधोमुखैरूर्ध्वमुखैश्च पत्रिभिः ॥ ५७ ॥

रघुः अपि सुरद्विपस्य ऐरावतस्य आस्फालनेन कर्कशाः कठ्-लाः यस्य सः, तस्मिन्; अथवा: पत्रविशेषकैः चिह्निते शचीपत्रविशेषकाङ्किते हरेः इन्द्रस्य भुजे सनामचिह्नं सनामाङ्कितं सायकं निचखान निखातवान्। निष्कपटपराक्रमे लब्धाःमहानभिभवः इति भावः ॥ ५५ ॥

अजहारेति। अन्येन मयूरपत्रिणा मयूरपक्षवता शरेण शक्रस्य इन्द्रस्य महाशनिध्वजं महान्तम् अशनिरूपं ध्वजं जहार चिच्छेद च। सः शक्रः, सुरश्रियः प्रसह्य बलात्कारकेशानां व्यपरोपणात् अवतारणात् छेदनात् इव। तस्मै रघवे भृशम् अत्यर्थं चुकोप, तं हन्तुमिवेष इत्यर्थः। "क्रुधद्रुह—" इत्यादिना सम्प्रदानात् चतुर्थी ॥ ५६ ॥

तयोरिति। जयैषिणोः अन्योन्यजयाकाङ्क्षिणोः तयोः इन्द्ररघ्वोः गरुत्मन्तः पक्षवन्तः। "गरुत्पक्षच्छदाः पत्रम्" इत्यमरः। आशीविषाः अत्यपि दंष्ट्रायां विषं येषां ते आशीविषाः सर्पाः। पृषोदरादित्वात् साधुः। "आशीः स्त्र्याशीर्हिताशंसाहिदंष्ट्रयोः"

अतिप्रबन्धप्रहिताम्त्रवृष्टिभि-
स्तमाश्रयं दुष्प्रसहस्य तेजसः ।
शशाक निर्वापयितुं न वासवः
स्वतश्युतं वह्निमिवाद्भिरम्बुदः ॥ ५८ ॥

ततः प्रकोष्ठे हरिचन्दनाङ्किते
प्रमथ्यमानार्णवधीरनादिनीम् ।
रघुः शशाङ्कार्धमुखेन पत्रिणा
शरासनज्यामलुनाद्विडौजसः ॥ ५९ ॥

इत्यमरः । ते इव भीमदर्शनाः सपक्षाः सर्पाः इव द्रष्टॄणां भयावहाः इत्यर्थः । तैः अधोमुखैः ऊर्ध्वमुखैश्च धन्विनोरुपर्यधोदेशावस्थितत्वात् इति भावः । पत्रिभिः बाणैः उपान्तस्थिताः तटस्थाः सिद्धाः देवाः, इन्द्रस्य सैनिकाश्च रघोः यस्मिन् तत् तथोक्तम्, तुमुलं सङ्कुलं युद्धं बभूव ॥ ५७ ॥

अतीति । वासवः अतिप्रबन्धेन अतिसातत्येन प्रहिताभिः प्रयुक्ताभिः अस्त्रवृष्टिभिः, दुष्प्रसहस्य दुःखेन प्रसह्यते इति दुष्प्रसहं तस्य, दुःखेनाप्यसह्यस्य इत्यर्थः । तेजसः प्रतापस्य आश्रयं तं रघुम् । अम्बुदः अद्भिः स्वतः च्युतं निर्गतं वह्निम् इव, निर्वापयितुं न शशाक । रघोरपि लोकपालात्मकस्येन्द्रांशसम्भवत्वात् इति भावः ॥ ५८ ॥

तत इति । ततः रघुः हरिचन्दनाङ्किते प्रकोष्ठे मणिबन्धे प्रमथ्यमानार्णवधीरनादिनीं प्रमथ्यमानार्णव इव धीरं गम्भीरं नदतीति तां तथोक्ताम् । वेवेष्टि व्याप्नोतीति विट्, व्यापकम् ओजः यस्य सः तस्य विडौजसः इन्द्रस्य । पृषोदरादित्वात् साधुः ।

स चापमुत्सृज्य विवृद्धमत्सरः
प्रणाशनाय प्रबलस्य विद्विषः ।
महीध्रपक्षव्यपरोपणोचितं
स्फुरत्प्रभामण्डलमस्त्रमाददे ॥ ६० ॥
रघुर्भृशं वक्षसि तेन ताडितः
पपात भूमौ सह सैनिकाश्रुभिः ।
निमेषमात्रादवधूय तद्व्यथां
सहोत्थितः सैनिकहर्षनिस्वनैः ॥६१॥

शरासनज्यां धनुर्मौर्वीं, शशाङ्कस्य अर्द्धः खण्डः इव मुख
फलं यस्य तेन शशाङ्कार्द्धमुखेन पत्रिणा बाणेन धनुना
अच्छिनत् ॥ ५८ ॥

स इति । विवृद्धमत्सरः प्रवृद्धवैरः सः इन्द्रः चापम् उत्सृ
प्रबलस्य विद्विषः शत्रोः प्रणाशनाय बधाय । महीं धारयन्तीति
महीध्राः पर्वताः । मूलविभुजादित्वात् कप्रत्ययः । तेषां पक्ष
व्यपरोपणे पक्षच्छेदे उचितं स्फुरत्प्रभामण्डलम् अस्त्रं वज्रा
युधम् आददे अग्राह ॥ ६० ॥

रघुरिति । रघुः तेन वज्रेण भृशम् अत्यर्थं वक्षसि ताडितः
आहतः सन् । सैनिकानाम् अश्रुभिः सह भूमौ पपात । तस्मिन्
पतिते ते रुरुदुः इत्यर्थः । निमेषमात्रात् तद्व्यथां दुःखम् अवधू
तिरस्कृत्य सैनिकानां हर्षेण ये निस्वनाः क्ष्वेडाः तैः सह
उत्थितश्च । तस्मिन् उत्थिते हर्षात् ते सिंहनादांश्चक्रुः
इत्यर्थः ॥ ६१ ॥

तथापि शस्त्रव्यवहारनिष्ठुरे
विपक्षभावे चिरमस्य तस्थुषः ।
तुतोष वीर्य्यातिशयेन वृत्रहा
पदं हि सर्वत्र गुणैर्निधीयते ॥ ६२ ॥

असङ्गमद्रिष्वपि सारवत्तया
न मे त्वदन्येन विसोढमायुधम् ।
अवेहि मां प्रीतमृते तुरङ्गमात्
किमिच्छसीति स्फुटमाह वासवः ॥६३॥

ततो निषङ्गादसमग्रमुद्धृतं
सुवर्णपुङ्खद्युतिरञ्जिताङ्गुलिम् ।

तथापीति । तथापि वज्रपातेऽपि, शस्त्राणाम् आयुधानां व्यवहारेषु व्यापारेषु, निष्ठुरे क्रूरे, विपक्षभावे शात्रवे चिरं तस्थुषः स्थितवतः अस्य रघोः वीर्य्यातिशयेन । वृत्रं हतवान् इति वृत्रहा । "ब्रह्मभ्रूणवृत्रेषु क्विप्" । तुतोष । स्वयं वीर एव वीरं जानातीति भावः । कथं शत्रोः सन्तोषोऽत आह,— हि गुणैः सर्वत्र शत्रुमित्रोदासीनेषु पदम् अङ्घ्रिः निधीयते । गुणैः सर्वत्र सङ्क्रम्यते इत्यर्थः । गुणाः शत्रूनप्यावर्जयन्तीति भावः ॥६२॥

असङ्गमिति । सारवत्तया अद्रिषु अपि असङ्गम् अप्रतिबन्धं मे आयुधं वज्रं त्वदन्येन न विसोढम् । अतः मां प्रीतं सन्तुष्टम् अवेहि, तुरङ्गमात् ऋते तुरङ्गं वर्जयित्वा । "अन्यारादितरर्त्ते" इति पञ्चमी । किम् इच्छसि इति स्फुटं वासवः आह । तुरङ्गमात् अन्यत् अदेयं नास्तीति भावः ॥ ६३ ॥

तत इति । ततः निषङ्गात् तूणीरात् असमग्रं यथा तथा

नरेन्द्रसूनुः प्रतिसंहरन्निषुं
प्रियंवदः प्रत्यवदत् सुरेश्वरम् ॥६४॥
अमोघमश्वं यदि मन्यसे प्रभो !
ततः समाप्ते विधिनैव कर्मणि।
अजस्रदीक्षाप्रयतः स मद्गुरुः
क्रतोरशेषेण फलेन युज्यताम् ॥ ६५ ॥
यथा च वृत्तान्तमिमं सदोगत-
स्त्रिलोचनैकांशतया दुरासदः।
तवैव सन्देशहराद्विशाम्पतिः
शृणोति लोकेश ! तथा विधीयताम् ॥६

उद्वृतं सुवर्णपुङ्खद्युतिभिः रञ्जिताः अङ्गुलयः येन तम् ; अ
प्रतिसंहरन् निवर्त्तयन्, "नाप्रहरन्तं प्रहरेत्" इति निषेधात् इ
भावः। प्रियं वदतीति प्रियंवदः। "प्रियवशे वदः खच्" इ
खच्प्रत्ययः। "अरुर्द्विषत्—" इत्यादिना मुमागमः। नरेन्द्रसू
रघुः सुरेश्वरं प्रत्यवदत्, न तु प्राहरत् इति भावः ॥ ६४ ॥

अमोघमिति। हे प्रभो ! इन्द्र ! अश्वम् अमोघं मन्य
यदि ततः तर्हि अजस्रदीक्षायां प्रयतः सः मद्गुरुः मम पित
विधिना एव कर्मणि समाप्ते सति क्रतोः यत् फलं तेन फलेन
अशेषेण कृत्स्नेन युज्यतां युक्तः अस्तु। अश्वमेधफललाभे किम
अश्वेन इति भावः ॥ ६५ ॥

यथेति। सदोगतः सदोगृहं गतः, त्रिलोचनस्य ईश्वरस्य
एकांशतया, अष्टानाम् अन्यतममूर्त्तित्वात्। दुरासदः अनाद्यः

तथेति कामं प्रतिशुश्रुवान् रघो-
र्यथागतं मातलिसारथिर्ययौ ।
नृपस्य नातिप्रमनाः सदोगृहं
सुदक्षिणासूनुरपि न्यवर्तत ॥ ६७ ॥

तमभ्यनन्दत् प्रथमं प्रबोधितः
प्रजेश्वरः शासनहारिणा हरेः ।
परामृशन् हर्षजडेन पाणिना
तदीयमङ्गं कुलिशव्रणाङ्कितम् ॥ ६८ ॥

दुष्प्राप्यः विशाम्पतिः यथा इदं वृत्तान्तं मत्सन्देशहरात् वार्त्ताहरात् एव शृणोति च । हे लोकेश ! इन्द्र ! तथा विधीयताम् ॥ ६६ ॥

तथेति । मातलिसारथिः इन्द्रः रघोः सम्बन्धिनं कामं मनोरथं तथेति तथास्तु इति प्रतिशुश्रुवान् । "भाषायां सदवसश्रुवः" इति क्वसुप्रत्ययः । यथागतं ययौ, सुदक्षिणासूनुः रघुः अपि नातिप्रमनाः । विजयलाभेऽपि अश्वानायनात् नातीव तुष्टः सन् । नञर्थस्य नशब्दस्य सुप्सुपेति समासः । नृपस्य सदोगृहं प्रति न्यवर्तत ॥ ६७ ॥

तमिति । हरेः इन्द्रस्य शासनहारिणा दूतेन प्रथमं प्रबोधितः ज्ञापितः, वृत्तान्तम् इति शेषः । प्रजेश्वरः दिलीपः हर्षजडेन घर्मस्विन्नेनेव पाणिना कुलिशव्रणाङ्कितम् । तस्य रघोः इदं तदीयम् अङ्गं शरीरं परामृशन् सन् तं रघुम् अभ्यनन्दत् ॥ ६८ ॥

इति क्षितीशो नवतिं नवाधिकां
महाक्रतूनां महनीयशासनः।
समारुरुक्षुर्दिवमायुषः क्षये
ततान सोपानपरम्परामिव ॥ ६९ ॥

अथ स विषयव्यावृत्तात्मा यथाविधि सूनवे
नृपतिककुदं दत्त्वा यूने सितातपवारणम्।
मुनिवनतरुच्छायां देव्या तया सह शिश्रिये
गलितवयसामिक्ष्वाकूणामिदं हि कुलव्रतम् ॥७०॥

इति श्रीरघुवंशे महाकाव्ये कालिदास-
कृतौ रघुराज्याभिषेको नाम
तृतीयः सर्गः।

इतीति। महनीयशासनः पूजनीयाज्ञः क्षितीशः इति अनेन प्रकारेण। "इति हेतुप्रकरणप्रकर्षादिसमाप्तिषु" इत्यमरः। महाक्रतूनाम् अश्वमेधानां नवभिः अधिकां, नवतिम् एकोनशतम् आयुषः क्षये सति दिवं स्वर्गम् समारुरुक्षुः आरोढुमिच्छुः, सोपानानां परम्परां पङ्क्तिम् इव ततान ॥ ६९ ॥

अथेति। अथ विषयेभ्यः व्यावृत्तात्मा निवृत्तचित्तः सः दिलीपः यथाविधि यथाशास्त्रं यूने सूनवे नृपतिककुदं राजचिह्नम्। "ककुदत् ककुदं श्रेष्ठे वृषाङ्गे राजलक्ष्मणि" इति विश्वः। सितातपवारणं श्वेतच्छत्रं दत्त्वा तया देव्या सुदक्षिणया सह मुनिवनतरोः छायां, शिश्रिये श्रितवान्। वानप्रस्थाश्रमं स्वीकृतवान् इत्यर्थः। तथाहि—गलितवयसां वृद्धानाम् इक्ष्वाकू-

चतुर्थः सर्गः ।

स राज्यं गुरुणा दत्तं प्रतिपद्याधिकं बभौ ।
दिनान्ते निहितं तेजः सवित्रेव हुताशनः ॥ १ ॥

षाम् इक्ष्वाकोर्गोत्रापत्यानाम् । तद्राजसंज्ञकत्वादणो लुक् । इदं वनगमनं कुलव्रतम् । देव्या सहेत्यनेन सपत्नीकवानप्रस्थाश्रमपक्ष उक्तः । तथा च याज्ञवल्क्यः,—"सुतविन्यस्तपत्नीकस्तया वानुगतो वनम् । वानप्रस्थो ब्रह्मचारी साग्निः सोपासनो व्रजेत्" ॥ इति । हरिणीवृत्तमेतत् । तदुक्तम्—"रसयुगहयैर्न्सौ म्रौ स्लौ गो यदा हरिणी तदा" । इति ॥ ७० ॥

इति श्रीमहामहोपाध्याय कोलाचलमल्लिनाथसूरिविरचितायां रघुवंशटीकायां सञ्जीवनीसमाख्यायां तृतीयः सर्गः ।

---

शारदा शारदाम्भोजवदना वदनाम्बुजे ।
सर्वदा सर्वदाऽस्माकं सन्निधिं सन्निधिं क्रियात् ॥

स इति । सः रघुः गुरुणा पित्रा दत्तं राज्यं राज्ञः कर्म प्रजापरिपालनात्मकम् । पुरोहितादित्वाद् यक् । प्रतिपद्य प्राप्य, दिनान्ते सायंकाले सवित्रा सूर्येण निहितं तेजः प्रतिपद्य हुताशनः अग्निः इव, अधिकं बभौ । "सौरं तेजः सायमग्निं संक्रमते । आदित्यो वा अस्तं यन्नग्निमनुप्रविशति । अग्निं वा आदित्यः सायं प्रविशति" इत्यादिश्रुतिप्रमाणात् ॥ १ ॥

दिलीपानन्तरं राज्ये तं निशम्य प्रतिष्ठितम् ।
पूर्वं प्रधूमितो राज्ञां हृदयेऽग्निरिवोत्थितः ॥२॥
पुरुहूतध्वजस्येव तस्योन्नयनपङ्क्तयः ।
नवाभ्युत्थानदर्शिन्यो ननन्दुः सप्रजाः प्रजाः ॥३॥
सममेव समाक्रान्तं द्वयं द्विरदगामिना ।
तेन सिंहासनं पित्र्यमखिलं चारिमण्डलम् ॥ ४

दिलीपेति । दिलीपानन्तरं राज्ये प्रतिष्ठितम् अवस्थि तं रघुं निशम्य आकर्ण्य पूर्वं दिलीपकाले राज्ञां हृदये प्रकर्षे धूमोऽस्य सञ्जातः प्रधूमितः अग्निः सन्तापाग्निः उत्थितः प्रज्वलितः इव । पूर्वेभ्योऽधिकसन्तापोऽभूत् इत्यर्थः । रा कर्तृकस्यापि निशमनस्याग्नौ उपचाराच्च समानकर्तृकत्वमिति इति ॥ २ ॥

पुरुहूतेति । पुरुहूतध्वजः इन्द्रध्वजः । स किल राजभि वृष्ट्यर्थं पूज्यते इत्युक्तं भविष्योत्तरे,—"एवं यः कुरुते यात्रा इन्द्रकेतोर्युधिष्ठिर ! । पर्जन्यः कामवर्षी स्यात् तस्य राज्ये न संशयः" ॥ इति । "चतुरस्रं ध्वजाकारं राजद्वारे प्रतिष्ठितम् आहुः शक्रध्वजं नाम पौरलोके सुखावहम्" ॥ इति च । पुरुहूत ध्वजस्य इव तस्य रघोः नवम् अभ्युत्थानम् अभ्युन्नतिम् अभ्यु दयञ्च पश्यन्तीति नवाभ्युत्थानदर्शिन्यः । उत् ऊर्ध्वं प्रसृता उल्लसिताश्च नयनपङ्क्तयः यासां ताः सप्रजाः सन्तानाः प्रजाः जनाः ।°"प्रजा स्यात् सन्ततौ जने" इत्युभयत्राप्यमरः । ननन्दुः ॥ ३ ॥

सममिति । द्विरदः इव द्विरदैश्च गच्छतीति तेन द्विरद

छायामण्डललक्ष्येण तमदृश्या किल स्वयम्।
पद्मा पद्मातपत्रेण भेजे साम्राज्यदीक्षितम्॥ ५॥
परिकल्पितसान्निध्या काले काले च वन्दिषु।
स्तुत्यं स्तुतिभिरर्थ्याभिरुपतस्थे सरस्वती॥ ६॥

ामिना। "कर्त्तर्य्युपमाने" इति "सुप्यजातौ—"इति च णिनिः। न रघुणा समं युगपद् एव इयं समाक्रान्तम् अधिष्ठितम्। कं तत् इयम्? पितुरागतं पित्र्यम्। "पितुर्यत्" इति यत्-त्ययः। सिंहासनम्, अखिलम् अशेषां मण्डलं राष्ट्रञ्च॥ ४॥

अथ सिंहासनारोहणानन्तरं तस्य लक्ष्मीसन्निधानमाह,—

छायेति। अत्र रघोस्तेजोविशेषेण स्वयं सन्निहितया लक्ष्म्या छत्रधारणं कृतमित्युत्प्रेक्षते—पद्मा लक्ष्मीः। "लक्ष्मीः पद्मालया पद्मा कमला श्रीर्हरिप्रिया" इत्यमरः। सा स्वयम् अदृश्या किल। किलेति सम्भावनायाम्। सती छायामण्डललक्ष्येण कान्तिपुञ्जानुमेयेन, न तु स्वरूपतो दृश्येन। छायामण्डल-मित्यनेन अनातपत्रानं लक्ष्यते। "छाया सूर्य्यप्रिया कान्तिः प्रतिबिम्बमनातपः" इत्युभयत्राप्यमरः। पद्मातपत्रेण पद्ममेव आतपत्रं तेन कारणभूतेन, साम्राज्यदीक्षितं साम्राज्ये साम्राज्यकर्मणि मण्डलाधिपत्ये दीक्षितम् अभिषिक्तं तं भेजे। अन्यथा कथमेतादृशी कान्तिसम्पत्तिः इति भावः॥ ५॥

सम्प्रति सरस्वतीसान्निध्यमाह,—

परिकल्पितेति। सरस्वती च काले काले सर्व्वेषु अपि योग्य-कालेषु। "नित्यवीप्सयोः" इति वीप्सायां द्विर्वचनम्। वन्दिषु परिकल्पितसान्निध्या कृतसन्निधाना सती स्तुत्यं स्तोतार्हं तं रघुम्। अर्थ्याभिः अर्थात् अनपेताभिः। "धर्मपथ्यर्थन्यायादनपेते" इति

मनुप्रभृतिभिर्मान्यैर्भुक्ता यद्यपि राजभिः।
तथाप्यनन्यपूर्वेव तस्मिन्नासीद्वसुन्धरा॥ ७॥
स हि सर्वस्य लोकस्य युक्तदण्डतया मनः।
आददे नातिशीतोष्णो नभस्वानिव दक्षिणः॥ ८॥
मन्दोत्कण्ठाः कृतास्तेन गुणाधिकतया गुरौ।
फलेन सहकारस्य पुष्पोद्गम इव प्रजाः॥९॥

यत्प्रत्ययः। स्तुतिभिः स्तोत्रैः उपतस्थे, देवताबुद्ध्या पूजितवती इत्यर्थः। देवतात्वञ्च—"ना विष्णुः पृथिवीपतिः" इति वा लोकपालात्मकत्वाद्वा इत्यनुसन्धेयम्। एवञ्च सति "उपाद्देवपूजासङ्गतिकरणमित्रकरणपथिषु" इति वक्तव्यादात्मनेपदं सिध्यति॥६॥

मन्विति। वसुन्धरा मनुप्रभृतिभिः मन्वादिभिः मान्यैः पूज्यैः राजभिर्भुक्ता यद्यपि भुक्तैव इत्यर्थः। यद्यपि इत्यवधारणे। "अप्यर्थे यदि वार्थे स्यात्" इति केशवः। तथापि तस्मिन् राज्ञि, अन्यः पूर्वः यस्याः सा अन्यपूर्वा। अन्यपूर्वा न भवतीति अनन्यपूर्वा, अनन्योपभुक्ता इव आसीत्। तत्प्रथमपतिकेव अनुरक्तवती इत्यर्थः॥ ७॥

अत्र कारणमाह,—

स इति। हि यस्मात् कारणात् सः रघुः युक्तदण्डतया यथापराधदण्डतया सर्वस्य लोकस्य मनः आददे जहार। क इव? अतिशीतः अत्युष्णो वा न भवतीति नातिशीतोष्णः नञर्थस्य नशब्दस्य सुप्सुपेति समासः। दक्षिणः दक्षिणदिग्भवः नभस्वान् वायुः इव, मलयानिलः इव इत्यर्थः। युक्तदण्डतया इत्यत्र कामन्दकः,—"उद्वेजयति तीक्ष्णेन मृदुना परिभूयते। दण्डेन नृपतिस्तस्मात् युक्तदण्डः प्रशस्यते"॥ इति॥ ८॥

नयविद्भिर्नवे राज्ञि सदसच्चोपदर्शितम्।
पूर्व एवाभवत्पक्षस्तस्मिन्नाभवदुत्तरः॥ १०॥
पञ्चानामपि भूतानामुत्कर्षं पुपुषुर्गुणाः।
नवे तस्मिन् महीपाले सर्वं नवमिवाभवत्॥११॥

मन्देति। तेन रघुणा प्रजाः गुरौ दिलीपविषये, सहकारः अतिसौरभः चूतः। "आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभः" इत्यमरः। तस्य फलेन पुष्पोद्गमे पुष्पोदये इव। ततोऽपि गुणाधिकतया हेतुना मन्दोत्कण्ठाः अल्पौत्सुक्याः कृताः। पुष्पोत्तरस्य उत्तरो विषयः पूर्वं विस्मारयति इति भावः॥ ८॥

नयेति। नयविद्भिः नीतिशास्त्रज्ञैः नवे तस्मिन् राज्ञि विषये, तमधिकृत्य इत्यर्थः। सत् धर्मयुद्धादिकम् असत् कूटयुद्धादिकञ्च उपदर्शितम्। तस्मिन् राज्ञि पूर्वः पक्षः एव अभवत्, सङ्क्रान्त इत्यर्थः। उत्तरः पक्षो न अभवत्, न सङ्क्रान्तः इत्यर्थः। तत्र सदसतोर्मध्ये सदेवाभिमतं नासत्, तदुद्भावनन्तु ज्ञानार्थमेव इत्यर्थः। पक्षः साधनयोग्यार्थः। "पक्षः पार्श्वगरुत्साध्यसहायबलभित्तिषु" इति केशवः॥ १०॥

पञ्चानामिति। पृथिव्यादीनां पञ्चानां भूतानाम् अपि गुणाः गन्धादयः उत्कर्षम् अतिशयं पुपुषुः। अत्रोत्प्रेक्षते, तस्मिन् रघौ नाम नवे महीपाले सति सर्वं वस्तुजातं नवम् इव अभवत्। तदेव भूतजातम् इदानीम् अपूर्वगुणयोगात् अपूर्वमिव अभवत् इति भावः॥ ११॥

यथेति। यथा चन्द्रयति आह्लादयतीति चन्द्रः इन्दुः। चदिधातोरौणादिकोरप्रत्ययः। प्रह्लादनात् आह्लादकरणात् अन्वर्थः अनुगतार्थं नामकः अभूत्। यथा च तपतीति तपनः सूर्यः।

यथा प्रह्लादनाच्चन्द्रः प्रतापात् तपनो यथा।
तथैव सोऽभूदन्वर्थो राजा प्रकृतिरञ्जनात् ॥१२॥

कामं कर्णान्तविश्रान्ते विशाले तस्य लोचने।
चक्षुष्मत्ता तु शास्त्रेण सूक्ष्मकार्य्यार्थदर्शिना ॥१३॥

लब्धप्रशमनस्वस्थमथैनं समुपस्थिता।
पार्थिवश्रीर्द्वितीयेव शरत् पङ्कजलक्षणा ॥ १४ ॥

नन्द्यादित्वात् ल्युप्रत्ययः। प्रतापात् सन्तापजननात् अन्वर्थः तथा एव सः राजा प्रकृतिरञ्जनात् अन्वर्थः सार्थकराजशब्दः अभूत्। यद्यपि राजशब्दो राजतेर्दीप्त्यर्थत्वात् कनिन्प्रत्ययान्तो न तु रञ्जेः, तथापि धातूनामनेकार्थत्वाद्रञ्जनाद्राजेत्युक्तं कविना ॥ १२ ॥

काममिति। विशाले तस्य रघोः लोचने कामं कर्णान्तयोः विश्रान्ते कर्णप्रान्तगते, चक्षुष्मत्ता तु चक्षुःफलं तु इत्यर्थः। सूक्ष्मान् कार्य्यार्थान् कर्त्तव्यार्थान् दर्शयति प्रकाशयतीति सूक्ष्मकार्य्यार्थदर्शिना शास्त्रेण एव। शास्त्रं दृष्टिर्विवेकिनाम् इति भावः ॥ १३ ॥

लब्धेति। अथ लब्धस्य राज्यस्य प्रशमनेन परिपन्थिनाम् अनुरञ्जनप्रतीकाराभ्यां स्थिरीकरणेन स्वस्थं समाहितचित्तम्, एनं रघुं पङ्कजलक्षणा पद्मचिह्ना। श्रियोऽपि विशेषणमेतत्। शरत्, द्वितीया पार्थिवश्रीः राजलक्ष्मीः इव, समुपस्थिता प्राप्ता। "रक्षा पौरजनस्य देशनगरग्रामेषु गुप्तिस्तथा योधानामपि संग्रहोऽपि तुलया मानव्यवस्थापनम्। साम्यं लिङ्गिदानवृत्तिकरणं त्यागः समानेऽर्च्चनं कार्य्याण्येव महीभुजां प्रशमनाख्येतानि राज्ये नवे" ॥१४॥

…हृष्टलघुभिर्मेघैर्मुक्तवर्त्मा सुदुःसहः ।
…तापस्तस्य भानोश्च युगपद् व्यानशे दिशः ॥१५॥
…र्षिकं संजहारेन्द्रो धनुर्जैत्रं रघुर्दधौ ।
…ार्थसाधने तौ हि पर्य्यायोद्यतकार्मुकौ ॥१६॥
…ण्डरीकातपत्रस्तं विकसत्काशचामरः ।
…तुर्विडम्बयामास न पुनः प्राप तच्छ्रियम् ॥१७॥

निर्वृष्टेति । निःशेषेण वृष्टाः निर्वृष्टाः । कर्त्तरि क्तः । अत… लघवः तैः, मेघैः मुक्तवर्त्मा त्यक्तमार्गः । अतएव सुदुःसहः, …स्य रवेः भानोश्च प्रतापः पौरुषम् आतपश्च । "प्रतापौ पौरुषा-…पौ" इति यादवः । युगपत् दिशः व्यानशे व्याप ॥१५॥

वार्षिकमिति । इन्द्रः, वर्षासु भवं वार्षिकम्, वर्षा-…मित्तम् इत्यर्थः । "वर्षाभ्यष्ठक्" इति ठक्प्रत्ययः । धनुः संज-…र रघुः, जैत्रं जयशीलम् । जेतृशब्दात् तृन्नन्तात् । "प्रज्ञादि-…भ्यश्च" इति स्वार्थे अण्प्रत्ययः । धनुः दधौ, हि यस्मात् तौ इन्द्र-…ौ प्रजानाम् अर्थस्य प्रयोजनस्य वृष्टिविजयलक्षणस्य साधन-…विषये,पर्य्यायेण उद्यते कार्मुके याभ्यां तौ पर्य्यायोद्यतकार्मुकौ । …पर्य्यायोद्यमविश्रमौ" इति पाठान्तरे पर्य्यायेण उद्यमः विश्रमश्च …योः तौ पर्य्यायोद्यमविश्रमौ । द्वयोः पर्य्यायकरणात् अक्लेशः …ति भावः ॥१६॥

पुण्डरीकेति । पुण्डरीकं सिताम्भोजम् एव आतपत्रं यस्य …ः तथोक्तः । विकसन्ति काशानि काशाख्यतृणकुसुमानि एव …ामराणि यस्य सः तथोक्तः । ऋतुः शरदृतुः पुण्डरीकनिभात-…त्रं काशनिभचामरं, तं रघुं विडम्बयामास अनुचकार । तस्य

प्रसादसुमुखे तस्मिंश्चन्द्रे च विशदप्रभे।
तदा चक्षुष्मतां प्रीतिरासीत् समरसा द्वयोः॥१८
हंसश्रेणीषु तारासु कुमुद्वत्सु च वारिषु।
विभूतयस्तदीयानां पर्य्यस्ता यशसामिव॥१९॥
इक्षुच्छायनिषादिन्यस्तस्य गोप्तुर्गुणोदयम्।
आकुमारकथोद्घातं शालिगोप्यो जगुर्यशः॥२०॥

रघोः श्रियं, पुनः शोभां तु न प्राप। "शोभासम्पत्तिपद्मा लक्ष्मीः श्रीरिव दृश्यते" इति शाश्वतः॥१७॥

प्रसादेति। प्रसादेन सुमुखे, तस्मिन् रघौ विशदप्रभे निर्म कान्तौ चन्द्रे च द्वयोः विषये तदा चक्षुष्मतां प्रीतिः अनुरा समरसा समस्वादा, तुल्यभोगा इति यावत्। "रसो गन्ध स्वादे" इति विश्वः। आसीत्॥१८॥

हंसेति। हंसानां श्रेणीषु पङ्क्तिषु। तारासु नक्षत्रे कुमुदानि सन्ति येषु इति कुमुद्वन्ति। "कुमुद्वान् कुमुदप्रा इत्यमरः।"कुमुदनड़वेतसेभ्यो ड्मतुप्"। तेषु कुमुद्वत्सु कुमु प्रायेषु इत्यर्थः। वारिषु च तदीयानां रघुसम्बन्धिनां य विभूतयः सम्पदः पर्य्यस्ताः इव प्रसारिताः किम्? इत्यु अन्यथा कथमेषां धवलिमा इति भावः॥१९॥

इक्ष्विति। इक्षूणां छाया इक्षुच्छायम्। "छाया बाहुल्ये नपुंसकत्वम्। तत्र निषसाः इक्षुच्छायनिषादिन्यः।"इक्षुच्छा निषादिन्यः" इति स्त्रीलिङ्गपाठे इक्षोः छाया इति विग्र अन्यथा बहुत्वे नपुंसकत्वप्रसङ्गात्। शालीन् गोपायन्ति रक्षन्ति शालिगोप्यः, शस्यपालिकाः स्त्रियः। "कर्म्मण्यण्," "टिड्ढाणञ् इत्यादिना ङीप्। गोप्तुः रक्षकस्य तस्य रघोः, गुणेभ्यः उ

प्रससादोदयादम्भः कुम्भयोनेर्महौजसः।
रघोरभिभवाशङ्कि चुक्षुभे द्विषतां मनः ॥२१॥
मदोदग्राः ककुद्मन्तः सरितां कूलमुद्रुजाः।
लीलाखेलमनुप्रापुर्महोक्षास्तस्य विक्रमम् ॥२२॥

यस्य तत् गुणोदयं गुणोत्पन्नम्, आकुमारं कुमारात् आरभ्य, कथोद्घातः कथारम्भः यस्य तत्। कुमारैरपि स्तूयमानम् इत्यर्थः, यशः जगुः गायन्ति स्म। अथवा कुमारस्य सतः रघोः याः कथाः इन्द्रविजयादयः ततः आरभ्य आकुमारकथम्। तत्रापि अभिविधौ अव्ययीभावः। आकुमारकथम् उद्घातः यस्मिन् कर्म्मणि, गानक्रियाविशेषणमेतत्। "स्यादभ्यादान-मुद्घात आरम्भः" इत्यमरः। "आकुमारकथोद्भूतम्" इति पाठे कुमारस्य सतः तस्य कथाभिः चरितैः उद्भूतं यत् यशः तत् यशः आरभ्य यशः जगुः इति व्याख्येयम् ॥ २० ॥

प्रससादेति। महौजसः कुम्भयोनेः अगस्त्यस्य। "अगस्त्यः कुम्भसम्भवः" इत्यमरः। उदयात् अम्भः प्रससाद प्रसन्नं बभूव। महौजसः रघोः उदयात् अभिभवाशङ्कि द्विषतां मनः चुक्षुभे कालुष्यं प्राप। "अगस्त्योदये जलानि प्रसीदन्ति"इत्यागमः॥२१॥

मदेति। मदोदग्राः मदोद्धताः। ककुदेषामस्तीति ककुद्मन्तः, महाककुदः इत्यर्थः। यवादित्वात् मकारस्य वत्वाभावः। सरितां कूलानि उद्रुजन्तीति कूलमुद्रुजाः। "उदिकूले रुजिवहोः" इति खश्प्रत्ययः। "अरुर्द्विषत्—"इत्यादिना मुमागमः। महान्तः उक्षाणः महोक्षाः। "अचतुर—" इत्यादिना निपातनात् अकारान्तः। लीलाखेलं विलाससुभगं तस्य रघोः उत्साहवतः वपुष्मतः परभञ्जकस्य विक्रमं शौर्य्यम् अनुप्रापुः अनुचक्रुः ॥२२॥

प्रसवैः सप्तपर्णानां मदगन्धिभिराहताः।
असूययेव तन्नागाः सप्तधैव प्रसुस्रुवुः ॥२३॥
सरितः कुर्वती गाधाः पथश्चाश्यानकर्दमान्।
यात्रायै नोदयामास तं शक्तेः प्रथमं शरत् ॥२४॥
तस्मै सम्यग्घुतो वह्निर्वाजिनीराजनाविधौ।
प्रदक्षिणार्चिर्व्याजेन हस्तेनेव जयं ददौ ॥२५॥

प्रसवैरिति। मदस्य इव गन्धः येषां तैः मदगन्धिभिः। "उपमानाच्च" इति इकारःसमासान्तः। सप्तपर्णानां वृक्षविशेषाणाम्। "सप्तपर्णो विशालत्वक् शारदो विषमच्छदः" इत्यमरः। प्रसवैः पुष्पैः आहताः तस्य रघोः नागाः गजाः। "गजेऽपि नागमातङ्गौ" इत्यमरः। असूयया इव आहतिनिमित्तया स्पर्द्धया इव सप्तधा एव प्रसुस्रुवुः मदं ववृषुः, प्रतिगजगन्धाभिमानात् इति भावः। "करात् कटाभ्यां मेढ्राच्च नेत्राभ्याञ्च मदस्रुतिः" इति पालकाव्ये। करात् नासारन्ध्राभ्याम् इत्यर्थः॥ २३॥

सरित इति। सरितः गाधाः सुप्रतराः कुर्वती, पथः मार्गान् च आश्यानकर्दमान् शुष्कपङ्कान् कुर्वती। "संयोगादेरातो धातोर्यण्वतः" इति श्यतेर्निष्ठा तस्य नत्वम्। शरत् शरद्दतुः तं रघुं शक्तेः उत्साहशक्तेः प्रथमं प्राक् यात्रायै दण्डयात्रायै नोदयामास प्रेरयामास। प्रभावमन्त्रशक्तिसम्पन्नस्य शरत् स्वयमुत्साहमुत्पादयामास इत्यर्थः॥ २४॥

तस्मा इति। वाजिनाम् अश्वानां नीराजनाविधौ नीराजनाख्ये शान्तिकर्मणि सम्यक् विधिवत् हुतः होमसमिद्धः वह्निः। प्रगता दक्षिणम्। तिष्ठद्गुप्रभृतित्वात् अव्ययीभावः। प्रदक्षिणं या अर्चिः ज्वाला तस्याः व्याजेन, हस्तेन इव

प्रसवैः सप्तपर्णानां मदगन्धिभिराहताः।
असूययेव तन्नागाः सप्तधैव प्रसुस्रुवुः ॥२३॥
सरितः कुर्वती गाधाः पथश्चाश्यानकर्दमान्।
यात्रायै नोदयामास तं शक्तेः प्रथमं शरत् ॥२४॥
तस्मै सम्यग्घुतो वह्निर्वाजिनीराजनाविधौ।
प्रदक्षिणार्चिर्व्याजेन हस्तेनेव जयं ददौ ॥२५॥

प्रसवैरिति। मदस्य इव गन्धः येषां तैः मदगन्धिभिः। "उपमानाच्च" इति इकारः समासान्तः। सप्तपर्णानां वृक्षविशेषाणाम्। "सप्तपर्णो विशालत्वक् शारदो विषमच्छदः" इत्यमरः। प्रसवैः पुष्पैः आहताः तस्य रघोः नागाः गजाः। "गजेऽपि नागमातङ्गौ" इत्यमरः। असूयया इव आहतिनिमित्तया अर्हया इव सप्तधा एव प्रसुस्रुवुः मदं ववृषुः, प्रतिगजगन्धाभिमानात् इति भावः। "करात् कटाभ्यां मेढ्राच्च नेत्राभ्याञ्च मदस्रुतिः" इति पालकाव्ये। करात् नासारन्ध्राभ्याम् इत्यर्थः ॥ २३ ॥

सरित इति। सरितः गाधाः सुप्रतराः कुर्वती, पथः मार्गान् च आश्यानकर्दमान् शुष्कपङ्कान् कुर्वती। "संयोगादेरातो धातोर्यण्वतः" इति श्यतेर्निष्ठा तस्य नत्वम्। शरत् शरदृतुः तं रघुं शक्तेः उत्साहशक्तेः प्रथमं प्राक् यात्रायै दण्डयात्रायै नोदयामास प्रेरयामास। प्रभावमन्त्रशक्तिसम्पन्नस्य शरत् स्वयमुत्साहमुत्पादयामास इत्यर्थः ॥ २४ ॥

तस्मा इति। वाजिनाम् अश्वानां नीराजनाविधौ नीराजनाख्ये शान्तिकर्मणि सम्यक् विधिवत् हुतः होमसमिद्धः वह्निः। प्रगता दक्षिणम्। तिष्ठद्गुप्रभृतित्वात् अव्ययीभावः। प्रदक्षिणं या अर्चिः ज्वाला तस्याः व्याजेन, हस्तेन इव

स गुप्तमूलप्रत्यन्तः शुद्धपार्ष्णिरयान्वितः।
षड्विधं बलमादाय प्रतस्थे दिग्जिगीषया॥२६॥
अवाकिरन् वयोवृद्धास्तं लाजैः पौरयोषितः।
पृषतैर्मन्दरोद्धूतैः क्षीरोर्मय इवाच्युतम्॥२७॥
स ययौ प्रथमं प्राचीं तुल्यः प्राचीनबर्हिषा।
अहिताननिलोद्धूतैस्तर्जयन्निव केतुभिः॥२८॥

तस्मै जयं ददौ। उक्तमाह्वयाम्नायाम्,—"इद्धः प्रदक्षिणगतो हुतभुक् नृपस्य धात्रीं समुद्ररशनां वशगां करोति" इति। वाजिग्रहणं गजादीनामप्युपलक्षणं, तेषामपि नीराजनाविधानात्॥ २५॥

स इति। गुप्तौ मूलं स्वनिवासस्थानं प्रत्यन्तः प्रान्तदुर्गञ्च येन सः गुप्तमूलप्रत्यन्तः। शुद्धपार्ष्णिः उद्धृतपृष्ठशत्रुः सेनया रक्षितपृष्ठदेशो वा। अयान्वितः शुभदैवान्वितः। "अयः शुभावहो विधिः" इत्यमरः। सः रघुः षड्विधं मौलभृत्यादिरूपं बलं सैन्यम्। "मौलं भृत्यः सुहृच्छ्रेणी द्विषदाटविकं बलम्" इति कोषः। आदाय दिशां जिगीषया जेतुमिच्छया प्रतस्थे चचाल॥ २६॥

अवाकिरन्निति। वयोवृद्धाः पौरयोषितः तं रघुं प्रयान्तं लाजैः आचारलाजैः। मन्दरोद्धूतैः पृषतैः विन्दुभिः क्षीरोर्मयः क्षीरसमुद्रोर्मयः अच्युतं विष्णुम् इव अवाकिरन् पर्य्यक्षिपन्॥२७॥

स इति। प्राचीनबर्हिर्नाम कश्चित् महाराजः इति केचित्। प्राचीनबर्हिः इन्द्रः। "पर्जन्यो मघवा वृषा हरिहयः प्राचीनबर्हिस्तथा" इति इन्द्रपर्य्यायेषु हलायुधाभिधानात्। तेन प्राचीनबर्हिषा तुल्यः सः रघुः, अनिलेन अनुकूलवातेन उद्धूतैः

रजोभिः स्यन्दनोद्धूतैर्गजैश्च घनसन्निभैः।
भुवस्तलमिव व्योम कुर्वन् व्योमेव भूतलम् ॥२९॥
प्रतापोऽग्रे ततः शब्दः परागस्तदनन्तरम्।
ययौ पश्चाद्रथादीति चतुःस्कन्धेव सा चमूः ॥३०॥
मरुपृष्ठान्युदम्भांसि नाव्याः सुप्रतरा नदीः।
विपिनानि प्रकाशानि शक्तिमत्त्वाच्चकार सः ॥३१॥

केतुभिः ध्वजैः अहितान् रिपून् तर्जयन् इव भर्त्सयन् इव "तर्जिभर्त्स्योरनुदात्तेत्त्वेऽपि चक्षिङो ङित्करणेनानुदात्तेत्त्वनि-मित्तस्यात्मनेपदस्यानित्यत्वज्ञापनात् परस्मैपदम्" इति वामनः प्रथमं प्राचीं दिशं ययौ ॥ २८ ॥

रजोभिरिति। किं कुर्वन्? स्यन्दनोद्धूतैः रजोभिः घन-सन्निभैः वर्णतः क्रियातः परिमाणतश्च मेघतुल्यैः गजैश्च यथा-क्रमं व्योम आकाशं भुवः तलम् इव, भूतलञ्च व्योम इव कुर्वन् ययौ, इति पूर्वेण सम्बन्धः ॥ २९ ॥

प्रताप इति। अग्रे प्रतापः तेजोविशेषः। "स प्रभावः प्रतापश्च यत्तेजःकोशदण्डजम्" इत्यमरः। ततः शब्दः सेना-कलकलः। तदनन्तरं परागः धूलिः। "परागः पुष्परजसि धूलिस्नानीययोरपि" इति विश्वः। पश्चात् रथादि रथाश्वादि-चतुरङ्गबलम्। "रथानीकम्" इति पाठे "इति"शब्दाध्याहारो-योज्यम्। इति इत्थं चतुःस्कन्धा इव चतुर्व्यूहा इव। "स्कन्धः प्रकाण्डे कायेंऽशे विज्ञानादिषु पञ्चसु। नृपे समूहे व्यूहे च" इति हैमः। सा चमूः ययौ ॥ ३० ॥

मर्विति। सः रघुः शक्तिमत्त्वात् समर्थत्वात् मरुपृष्ठानि निर्जलस्थानानि। "समानौ मरुधन्वानौ" इत्यमरः। उदम्भांसि

स सेनां महतीं कर्षन् पूर्वसागरगामिनीम् ।
बभौ हरजटाभ्रष्टां गङ्गामिव भगीरथः ॥३२॥

त्याजितैः फलमुत्खातैर्भग्नैश्च बहुधा नृपैः ।
तस्यासीदुल्बणो मार्गः पादपैरिव दन्तिनः ॥३३॥

पौरस्त्यानेवमाक्रामंस्तांस्तान् जनपदान् जयी ।

प्लुतजलानि चकार । नाव्याः नौभिः तार्य्याः नदीः । "नाव्यं त्रिलिङ्गं नौतार्य्ये" इत्यमरः । "नौवयोधर्मविषमूल—" इत्यादिना यत्प्रत्ययः । सुप्रतराः सुखेन तार्य्याः चकार । विपिनानि अरण्यानि । "अटव्यरण्यं विपिनम्" इत्यमरः । प्रकाशानि निर्वृक्षाणि चकार । प्रतापोत्कर्षात् तस्यागम्यं किमपि नासीत् इति भावः ॥ ३१ ॥

स इति । महतीं सेनां पूर्वसागरगामिनीं कर्षन् सः रघुः हरस्य जटाभ्यः भ्रष्टां गङ्गां कर्षन् । सापि पूर्वसागरगामिनी । भगीरथः इव बभौ । भगीरथो नाम कश्चित् कपिलदग्धानां सागराणां नप्ता तत् पावनाय हरकिरीटात् गङ्गां प्रवर्त्तयिता राजा, यत्सम्बन्धात् गङ्गा च भागीरथीति गीयते ॥ ३२ ॥

त्याजितैरिति । "फलं फले धने वीजे निष्पत्तौ भोगलाभयोः" इति केशवः । फलं लाभं वृक्षपक्षे प्रसवञ्च, त्याजितैः । त्यजेर्ण्यन्तात् द्विकर्म्मकात् अप्रधाने कर्म्मणि क्तः । उत्खातैः स्वपदात् च्यावितैः, अन्यत्र उत्पाटितैः बहुधा भग्नैः रणे जितैः, अन्यत्र छिन्नैः नृपैः पादपैः दन्तिनः गजस्य इव तस्य रघोः मार्गः उल्बणः प्रकाशः आसीत् । "प्रकाशं प्रकटं स्पष्टमुल्बणं विशदं स्फुटम्" इति यादवः ॥ ३३ ॥

पौरस्त्यानिति । जयी जयनशीलः । "जिदृक्षिविश्री—"

प्राप तालीवनश्याममुपकण्ठं महोदधेः ॥३४॥

अनम्राणां समुद्धर्तुस्तस्मात्सिन्धुरयादिव।
आत्मा संरक्षितः सुह्मैर्वृत्तिमाश्रित्य वैतसीम् ॥३५॥

वङ्गानुत्खाय तरसा नेता नौसाधनोद्यतान्।
निचखान जयस्तम्भान् गङ्गास्रोतोऽन्तरेषु सः ॥३६॥

आपादपद्मप्रणताः कलमा इव ते रघुम्।

इत्यादिना इनिप्रत्ययः। सः रघुः एवं पुरः भवान् पौरस्त्या[न्]
प्राच्यान्। "दक्षिणापश्चात्पुरसस्त्यक्" इति त्यक्प्रत्ययः। ता[न्]
तान् सर्वान् इत्यर्थः। वीप्सायां द्विरुक्तिः। जनपदान् देशा[न्]
आक्रामन्, तालीवनैः श्यामं महोदधेः उपकण्ठम् अन्ति[क]
प्राप ॥ ३४ ॥

अनम्राणामिति। अनम्राणाम्। कर्मणि षष्ठी। समु[द्]-
धर्तुः उन्मूलयितुः तस्मात् रघोः सकाशात्। "भीत्रार्थानां
भयहेतुः" इत्यपादानत्वात् पञ्चमी। सिन्धुरयात् नदीवेगा[त्]
इव सुह्मैः सुह्मदेशीयैः। सुह्मादयः शब्दाः जनपदवचना[ः]
क्षत्रियमाचक्षते। वैतसीं वेतससम्बन्धिनीं वृत्तिं प्रवृत्ति[म्]
इत्यर्थः, आश्रित्य आत्मा संरक्षितः। अत्र कौटिल्यः,—"बली-
यसाभियुक्तो दुर्बलः सर्वत्रानुप्रणतो वेतसधर्ममातिष्ठे[त्]"
इति ॥ ३५ ॥

वङ्गानिति। नेता नायकः सः रघुः नौभिः साधनैः उद्य[-]
तान् सन्नद्धान्, वङ्गान् राज्ञः तरसा बलेन। "तरसी बलरंहसी"
इति यादवः। उत्खाय उन्मूल्य गङ्गायाः स्रोतसां प्रवाहाणाम्
अन्तरेषु द्वीपेषु, जयस्तम्भान् निचखान स्थापितवान् इत्यर्थः ॥३६॥

आपादेति। आपादपद्मम् अङ्घ्रिपद्मपर्यन्तं प्रणताः,

तैः संवर्द्धयामासुरुत्खातप्रतिरोपिताः ॥३७॥
स तीर्त्वा कापिशां सैन्यैर्बद्धद्विरदसेतुभिः ।
उत्कलादर्शितपथः कलिङ्गाभिमुखो ययौ ॥३८॥
स प्रतापं महेन्द्रस्य मूर्ध्नि तीक्ष्णं न्यवेशयत् ।
अङ्कुशं द्विरदस्येव यन्ता गम्भीरवेदिनः ॥३९॥

उत्खाताः पूर्वमुद्धृताः अपि प्रतिरोपिताः पश्चात् स्थापिताः, वङ्गाः कलमाः इव शालिविशेषाः इव । "शालयः कलमाद्याश्च षष्टिकाद्याश्च पुंस्यमी" इत्यमरः । तेऽपि आपादपद्मं पादपद्ममूलपर्य्यन्तं प्रणताः । "पादो वुध्नतुरीयांशशैलप्रत्यन्तपर्वताः" इति विश्वः । उत्खातप्रतिरोपिताश्च, रघुं फलैः धनैः अन्यत्र शस्यैः संवर्द्धयामासुः । "फलं फले धने वीजे निष्पत्तौ भोगलाभयोः । शस्ये—" इति केशवः ॥ ३७ ॥

स इति । सः रघुः बद्धाः द्विरदाः एव सेतवः यैः तैः, सैन्यैः कापिशां नाम नदीम् । "करभाम्" इति केचित् पठन्ति । तीर्त्वा उत्कलैः राजभिः आदर्शितपथः सन्दर्शितमार्गः सन्, कलिङ्गाभिमुखः ययौ ॥ ३८ ॥

स इति । सः रघुः महेन्द्रस्य कुलपर्वतविशेषस्य । "महेन्द्रो मलयः सह्यः शक्तिमानृक्षपर्वतः । विन्ध्यश्च पारिपात्रश्च सप्तैते कुलपर्वताः ।" इति विष्णुपुराणात् । मूर्ध्नि तीक्ष्णं दुःसहं प्रतापं यन्ता सारथिः गम्भीरवेदिनः द्विरदस्य गजविशेषस्य मूर्ध्नि तीक्ष्णं निशितम्, अङ्कुशम् इव न्यवेशयत् निक्षिप्तवान् । "त्वग्भेदाच्छोणितस्रावात् मांसस्य क्रथनादपि । आत्मानं यो न जानाति स स्याद्गम्भीरवेदिता" । इति राजपुत्रीये । "चिरकालेन यो वेत्ति शिक्षां परिचितामपि । गम्भीरवेदी विज्ञेयः स गजो गजवेदिभिः" ॥ इति मृगचर्मीये ॥ ३९ ॥

प्रतिजग्राह कालिङ्गस्तमस्त्रैर्गजसाधनः ।
पक्षच्छेदोद्यतं शक्रं शिलावर्षीव पर्वतः ॥४०॥
द्विषां विषह्य काकुत्स्थस्तत्र नाराचदुर्दिनम् ।
सन्मङ्गलस्नात इव प्रतिपेदे जयश्रियम् ॥४१॥
ताम्बूलीनां दलैस्तत्र रचितापानभूमयः ।
नारिकेलासवं योधाः शात्रवं च पपुर्यशः ॥४२॥
गृहीतप्रतिमुक्तस्य स धर्मविजयी नृपः ।
श्रियं महेन्द्रनाथस्य जहार न तु मेदिनीम् ॥ ४३

प्रतीति । गजसाधनः सन् कालिङ्गः कलिङ्गानां राजा
"द्व्यञ्मगधकलिङ्ग—" इत्यादिना अण्प्रत्ययः । अस्त्रैः आयु
तं रघुं पक्षाणां छेदे उद्यतम् उद्युक्तं, शक्रं शिलावर्षी पर्वत
इव प्रतिजग्राह प्रत्यभियुक्तवान् ॥ ४० ॥

द्विषामिति । काकुत्स्थः रघुः तत्र महेन्द्राद्रौ द्वि
नाराचदुर्दिनं नाराचानां बाणविशेषाणां दुर्दिनं, सचव
वर्षमुच्यते, विषह्य सहित्वा सन्, यथाशास्त्रं मङ्गलस्नातः
विजयमङ्गलार्थम् अभिषिक्तः इव जयश्रियं प्रतिपेदे प्राप
"यत्तु सर्वौषधिस्नानं तन्माङ्गल्यमुदीरितम्" इति यादवः ॥ ४१

ताम्बूलीनामिति । तत्र महेन्द्राद्रौ युध्यन्ते इति योधाः
पचाद्यच् । रचिताः कल्पिताः आपानभूमयः पानयोग्यप्रदेश
यैः ते तथोक्ताः सन्तः, नारिकेलासवं नारिकेलमद्यं ताम्बूली
नामवल्लीनां दलैः पपुः, तत्र विजह्रुः इत्यर्थः, शात्रवं यशश्च पपुः
जह्रुः इत्यर्थः ॥ ४२ ॥

गृहीतेति । धर्मविजयी धर्मार्थं विजयशीलः सः नृपः गृ

ततो वेलातटेनैव फलवत्पूगमालिना ।
अगस्त्याचरितामाशामनाशास्यजयो ययौ ॥४४॥
स सैन्यपरिभोगेण गजदानसुगन्धिना ।
कावेरीं सरितां पत्युः शङ्कनीयामिवाकरोत् ॥४५॥

आदौ गृहीतः पश्चात् प्रतिमुक्तः, गृहीतप्रतिमुक्तः । तस्य महेन्द्र-नाथस्य कालिङ्गस्य श्रियं जहार, धर्मार्थम् इति भावः । मेदिनीं न जहार, शरणागतवात्सल्यात् इति भावः ॥ ४३ ॥

तत इति । ततः प्राचीविजयानन्तरं फलवत्पूगमालिना फलितक्रमुकश्रेणीमता । व्रीह्यादित्वात् इनिप्रत्ययः । वेलायाः समुद्रकूलस्य, तटेन उपान्तेनैव अगस्त्येन आचरिताम् आशां दक्षिणां दिशम्, अनाशास्यजयः अयत्नसिद्धत्वात् अप्रार्थनीयजयः सन् ययौ । "अगस्त्यो दक्षिणामाशाम् आश्रित्य नभसि स्थितः । वरुणस्यात्मजो योगी विन्ध्यवातापिमर्दनः" ॥ इति ब्रह्म-पुराणे ॥ ४४ ॥

स इति । सः रघुः गजानां दानेन मदेन, सुगन्धिना सुरभि-गन्धिना । "गन्धस्य—" इत्यादिना इकारादेशः समासान्तः । यद्यपि गन्धस्येत्वे तदेकान्तग्रहणं कर्त्तव्यमिति नैसर्गिकगन्ध-विवक्षायामेवेकारादेशस्तथापि निरङ्कुशाः कवयः । तथा माघ-काव्ये—"नवपुष्पुकच्छदगुच्छसुगन्धयः सततगास्ततगानगिरो-ऽलिभिः" ( ६।५० ) नैषधे च—"अपां हि तृप्ताय न वारिधारा स्वादुः सुगन्धिः स्वदते तुषारा" ( ३।९३ ) इति । "न कर्म-धारयात्मत्वर्थीय—" इति निषेधादिनिप्रत्ययपक्षोऽपि जघन्य एव । सेनायां समवेताः सैन्याः । "सेनायां समवेता ये सैन्यास्ते सैनिकाश्च ते" इत्यमरः । "सेनाया वा" इति ण्यप्रत्ययः । तेषां

बलैरध्युषितास्तस्य विजिगीषोर्गताध्वनः ।
मारीचोद्भ्रान्तहारीता मलयाद्रेरुपत्यकाः ॥४६॥
ससञ्जुरश्वक्षुण्णानामेलानामुत्पतिष्णवः ।
तुल्यगन्धिषु मत्तेभकटेषु फलरेणवः ॥ ४७ ॥
भोगिवेष्टनमार्गेषु चन्दनानां समर्पितम् ।
नास्रसत्करिणां ग्रैवं त्रिपदीच्छेदिनामपि ॥४८॥

परिभोगेण कावेरीं नाम सरितं सरितां पत्युः समुद्र
शङ्कनीयां न विश्वसनीयाम् इव अकरोत् । सम्भोगचिह्न
नाद्भर्तुरविश्वासो भवति इति भावः ॥ ४५ ॥

बलैरिति । विजिगीषोः विजेतुमिच्छोः गताध्वनः त
स्याः बलैः सैन्यैः । "बलं शक्तिर्बलं सैन्यम्" इति यादवः
मारीचेषु मरीचवनेषु उद्भ्रान्ताः परिभ्रान्ताः हारीताः प
विशेषाः यासु ताः । "तेषां विशेषा हारीतो मद्गुः कारण्ड
प्लवः" इत्यमरः । मलयाद्रेः उपत्यकाः आसन्नभूमयः । "उप
त्यकाद्रेरासन्ना भूमिरूर्द्ध्वमधित्यका" इत्यमरः । "उपाधिभ्यां
त्यकन्—" इत्यादिना त्यकन्प्रत्ययः । अध्युषिताः उपत्यका
उषितम् इत्यर्थः । "उपान्वध्याङ्वसः" इति कर्म्मत्वम् ॥ ४६ ॥

ससञ्जुरिति । अश्वैः क्षुण्णानाम् एलानाम् एलालतानाम्
उत्पतिष्णवः उत्पतनशीलाः । "अलंकृञ्—" इत्यादिना इष्णु
प्रत्ययः । फलरेणवः फलरजांसि तुल्यगन्धिषु समानगन्धिषु
सर्वधनीतिवत् इन्नन्तो बहुव्रीहिः । मत्तेभानां कटेषु ससञ्
सक्ताः । "गजगण्डे कटौ कटौ" इति कोषः ॥ ४७ ॥

भोगीति । चन्दनानां चन्दनद्रुमाणां भोगिवेष्टनमार्गे

दिशि मन्दायते तेजो दक्षिणस्यां रवेरपि।
तस्यामेव रघोः पाण्ड्याः प्रतापं न विषेहिरे ॥४९॥
ताम्रपर्णीसमेतस्य मुक्तासारं महोदधेः।
ते निपत्य ददुस्तस्मै यशः स्वमिव सञ्चितम् ॥५०॥

सर्पवेष्टनात् निम्नेषु समर्पितं सज्जितं त्रिपदीच्छेदिनां पाद-शृङ्खलच्छेदकानाम् अपि। "त्रिपदी पादबन्धनम्" इति यादवः। करिणां ग्रीवासु भवं ग्रैवं कण्ठबन्धनम्। "ग्रीवाभ्योऽण् च" इति अण्प्रत्ययः। न अस्रसत् न स्रस्तमभूत्। "द्युद्भ्यो लुङि" इति परस्मैपदे पुषादित्वात् अङ्। "अनिदिताम्—" इति नकारलोपः॥ ४८॥

दिशीति। दक्षिणस्यां दिशि रवेः अपि तेजः मन्दायते मन्दं भवति। लोहितादित्वात् क्यष्प्रत्ययः। "वा क्यषः" इत्यात्मनेपदम्। दक्षिणायने तेजोमान्द्यात् इति भावः। तस्याम् एव दिशि पाण्ड्याः पाण्डूनां जनपदानां राजानः पाण्ड्याः। "पाण्डोर्ड्यण्" वक्तव्यः। रघोः प्रतापं न विषेहिरे, न सोढ़वन्तः। सूर्य्यविजयिनोऽपि विजितवान् इति नायकस्य महानुत्कर्षो गम्यते॥ ४९॥

ताम्रपर्णीति। ते पाण्ड्याः ताम्रपर्ण्या नद्या समेतस्य सङ्गतस्य, महोदधेः सम्बन्धि सञ्चितं मुक्तासारं मौक्तिकवरम्। "सारो बले स्थिरांशे च न्याय्ये क्लीबं वरे त्रिषु" इत्यमरः। स्वं स्वकीयं सञ्चितं यशः इव तस्मै रघवे निपत्य प्रणिपत्य ददुः। यशसः शुभ्रत्वादौपम्यम्। ताम्रपर्णीसङ्गमे मौक्तिकोत्पत्तिरिति प्रसिद्धम्॥ ५०॥

स निर्विश्य यथाकामं तटेष्वालीनचन्दनौ।
स्तनाविव दिशस्तस्याः शैलौ मलयदर्दुरौ ॥५१॥
असह्यविक्रमः सह्यं दूरान्मुक्तमुदन्वता।
नितम्बमिव मेदिन्याः स्रस्तांशुकमलङ्घयत् ॥५२॥
तस्यानीकैर्विसर्पद्भिरपरान्तजयोद्यतैः।
रामास्त्रोत्सारितोऽप्यासीत् सह्यलग्न इवार्णवः॥५३॥

स इति। असह्येति च। युग्ममेतत्। असह्यविक्रमः
रघुः तटेषु सानुषु आलीनचन्दनौ व्याप्तचन्दनद्रुमौ। "गन्धसार
मलयजो भद्रश्रीश्चन्दनोऽस्त्रियाम्" इत्यमरः। स्तनपक्षे—प्राप्त
व्याप्तचन्दनानुलेपौ तस्याः दक्षिणस्याः दिशः स्तनौ इव स्थितौ
मलयदर्दुरौ नाम शैलौ यथाकामं यथेच्छं निर्विश्य उपभुज्य
"निर्वेशो भृतिभोगयोः" इत्यमरः। उदकानि अस्य सन्तीति
उदन्वान् उदधिः। "उदन्वानुदधौ च" इति निपातः। उदन्वता
दूरात् मुक्तं दूरतः त्यक्तम्। "स्तोकान्तिकदूरार्थकृच्छ्राणि
क्तेन" इति समासः। "पञ्चम्याः स्तोकादिभ्यः" इत्यलुक्।
स्रस्तांशुकं मेदिन्याः नितम्बम् इव स्थितं सह्यं सह्याद्रिं
अलङ्घयत् प्राप्तः अतिक्रान्तो वा ॥ ५१ ॥ ५२ ॥

सम्प्रति प्रतीचीं दिशमभिययावित्याह,—

तस्येति। अपरान्तानां पाश्चात्यानां, जये उद्यतैः उद्युक्तैः।
"अपरान्तास्तु पाश्चात्याः ते च सूर्पारकादयः" इति यादवः।
विसर्पद्भिः गच्छद्भिः तस्य रघोः अनीकैः सैन्यैः। "अनीकं तु
रणे सैन्ये" इति विश्वः। अर्णवः रामस्य जामदग्न्यस्य अस्त्रैः
उत्सारितः परिसारितः अपि सह्यलग्नः इव आसीत्। सैन्यं
द्वितीयोऽर्णव इव अदृश्यत इति भावः॥ ५३ ॥

भयोत्सृष्टविभूषाणां तेन केरलयोषिताम्।
अलकेषु चमूरेणुश्चूर्णप्रतिनिधीकृतः॥ ५४॥
मुरलामारुतोद्धूतमगमत्कैतकं रजः।
तद्योधवारबाणानामयत्नपटवासताम्॥ ५५॥
अभ्यभूयत वाहानां चरतां गात्रशिञ्जितैः।
वर्मभिः पवनोद्धूतराजतालीवनध्वनिः॥ ५६॥
खर्जूरीस्कन्धनद्धानां मदोद्गारसुगन्धिषु।

भयेति। तेन रघुणा भयेन उत्सृष्टविभूषाणां परिहृतभूषणानां केरलयोषितां केरलाङ्गनानाम् अलकेषु चमूरेणुः सेनारजः चूर्णस्य कुङ्कुमादिरजसः, प्रतिनिधीकृतः। एतेन योषितां पलायनं चमूनाश्च तदनुधावनं ध्वन्यते॥ ५४॥

मुरलेति। मुरला नाम केरलदेशेषु काचित् नदी। "मुरवीमारुतोद्धूतम्" इति केचित् पठन्ति। तस्याः मारुतेन उद्धूतम् उत्थापितम्। कैतकं केतकीसम्बन्धि रजः तद्योधवारबाणानां तद्भटकञ्चुकानाम्। "कञ्चुको वारबाणोऽस्त्री" इत्यमरः। अयत्नपटवासताम् अयत्नसिद्धवस्त्रवासनाद्रव्यत्वम् अगमत्। "पिष्टातः पटवासकः" इत्यमरः॥ ५५॥

अभ्यभूयतेति। चरतां गच्छतां वाहानां वाजिनाम्। "वाजिवाहार्वगन्धर्वहयसैन्धवसप्तयः" इत्यमरः। गात्रशिञ्जितैः गात्रेषु शब्दायमानैः। कर्त्तरि क्तः। "गात्रसञ्जितैः" इति वा पाठः। सञ्जतेर्ण्यन्तात् कर्म्मणि क्तः। वर्म्मभिः कवचैः। "मर्म्मरैः" इति पाठे वाहानां गात्रशिञ्जितैः गात्रध्वनिभिः इत्यर्थः। मर्मरः मर्मरायमाणः इति ध्वनेर्विशेषणम्। पवनेन उद्धूतानां कम्पितानां राजतालीवनानां ध्वनिः अभ्यभूयत तिरस्कृतः॥ ५६॥

कटेषु करिणां पेतुः पुन्नागेभ्यः शिलीमुखाः ॥५

अवकाशं किलोदन्वान् रामायाभ्यर्थितो ददौ ।
अपरान्तमहीपालव्याजेन रघवे करम् ॥ ५८ ॥

मत्तेभरदनोत्कीर्णव्यक्तविक्रमलक्षणम् ।
त्रिकूटमेव तत्रोच्चैर्जयस्तम्भं चकार सः ॥ ५९ ॥

खर्जूरीति । खर्जूरीणां तृणद्रुमविशेषाणाम् । "खर्
केतकी ताली खर्जूरी च तृणद्रुमाः" इत्यमरः । स्कन्धेषु प्रक
कन्देषु । "अस्त्री प्रकाण्डः स्कन्धः स्यात् मूलाच्छाखावधिस्तरो
इत्यमरः । बद्धानां बद्धानां, करिणां मदोद्गारेण मदस्रावे
सुगन्धिषु । "गन्धस्य—" इत्यादिना इकारः । कटेषु गण्ड
पुन्नागेभ्यः नागकेशरेभ्यः पुन्नागपुष्पाणि विहाय । ल्यब्लो
पञ्चमी । शिलीमुखाः अलयः पेतुः । "अलिबाणौ शिलीमुखौ
इत्यमरः । ततोऽपि सौगन्ध्यातिशयात् इति भावः ॥५७॥

अवकाशमिति । उदन्वान् उदधिः रामाय जामदग्न्या
अभ्यर्थितः याचितः सन् अवकाशं स्थानं ददौ किल, किले
प्रसिद्धौ । रघवे तु अपरान्तमहीपालव्याजेन करं बलिं ददौ
"बलिहस्तांशवः कराः" इत्यमरः । अपरान्तानां समुद्रमध्यदे
वर्त्तित्वात् तैर्दत्ते करे समुद्रदत्तत्वोपचारः । करदानञ्च भीत्
न तु याञ्चयेति रामात् रघोरुत्कर्षः ॥५८॥

मत्तेति । तत्र सः रघुः मत्तानाम् इभानां रदनोत्कीर्णा
दन्तक्षतानि एव । भावे क्तः । व्यक्तानि स्फुटानि, विक्रमलक्षणा
पराक्रमचिह्नानि विजयवर्णावलिस्थानानि यस्मिन् तं तथो
त्रिकूटम् एव उच्चैः जयस्तम्भं चकार । गाढ़प्रकाशत्रिकूटो
ऽद्रिरेवोत्कीर्णवर्णस्तम्भ इव रघोर्जयस्तम्भोऽभूत् इत्यर्थः ॥५९॥

पारसीकांस्ततो जेतुं प्रतस्थे स्थलवर्त्मना।
इन्द्रियाख्यानिव रिपूंस्तत्त्वज्ञानेन संयमी॥ ६०॥
यवनीमुखपद्मानां सेहे मधुमदं न सः।
बालातपमिवाब्जानामकालजलदोदयः॥ ६१॥
सङ्ग्रामस्तुमुलस्तस्य पाश्चात्यैरश्वसाधनैः।
शार्ङ्गकूजितविज्ञेयप्रतियोधे रजस्यभूत्॥ ६२॥

पारसीकानिति। ततः सः रघुः संयमी योगी तत्त्वज्ञानेन इन्द्रियाख्यान् इन्द्रियनामकान् रिपून् इव पारसीकान् राज्ञः जेतुं स्थलवर्त्मना प्रतस्थे, न तु नेदिष्ठेनापि जलपथेन समुद्रयानस्य निषिद्धत्वात् इति भावः॥ ६०॥

यवनीति। सः रघुः यवनीनां यवनस्त्रीणाम्। "जातेरस्त्रीविषयादयोपधात्" इति ङीष्। मुखानि पद्मानि इव मुखपद्मानि उपमितसमासः। तेषां मधुना मद्येन यः मदः मदरागः। कार्य्यकारणभावयोरभेदेन निर्देशः। तं न सेहे। कमिव? अकाले प्रावृड्व्यतिरिक्ते काले जलदोदयः प्रायेण प्रावृषि पद्मविकासस्याप्रसक्तत्वात् अब्जानां सम्बन्धिनं बालातपम् इव। जलहितत्वादब्जसम्बन्धित्वं सौरातपस्य॥ ६१॥

सङ्ग्राम इति। तस्य रघोः अश्वसाधनैः वाजिसैन्यैः। "साधनं सिद्धिसैन्ययोः" इति हैमः। पश्चाज्जनैः पाश्चात्यैः यवनैः सह। "दक्षिणापश्चात्पुरसस्त्यक्"। सहार्थे तृतीया। शृङ्गाणां विकाराः शार्ङ्गाणि धनूंषि तेषां कूजितैः शब्दैः। "शार्ङ्गं पुनर्धनुर्मात्रे शार्ङ्गिणः। अन्ये च शृङ्गविहिते चापेऽप्याह विशेषतः" इति केशवः। अथवा शार्ङ्गैः शृङ्गसम्बन्धिभिः कूजितैः, विज्ञेयाः

भल्लापवर्जितैस्तेषां शिरोभिः श्मश्रुलैर्महीम्।
तस्तार सरघाव्याप्तैः स क्षौद्रपटलैरिव ॥ ६३ ॥
अपनीतशिरस्त्राणाः शेषास्तं शरणं ययुः।
प्रणिपातप्रतीकारः संरम्भो हि महात्मनाम् ॥६४॥
विनयन्ते स्म तद्योधा मधुभिर्विजयश्रमम्।

अनुमेयाः, प्रतियोधाः प्रतिभटाः यस्मिन् तस्मिन् रजसि, तुमुलः सङ्ग्रामः सङ्कुलं युद्धम् अभूत्। "तुमुलं रणसङ्कुले" इत्यमरः॥६२॥

भल्लेति। सः रघुः भल्लापवर्जितैः बाणविशेषकृत्तैः। "स्नुहीदलफलो भल्लः" इति यादवः। श्मश्रुलैः प्रहढमुखरोमवद्भिः। "सिध्मादिभ्यश्च" इति लच्प्रत्ययः। तेषां पाश्चात्यानां शिरोभिः, सरघाभिः मधुमक्षिकाभिः व्याप्तैः। "सरघा मधुमक्षिका" इत्यमरः। क्षुद्राः सरघाः। "क्षुद्रा व्यङ्गा नटी वेश्या सरघा कण्टकारिका" इत्यमरः। क्षुद्राभिः कृतानि क्षौद्राणि मधूनि। "मधु क्षौद्रं माक्षिकादि" इत्यमरः। "क्षुद्राभ्रमरवटरपादपादञ्" इति संज्ञायाम् अञ्प्रत्ययः। तेषां पटलैः सञ्चयैः इव। "पटलं तिलके नेत्ररोगे छदिषि सञ्चये। पिटके परिवारे च" इति हैमः। महीं तस्तार आच्छादयामास ॥६३॥

अपनीतेति। शेषाः हतावशिष्टाः अपनीतशिरस्त्राणाः अपसारितशीर्षण्याः सन्तः। "शीर्षकम्। शीर्षण्यञ्च शिरस्त्रे" इत्यमरः। शरणागतलक्षणमेतत्। तं रघुं शरणं ययुः, तथाहि महात्मनां संरम्भः कोपः। "संरम्भः सम्भ्रमे कोपे" इति विश्वः। प्रणिपातः प्रणतिरेव प्रतीकारः यस्य सः हि। महतां परकीयमौद्धत्यमेव असह्यं न तु जीवितम् इति भावः ॥६४॥

आस्तीर्णाजिनरत्नासु द्राक्षावलयभूमिषु ॥ ६५ ॥
ततः प्रतस्थे कौबेरीं भास्वानिव रघुर्दिशम् ।
शरैरुस्रैरिवोदीच्यानुद्धरिष्यन् रसानिव ॥ ६६ ॥
विनीताध्वश्रमास्तस्य सिन्धुतीरविचेष्टनैः ।
दुधुवुर्वाजिनः स्कन्धांल्लग्नकुङ्कुमकेसरान् ॥ ६७ ॥

विनयन्त इति । तस्य रघोः योधाः भटाः आस्तीर्णानि अजिनरत्नानि चर्मश्रेष्ठानि यासु तासु द्राक्षावलयानां भूमिषु । "मृद्वीका गोस्तनी द्राक्षा स्वाद्वी मधुरसेति च" इत्यमरः । मधुभिः द्राक्षाफलप्रकृतिकैर्मद्यैः विजयश्रमं युद्धखेदं विनयन्ते स्म अपनीतवन्तः । "कर्तृस्थे चाशरीरे कर्मणि" इत्यात्मनेपदम् । "लट् स्मे" इति भूतार्थे लट् ॥ ६५ ॥

तत इति । ततः रघुः भास्वान् सूर्यः इव शरैः बाणैः उस्रैः किरणैः इव । "किरणोस्रमयूखांशुगभस्तिघृणिघृष्णयः" इत्यमरः । उदीच्यान् उदग्भवान् नृपान् रसान् उदकानि इव उद्धरिष्यन् कौबेरीं कुबेरसम्बन्धिनीं दिशम् उदीचीं प्रतस्थे । अनेकेनेवशब्देनेयमुपमा । यथाह दण्डी—"एकानेकेवशब्दत्वात् सा वाक्यार्थोपमा द्विधा" इति ॥ ६६ ॥

विनीतेति । सिन्धुर्नाम काश्मीरदेशेषु कश्चिन्नदविशेषः । "देशे नदविशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियाम्" इत्यमरः । सिन्धोः तीरे विचेष्टनैः अङ्गपरिवर्तनैः विनीताध्वश्रमाः तस्य रघोः वाजिनः अश्वाः लग्नाः कुङ्कुमकेसराः कुङ्कुमकुसुमकिञ्जल्काः येषां तान् । यद्वा लग्नकुङ्कुमाः केसराः सटाः येषां तान् । "अथ कुङ्कुमम् । काश्मीरजन्म" इत्यमरः । "केसरो नागकेशरे । तुरङ्गसिंहयोः स्कन्धकेशेषु वकुलद्रुमे । पुन्नागद्रुमे

भल्लापवर्जितैस्तेषां शिरोभिः श्मश्रुलैर्महीम् ।
तस्तार सरघाव्याप्तैः स क्षौद्रपटलैरिव ॥ ६३ ॥
अपनीतशिरस्त्राणाः शेषास्तं शरणं ययुः ।
प्रणिपातप्रतीकारः संरम्भो हि महात्मनाम् ॥६४॥
विनयन्ते स्म तद्योधा मधुभिर्विजयश्रमम् ।

अनुमेयाः, प्रतियोधाः प्रतिभटाः यस्मिन् तस्मिन् रजसि, तुमुलः सङ्ग्रामः सङ्कुलं युद्धम् अभूत्। "तुमुलं रणसङ्कुले" इत्यमरः॥६२॥

भल्लेति। सः रघुः भल्लापवर्जितैः बाणविशेषकृत्तैः। "स्त्रु हीदलफलो भल्लः" इति यादवः। श्मश्रुलैः प्रवृद्धमुखरोमवद्भिः। "सिध्मादिभ्यश्च" इति लच्प्रत्ययः। तेषां पाश्चात्यानां शिरोभिः, सरघाभिः मधुमक्षिकाभिः व्याप्तैः। "सरघा मधुमक्षिका" इत्यमरः। क्षुद्राः सरघाः। "क्षुद्रा व्यङ्गा नटी वेश्या सरघा कण्टकारिका" इत्यमरः। क्षुद्राभिः कृतानि क्षौद्राणि मधूनि। "मधु क्षौद्रं माक्षिकादि" इत्यमरः। "क्षुद्राभ्रमरवटरपादपादञ्" इति संज्ञायाम् अञ्प्रत्ययः। तेषां पटलैः सञ्चयैः इव। "पटलं तिलके नेत्ररोगे छदिषि सञ्चये। पिटके परिवारे च" इति हैमः। महीं तस्तार आच्छादयामास ॥६३॥

अपनीतेति। शेषाः हतावशिष्टाः अपनीतशिरस्त्राणाः अपसारितशीर्षण्याः सन्तः। "शीर्षकम्। शीर्षण्यञ्च शिरस्त्रे" इत्यमरः। शरणागतलक्षणमेतत्। तं रघुं शरणं ययुः, तथाहि महात्मनां संरम्भः कोपः। "संरम्भः सम्भ्रमे कोपे" इति विश्वः। प्रणिपातः प्रणतिरेव प्रतीकारः यस्य सः हि। महतां परकीयमौद्धत्यमेव असह्यं न तु जीवितम् इति भावः ॥६४॥

आस्तीर्णाजिनरत्नासु द्राक्षावलयभूमिषु ॥ ६५ ॥
ततः प्रतस्थे कौवेरीं भास्वानिव रघुर्दिशम्।
शरैरुस्रैरिवोदीच्यानुद्धरिष्यन् रसानिव ॥ ६६ ॥
विनीताध्वश्रमास्तस्य सिन्धुतीरविचेष्टनैः।
दुधुवुर्वाजिनः स्कन्धान् लग्नकुङ्कुमकेसरान् ॥६७॥

विनयन्त इति। तस्य रघोः योधाः भटाः आस्तीर्णानि अजिनरत्नानि चर्मश्रेष्ठानि यासु तासु द्राक्षावलयानां भूमिषु। "मृद्वीका गोस्तनी द्राक्षा स्वाद्वी मधुरसेति च" इत्यमरः। मधुभिः द्राक्षाफलप्रकृतिकैर्मद्यैः विजयश्रमं युद्धखेदं विनयन्ते स्म अपनीतवन्तः। "कर्तृस्थे चाशरीरे कर्मणि" इत्यात्मनेपदम्। "लट् स्मे" इति भूतार्थे लट् ॥ ६५ ॥

तत इति। ततः रघुः भास्वान् सूर्य्यः इव शरैः बाणैः उस्रैः किरणैः इव। "किरणोस्रमयूखांशुगभस्तिघृणिघृष्णयः" इत्यमरः। उदीच्यान् उदग्भवान् नृपान् रसान् उदकानि इव उद्धरिष्यन् कौवेरीं कुवेरसम्बन्धिनीं दिशम् उदीचीं प्रतस्थे। अनेकेनेवशब्देनेयमुपमा। यथाह दण्डी—"एकानेकेवशब्दत्वात् सा वाक्यार्थोपमा द्विधा" इति ॥ ६६ ॥

विनीतेति। सिन्धुर्नाम काश्मीरदेशेषु कश्चिन्नदविशेषः। "देशे नदविशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियाम्" इत्यमरः। सिन्धोः तीरे विचेष्टनैः अङ्गपरिवर्तनैः विनीताध्वश्रमाः तस्य रघोः वाजिनः अश्वाः लग्नाः कुङ्कुमकेसराः कुङ्कुमकुसुमकिञ्जल्काः येषां तान्। यद्वा लग्नकुङ्कुमाः केसराः सटाः येषां तान्। "अथ कुङ्कुमम्। काश्मीरजन्म" इत्यमरः। "केसरो नागकेशरे। तुरङ्गसिंहयोः स्कन्धकेशेषु वकुलद्रुमे। पुन्नागवृक्षे

तत्र हूणावरोधानां भर्तृषु व्यक्तविक्रमम् ।
कपोलपाटलादेशि बभूव रघुचेष्टितम् ॥ ६८ ॥
काम्बोजाः समरे सोढुं तस्य वीर्य्यमनीश्वराः ।
गजालानपरिक्लिष्टैरक्षोटैः सार्द्धमानताः ॥६९॥
तेषां सदश्वभूयिष्ठास्तुङ्गा द्रविणराशयः ।
उपदा विविशुः शश्वन्नोत्सेकाः कोशलेश्वरम् ॥७०

विष्कम्भे स्यात्" इति हैमः। स्कन्धान् कायान्। "स्कन्धः प्रकाण्डे कायेंऽसे विज्ञानादिषु पञ्चसु। नृपे समूहे व्यूहे च" इति हैमः। दुधुवुः कम्पयन्ति स्म ॥ ६७ ॥

तत्रेति। तत्र उदीच्यां दिशि भर्तृषु व्यक्तविक्रमं भर्तृवधेन स्फुटपराक्रमम् इत्यर्थः, रघुचेष्टितं रघुव्यापारः हूणाः जनपदाख्याः क्षत्रियाः तेषाम् अवरोधाः अन्तःपुरस्त्रियः, तासां कपोलेषु पाटलस्य पाटलिम्नः ताडनादिजनितारुण्यस्य आदेशि उपदेशकं बभूव, अथवा पाटलः आदेशी आदिष्टा यस्य तत् बभूव, स्वयं लेख्यायते इत्यर्थः ॥६८॥

काम्बोजा इति। काम्बोजाः राजानः समरे तस्य रघोः वीर्य्यं प्रभावम्। "वीर्य्यं तेजःप्रभावयोः" इति हैमः। सोढुम् अनीश्वराः असमर्थाः सन्तः गजानाम् आलानं बन्धनम्। भावे ल्युटि। "विभाषा लीयतेः" इत्यात्वम्। तेन परिक्लिष्टैः परिवर्त्तितैः अक्षोटैः वृक्षविशेषैः सार्द्धम् आनताः ॥६९॥

तेषामिति। तेषां काम्बोजानां सद्भिः अश्वैः भूयिष्ठाः बहुलाः तुङ्गाः द्रविणानां हिरण्यानाम्। "हिरण्यं द्रविणं द्युम्नम्" इत्यमरः। राशयः एव उपदाः उपायनानि। "उपा-

ततो गौरीगुरुं शैलमारुरोहाश्वसाधनः।
वर्धयन्निव तत्कूटानुद्धूतैर्धातुरेणुभिः॥ ७१॥
शशंस तुल्यसत्त्वानां सैन्यघोषेऽप्यसम्भ्रमम्।
गुहाशयानां सिंहानां परिवृत्यावलोकितम्॥ ७२॥

शनमुपप्रायम्रमुपहारस्तथोपदा:" इत्यमरः। कोशलेश्वरं कोशल-देशाधिपतिं तं रघुं शश्वत् असकृत् विविशुः। "मुहुः पुनः पुनः शश्वदभीक्ष्णमसकृत्समाः" इत्यमरः। तथापि उत्कोचाः गर्वास्तु न विविशुः, सत्यपि गर्वकारणे न अगर्व इत्यर्थः॥ ७०॥

तत इति। ततः अनन्तरम् अश्वसाधनः सन् गौर्य्याः गुरुं पितरं शैलं हिमवन्तम् उद्धूतैः अश्वखुरोद्धूतैः धातूनां गैरिका-दीनां रेणुभिः तत् कूटान् तस्य शृङ्गाणि। "कूटोऽस्त्री शिखरं शृङ्गम्" इत्यमरः। वर्धयन् इव आरुरोह। उत्पतद्धूलिदर्शनात् गिरिशिखरवृद्धिभ्रमः अजायत इति भावः॥ ७१॥

शशंसेति। तुल्यसत्त्वानां सैन्यैः समानबलानां, गुहासु शेरते इति गुहाशयाः तेषाम्। "अधिकरणे शेतेः" इत्यच्प्रत्ययः। "दरी तु कन्दरो वा स्त्री देवखातबिले गुहा" इत्यमरः। सिंहानां हरीणाम्। "सिंहो मृगेन्द्रः पञ्चास्यो हर्य्यक्षः केसरी हरिः" इत्यमरः। सम्बन्धि परिवृत्य परावृत्य अवलोकितं शयित्वैव ग्रीवाभङ्गेनावलोकनं कर्तृ, सैन्यघोषे सेनाकलकले सम्भ्रमकारणे सत्यपि असम्भ्रमम् अन्तःक्षोभविरहितत्वम्। "नञः प्रसज्यप्रति-षेधेऽपि समास इष्यते"। शशंस कथयामास। सैन्यैः भयः इत्यर्थात् लभ्यते। वाह्यचेष्टितमेव मनोवृत्तेरनुमापकम् इति भावः। असम्भ्रान्तत्वे हेतुः तुल्यसत्त्वानामिति। न हि समबलः सम-बलाद् बिभेति इति भावः॥ ७२॥

भूर्जेषु मर्मरीभूताः कीचकध्वनिहेतवः ।
गङ्गाशीकरिणो मार्गे मरुतस्तं सिषेविरे ॥ ७३ ॥
विशश्रमुर्नमेरूणां छायास्वध्यास्य सैनिकाः ।
दृषदो वासितोत्सङ्गा निषण्णमृगनाभिभिः ॥७४॥
सरलासक्तमातङ्गग्रैवेयस्फुरितत्विषः ।
आसन्नोषधयो नेतुर्नक्तमस्नेहदीपिकाः ॥७५॥

भूर्जेष्विति । भूर्जेषु भूर्जपत्रेषु । "भूर्जपत्रो भुजो भूर्जो मृदुत्वक् चर्मिका मता" इति यादवः । मर्मरः शुष्कपर्णध्वनिः । "मर्मरः शुष्कपर्णानाम्" इति यादवः । अयञ्च शुष्कादिद्रव्यवस्तुष्वपि वर्तते, प्रयोज्यते च—"मर्मरैरगुरुधूपगन्धिभिः" इति । अतो मर्मरीभूताः, मर्मरशब्दवन्तो भूताः इत्यर्थः । कीचकानां वेणुविशेषाणां ध्वनिहेतवः, स्रोतस्त्वाच्च इति भावः । गङ्गाशीकरिणः शीतलाः इत्यर्थः, मरुतः वाताः मार्गे तं सिषेविरे ॥ ७३ ॥

विशश्रमुरिति । सैनिकाः सेनायां समवेताः । प्राग्वहतीय-ठक्प्रत्ययः । नमेरूणां सुरपुन्नागानां छायासु निषण्णानां दृषदुपविष्टानां मृगाणां कस्तूरीमृगाणां नाभिभिः वासितोत्सङ्गाः सुरभितलाः दृषदः शिलाः अध्यास्य अधिष्ठाय । "अधिशीङ्स्थासां कर्म" इति कर्मत्वम् । दृषत्सु अधिष्ठायेत्यर्थः, विशश्रमुः विश्रान्ताः ॥ ७४ ॥

सरलेति । सरलेषु देवदारुविशेषेषु आसक्तानि यानि मातङ्गानां गजानां, ग्रीवासु भवानि ग्रैवेयाणि कण्ठबन्धनानि । "ग्रीवाभ्योऽण् च" इति चकारात् ढञ्प्रत्ययः । तेषु स्फुरित-

परस्परेण विज्ञातस्तेषूपायनपाणिषु।
राज्ञा हिमवतः सारो राज्ञः सारो हिमाद्रिणा ॥७९॥
तत्राक्षोभ्यं यशोराशिं निवेश्यावरोह सः।
पौलस्त्यतुलितस्याद्रेरादधान इव ह्रियम् ॥८०॥
चकम्पे तीर्णलौहित्ये तस्मिन् प्राग्ज्योतिषेश्वरः।
तद्गजालानतां प्राप्तैः सह कालागुरुद्रुमैः ॥८१॥
न प्रसेहे स रुद्धार्कमधारावर्षदुर्दिनम्।

अयोदाहरणं जयख्यापकं प्रबन्धविशेषं गापयामास। 'चलि-बुधि—' इत्यादिना किन्नराणां कर्मत्वम् ॥ ७८ ॥

परस्परेणेति। तेषु गणेषु उपायनयुक्ताः पाणयः येषां तेषु सत्सु परस्परेण अन्योन्यं राज्ञा हिमवतः सारः धनरूपः विज्ञातः, हिमाद्रिणा अपि राज्ञः सारः बलरूपः विज्ञातः। एतेन तत्रत्यवस्तूनामनर्घ्यत्वं गणानामभूतपूर्वश्च पराजय इति ध्वन्यते ॥ ७९ ॥

तत्रेति। सः रघुः तत्र हिमाद्रौ अक्षोभ्यम् अक्षुण्णं यशोराशिं निवेश्य निधाय, पौलस्त्येन रावणेन तुलितस्य चालितस्य अद्रेः कैलासस्य ह्रियम् आदधानः जनयन् इव अवरोह अवततार, कैलासमगत्वैव प्रतिनिवृत्तः इत्यर्थः। न हि मृतः परेण पराजितमभियुज्यते इति भावः ॥ ८० ॥

चकम्प इति। तस्मिन् रघौ तीर्णः लौहित्योनाम नदी येन तस्मिन् तीर्णलौहित्ये सति प्राग्ज्योतिषाणां जनपदानाम् ईश्वरः तस्य रघोः गजानाम् आलानतां प्राप्तैः कालागुरुद्रुमैः कृष्णागुरुतरुभिः सह चकम्पे कम्पितवान् ॥ ८१ ॥

रथवर्त्मरजोऽप्यस्य कुत एव पताकिनीम् ॥८२॥
तमीशः कामरूपाणामत्याखण्डलविक्रमम् ।
भेजे भिन्नकटैर्नागैरन्यानुपरुरोध यैः ॥ ८३ ॥
कामरूपेश्वरस्तस्य हेमपीठाधिदेवताम् ।
रत्नपुष्पोपहारेण छायामानर्च पादयोः ॥ ८४ ॥
इति जित्वा दिशो जिष्णुर्न्यवर्तत रथोद्धतम् ।
रजो विश्रामयन् राज्ञां छत्रशून्येषु मौलिषु ॥८५॥

नेति। सः प्राग्ज्योतिषेश्वरः रुद्धार्कम् आहतसूर्य्यम्, अधारावर्षस्य तत् दुर्दिनस्य, धारावृष्टिं विना दुर्दिनभूतम् अस्य रघोः रथवर्त्म रजः अपि न प्रसेहे, पताकिनीं सेनां कुत एव सेहे? न कुतोऽपि इत्यर्थः ॥ ८२ ॥

तमिति। कामरूपाणां नाम देशानाम् ईशः अत्याखण्डल-विक्रमम् अतीन्द्रपराक्रमं तं रघुं भिन्नाः स्रवन्मदाः कटाः गण्डाः येषां तैः नागैः गजैः साधनैः भेजे, नागान् दत्त्वा शरणं गतः इत्यर्थः। कीदृशैर्नागैः? यैः अन्यान् रघुव्यतिरिक्तान् नृपान् उपरुरोध। शूराणामपि शूरो रघुः इति भावः ॥ ८३ ॥

कामरूपेश्वर इति। कामरूपेश्वरः हेमपीठस्य अधिदेवतां तस्य रघोः पादयोः छायां कनकमयपादपीठव्यापिनीं कान्तिं रत्नानि एव पुष्पाणि तेषाम् उपहारेण समर्पणेन आनर्च अर्चयामास ॥ ८४ ॥

इतीति। जिष्णुः जयशीलः। "ग्लाजिस्थश्च ग्स्नुः" इति ग्स्नुप्रत्ययः। सः रघुः इति इत्थं दिशः जित्वा रथैः उद्धतं रजः छत्रशून्येषु रघोरेकच्छत्रत्वात् इति भावः। राज्ञां

स विश्वजितमाजह्रे यज्ञं सर्वस्वदक्षिणम् ।
आदानं हि विसर्गाय सतां वारिमुचामिव ॥८६॥

सत्रान्ते सचिवसखः पुरस्क्रियाभि-
र्गुर्वीभिः शमितपराजयव्यलीकान् ।
काकुत्स्थश्चिरविरहोत्सुकावरोधान्
राजन्यान् स्वपुरनिवृत्तयेऽनुमेने ॥ ८७ ॥

मौलिषु किरीटेषु । "मौलिः किरीटे धम्मिल्ले चूडाकङ्केलि मूर्द्धजे" इति हैमः । विश्रामयन् सङ्क्रामयन् इत्यर्थः, न्यवर्त्तत निवृत्तः ॥ ८५ ॥

स इति । सः रघुः सर्वस्वं दक्षिणा यस्य तं सर्वस्वदक्षिणम् । "विश्वजित् सर्वस्वदक्षिणः" इति श्रुतेः । विश्वजितं नाम यज्ञम् आजह्रे कृतवान् इत्यर्थः । युक्तञ्चैतदित्याह,—सतां साधूनां वारिमुचां मेघानाम् इव, आदानम् अर्जनं विसर्गाय त्यागाय हि पात्रविनियोगाय इत्यर्थः ॥ ८६ ॥

सत्रान्त इति । काकुत्स्थः रघुः सत्रान्ते यज्ञान्ते । "सत्रमाच्छादने यज्ञे सदादाने धनेऽपि च" इत्यमरः । सचिवानाम् अमात्यानां सखा इति सचिवसखः सन् । "सचिवो सहायेऽमात्ये" इति हैमः । तेषामत्यन्तानुसरणद्योतनार्थं राज्ञः सखित्वव्यपदेशः । "राजाहः सखिभ्यष्टच्" । गुर्वीभिः महतीभिः । "गुरुर्महत्याङ्गिरसे पित्रादौ धर्मदेशके" इति हैमः । पुरस्क्रियाभिः पूजाभिः शमितं पराजयेन व्यलीकं दुःखं वैलक्ष्यं वा येषां तान् । "दुःखे वैलक्ष्ये व्यलीकम्" इति यादवः । चिरविरहेण उत्सुकाः उत्कण्ठिताः अवरोधाः अन्तःपुराङ्गनाः येषां तान्, राज्ञः अपत्यानि राजन्याः क्षत्रियाः तान् । "राजश्वशुराद् यत्" इति अ

ते रेखाध्वजकुलिशातपत्रचिह्नं
सम्राजश्चरणयुगं प्रसादलभ्यम् ।
प्रस्थानप्रणतिभिरङ्गुलीषु चक्रु-
र्मौलिस्रक्च्युतमकरन्दरेणुगौरम् ॥ ८८ ॥

इति श्रीरघुवंशे महाकाव्ये कालिदासकृतौ
रघुदिग्विजयो नाम चतुर्थः सर्गः ।

ार्थे यत्प्रत्ययः । "मूर्द्धाभिषिक्तो राजन्यो बाहुजः क्षत्रियो विराट्" इत्यमरः । स्वपुरं प्रति निवृत्तये प्रतिगमनाय नुमेने अनुज्ञातवान् । प्रहर्षणीवृत्तमेतत् । तदुक्तम्—"म्नौ ज्रौ ास्त्रिदशयतिः प्रहर्षणीयम्" इति ॥८७॥

त इति । ते राजानः रेखाः एव ध्वजाश्च कुलिशानि च ातपत्राणि च ध्वजाद्याकाररेखाः इत्यर्थः, तानि चिह्नानि यस्य तत् तथोक्तं, प्रसादेन एव लभ्यं प्रसादलभ्यं सम्राजः सार्वभौमस्य रघोः चरणयुगं प्रस्थाने प्रयाणसमये याः प्रणतयः नमस्काराः ताभिः करणैः अङ्गुलीषु, मौलिषु केशबन्धनेषु याः स्रजः माल्यानि ताभ्यः च्युतैः मकरन्दैः पुष्परसैः । "मकरन्दः पुष्परसः" इत्यमरः । रेणुभिः परागैश्च । "परागः सुमनोरजः" इत्यमरः । गौरं गौरवर्णं चक्रुः ॥८८॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां रघुवंशटीकायां सञ्जीवनीसमाख्यायां
चतुर्थः सर्गः ।

———

## पञ्चमः सर्गः ।

तमध्वरे विश्वजिति क्षितीशं
निःशेषविश्राणितकोषजातम् ।
उपात्तविद्यो गुरुदक्षिणार्थी
कौत्सः प्रपेदे वरतन्तुशिष्यः ॥ १ ॥
स मृण्मये वीतहिरण्मयत्वात्
पात्रे निधायार्घ्यमनर्घशीलः ।

इन्दीवरदलश्याममिन्दिरानन्दकन्दलम् ।
वन्दारुजनमन्दारं वन्देऽहं यदुनन्दनम् ॥

तमिति । विश्वजिति विश्वजिन्नाम्नि अध्वरे यज्ञे । "यज्ञः सवोऽध्वरो यागः" इत्यमरः । निःशेषं विश्राणितं दत्तम् । श्रण दाने चुरादिः । कोषाणाम् अर्थराशीनां जातं समूहः येन तं तथोक्तम् । "कोषोऽस्त्री कुड्मले खड्गपिधानेऽर्थौघदिव्ययोः" इत्यमरः । "जातं जनिसमूहयोः" इति शाश्वतः । एतेन कौत्सस्य अनवसरप्राप्तिं सूचयति । तं क्षितीशं रघुम् उपात्तविद्यः लब्धविद्यः वरतन्तोः शिष्यः कौत्सः । "ऋष्यन्धक—" इत्यण्, इञोऽपवादः । गुरुदक्षिणार्थी । "पुष्करादिभ्यो देशे" इत्यत्र अर्थाच्चासन्निहिते तदन्ताच्चेतीनिः, अप्रत्याख्येयः इति भावः । प्रपेदे प्राप । अस्मिन् सर्गे वृत्तमुपजातिः । तल्लक्षणन्तु,—"स्यादिन्द्रवज्रा यदि तौ जगौ गः" । "उपेन्द्रवज्रा जतजास्ततो गौ" । "अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः" ॥ इति ॥१॥

स इति । अनर्घशीलः अमूल्यस्वभावः असाधारणस्वभावः

श्रुतप्रकाशं यशसा प्रकाशः
प्रत्युज्जगामातिथिमातिथेयः ॥ २ ॥

तमर्चयित्वा विधिवद्विधिज्ञः
तपोधनं मानधनाग्रयायी ।
विशाम्पतिर्विष्टरभाजमारात्
कृताञ्जलिः कृत्यविदित्युवाच ॥ ३ ॥

इत्यर्थः। "मूल्ये पूजाविधावर्घः" इति "शीलं स्वभावे सद्वृत्ते" इति च अमरशाश्वतौ। यशसा कीर्त्या प्रकाशते इति प्रकाशः। पचाद्यच्। अतिथिषु साधुः आतिथेयः। "पथ्यतिथिवसतिस्वपतेर्ढञ्" इति ढञ्। सः रघुः हिरण्यस्य विकारः हिरण्मयम्। "दाण्डिनायन—"आदिसूत्रेण निपातः। वीतहिरण्मयत्वात् अपगतसुवर्णपात्रत्वात्, यज्ञस्य सर्वस्वदक्षिणकत्वात् इति भावः। मृण्मये मृद्विकारे पात्रे, अर्घार्थमिदम् अर्घ्यम्। "पादार्घाभ्यां च" इति यत्। पूजार्थं द्रव्यं निधाय श्रुतेन शास्त्रेण प्रकाशं प्रसिद्धं, श्रूयते इति श्रुतं वेदशास्त्रम्। "श्रुतं शास्त्रावधृतयोः" इत्यमरः। अतिथिम् अभ्यागतं कौत्सम्। "अतिथिर्ना गृहागते" इत्यमरः। प्रत्युज्जगाम ॥ २ ॥

तमिति। विधिज्ञः शास्त्रज्ञः अकरणे प्रत्यवायभीरुः इत्यर्थः। मानधनानाम् अग्रयायी अग्रेसरः, अपयशोभीरुः इत्यर्थः। कृत्यवित् कार्यज्ञः। आगमनप्रयोजनमवश्यं प्रष्टव्यमिति कृत्यवित्, विशाम्पतिः मनुजेश्वरः। "द्वौ विशौ वैश्यमनुजौ" इत्यमरः। विष्टरभाजम् आसनगतम् उपविष्टम् इत्यर्थः। "विष्टरो विटपी दर्भमुष्टिः पीठाद्यमासनम्" इत्य-

...ष्व ...र्गं
...॥ ६ ॥
...ख्व।
...च्छदामास्र...
क्रियानिमित्तेष्वपि व...
दभग्नकामा मुनिभिः कुशेषु
तदङ्कशय्याच्युतनाभिनाला
कच्चिन्मृगीणामनघा प्रसूतिः ? ॥ ७ ॥ ...षं,

...ोपि, स्वपदापहारशङ्काजनकम् इत्यर्थः। यत् तपः शश्वत्
...त्। "मुहुः पुनः पुनः शश्वत् अभीक्ष्णमसकृत्समाः"
...रः। सम्भृतं सञ्चितं महर्षेः वरतन्तोः त्रिविधं वाङ्मनः
...कं तत् तपः अन्तरायैः विघ्नैः इन्द्रप्रेरिताप्सरःप्रायैः व्ययं
... न आपाद्यते कच्चित् ? न नीयते किम् ?। "कच्चित्
...मवेदने" इत्यमरः ॥ ५ ॥
...वारीति। आधारबन्धप्रमुखैः आलवालनिर्माणादिभिः
...; उपायैः। "आधार आलवालेऽम्बुबन्धेऽधिकरणेऽपि च"
...विष्णः। सुतेभ्यः निर्गतः विशेषः अतिशयः यस्मिन् कर्मणि
...त्वा, संवर्द्धितानां आश्रमच्छिदां वः आश्रमपादपानां वाय्वादिः,
...रूपद्रवात् दावानलादिरुपप्लवो बाधकः न कच्चित् ? नास्ति
...म् ? ॥ ६ ॥
...ष्वेति। क्रियानिमित्तेषु अपि अनुष्ठानसाधनेषु अपि
...षु मुनिभिः वत्सलत्वात् ममत्वहेतोः अभग्नकामा अप्रति-
...च्छा, तेषां मुनीनाम् अङ्काः एव शय्याः तासु च्युतानि

आधारबन्धप्रमुखैः प्रयत्नैः
संवर्धितानां सुतनिर्विशेषम् ।
कच्चिन्न वाय्वादिरुपप्लवो वः
श्रमच्छिदामाश्रमपादपानाम् ? ॥ ६ ॥
क्रियानिमित्तेष्वपि वत्सलत्वा-
दभग्नकामा मुनिभिः कुशेषु ।
तदङ्कशय्याच्युतनाभिनाला
कच्चिन्मृगीणामनघा प्रसूतिः ? ॥ ७ ॥

ितोऽपि, स्वपदापहारशङ्काजनकम् इत्यर्थः । यत् तपः शश्वत् सकृत् । "मुहुः पुनः पुनः शश्वत् अभीक्ष्णमसकृत्समाः" इत्यमरः । सम्भृतं सञ्चितं महर्षेः वरतन्तोः त्रिविधं वाङ्मनः ायजं तत् तपः अन्तरायैः विघ्नैः इन्द्रप्रेरिताप्सरःप्रायैः व्ययं र्थं न आपाद्यते कच्चित् ? न नीयते किम् ? । "कच्चित् ामप्रवेदने" इत्यमरः ॥ ५ ॥

आधारेति । आधारबन्धप्रमुखैः आलवालनिर्माणादिभिः त्नैः उपायैः । "आधार आलवालेऽम्बुबन्धेऽधिकरणेऽपि च" ति विश्वः । सुतेभ्यः निर्गतः विशेषः अतिशयः यस्मिन् कर्मणि तथा, संवर्धितानां श्रमच्छिदां वः आश्रमपादपानां वाय्वादिः, ादिशब्दात् दावानलादिरुपप्लवो बाधकः न कच्चित् ? नास्ति म् ? ॥ ६ ॥

क्रियेति । क्रियानिमित्तेषु अपि अनुष्ठानसाधनेषु अपि षु मुनिभिः वत्सलत्वात् ममत्वे हात् अभग्नकामा अप्रति- तेच्छा, तेषां मुनीनाम् अङ्काः एव शय्याः तासु च्युतानि

निर्वर्त्त्यते यैर्नियमाभिषेको
येभ्यो निवापाञ्जलयः पितृणाम्।
तान्युञ्छषष्ठाङ्कितसैकतानि
शिवानि वस्तीर्थजलानि कच्चित्?॥ ८॥
नीवारपाकादि कडङ्गरीयै-
रामृश्यते जानपदैर्न कच्चित्?।

नाभिनालानि यस्याः सा तथोक्ता, मृगीणां प्रसूतिः सन्ततिः
अनघा अव्यसना कच्चित्? अनपायिनी किम्? इत्यर्थः।
"दुःखैनोव्यसनेष्वघम्" इति यादवः। ते हि व्यालभयाद् दर्भ-
रात्रम् अङ्के एव धारयन्ति॥ ७॥

निर्वर्त्त्यत इति। यैः तीर्थजलैः नियमाभिषेकः नित्य-
स्नानादिः निर्वर्त्त्यते निष्पाद्यते, येभ्यः जलेभ्यः उद्धृत्य इति
शेषः। पितृणाम् अग्निष्वात्तादीनां निवापाञ्जलयः तर्पणा-
ञ्जलयः। "पितृदानं निवापः स्यात्" इत्यमरः। निर्वर्त्त्यन्ते।
उञ्छानां प्रकीर्णोद्धृतधान्यानां षष्ठैः षष्ठभागैः पालकत्वात्
राजग्राह्यैः अङ्कितानि सैकतानि पुलिनानि येषां तानि तथो-
क्तानि, वः युष्माकं तानि तीर्थजलानि शिवानि भद्राणि कच्चित्?
अनुपप्लवानि किम्? इत्यर्थः। "उञ्छो धान्यांशकादानं कणि-
शाद्यर्जनं शिलम्" इति यादवः। "षष्ठाष्टमाभ्यां ञ च" इति
षष्ठशब्दाद् भागार्थे अन्प्रत्ययः। अतएव अपूरणार्थत्वात् "पूरण-
गुण—" इत्यादिना न षष्ठीसमासप्रतिषेधः। सिकताः येषु
सन्ति सैकतानि। "सिकताशर्कराभ्यां च" इति अण् प्रत्ययः।

नीवारेति। कालेषु योग्यकालेषु उपपन्नानाम् आगतानाम्

कालोपपन्नातिथिकल्प्यभागं
वन्यं शरीरस्थितिसाधनं वः ॥ ९ ॥
अपि प्रसन्नेन महर्षिणा त्वं
सम्यग्विनीयानुमतो गृहाय।
कालो ह्ययं सङ्क्रमितुं द्वितीयं
सर्वोपकारक्षममाश्रमं ते ॥ १० ॥

अतिथीनां कल्प्याः भागाः यस्य तत् तथोक्तम्। वने भवं वन्यं, शरीरस्थितेः जीवितस्य साधनं वः युष्माकम्। पच्यते इति पाकः फलम्, धान्यम् इति यावत्। नीवारपाकादि, आदिशब्दात् श्यामाकादिधान्यसंग्रहः। जनपदेभ्यः आगतैः जानपदैः। "तत आगतः" इत्यण्। काङ्कुरीयैः काङ्कुरं तुषम् अर्हन्तीति काङ्कुरीयाः। "काङ्कुरी तुषं क्लीवे धान्यत्वचि तुषः पुमान्" इत्यमरः। "काङ्कुरदक्षिणाच्छ च" इति छप्रत्ययः। तैः गोमहिषादिभिः न आमृश्यते कच्चित्? न भक्ष्यते किम्? इत्यर्थः ॥ ९ ॥

अपीति। किञ्च त्वं प्रसन्नेन सता महर्षिणा सम्यक् विनीय शिक्षयित्वा विद्यामुपदिश्य इत्यर्थः। गृहाय गृहस्थाश्रमं प्रवेष्टुम्। क्रियार्थोपपद—" इत्यादिना चतुर्थी। अनुमतः अपि? अनुज्ञातः किम्? हि यस्मात् ते तव सर्वेषाम् आश्रमाणां ब्रह्मचर्य्यवानप्रस्थयतीनाम् उपकारे क्षमं शक्तम्। "क्षमं शक्ते हिते त्रिषु" इत्यमरः। द्वितीयम् आश्रमं गार्हस्थ्यं सङ्क्रमितुं प्राप्तुम् अयं कालः, विद्याग्रहणानन्तर्य्यात् तस्य इति भावः। "कालसमयवेलासु तुमुन्" इति तुमुन्। सर्वोपकार-

तवार्हतो नाभिगमेन तृप्तं
मनो नियोगक्रिययोत्सुकं मे।
अप्याज्ञया शासितुरात्मना वा
प्राप्तोऽसि सम्भावयितुं वनान्माम्॥ ११॥
इत्यर्घ्यपात्रानुमितव्ययस्य
रघोरुदारामपि गां निशम्य।
स्वार्थोपपत्तिं प्रति दुर्बलाश-
स्तमित्यवोचद् वरतन्तुशिष्यः॥ १२॥

श्रममित्यत्र मनुः,—"यथा मातरमाश्रित्य सर्वे जीवन्ति जन्तवः।
वर्त्तन्ते गृहिणस्तद्वत् आश्रित्येतर आश्रमाः" ॥ इति ॥ १०॥

कुशलप्रश्नं विधाय आगमनप्रयोजनप्रश्नं चिकीर्षुराह,—

तवेति। अर्हतः पूज्यस्य प्रशस्तस्य। "अर्हः प्रशंसायाम्"
इति शतृप्रत्ययः। तव अभिगमेन आगमनमात्रेण मे मनः न
तृप्तं न तुष्टं, किन्तु नियोगक्रियया आज्ञाकरणेन उत्सुकं
सोत्कण्ठम्। "इष्टार्थोद्युक्त उत्सुकः" इत्यमरः। "प्रसितोत्-
सुकाभ्यां तृतीया च" इति सप्तम्यर्थे तृतीया। शासितुः गुरोः
आज्ञया अपि आत्मना स्वतो वा। "प्रकृत्यादिभ्य उपसंख्यानम्"
इति तृतीया। मां सम्भावयितुं वनात् प्राप्तोऽसि? गुर्वर्थं स्वार्थं
वा आगमनम् इत्यर्थः॥ ११॥

इतीति। अर्घ्यपात्रेण मृण्मयेन अनुमितः व्ययः सर्वस्व-
त्यागः यस्य तस्य रघोः इति उक्तप्रकाराम् उदाराम् औदार्य-
युक्ताम् अपि गां वाचम्। "मनो नियोगक्रिययोत्सुकं मे"

सर्वत्र नो वार्त्तमवेहि राजन् !
नाथे कुतस्त्वय्यशुभं प्रजानाम् ।
सूर्य्ये तपत्यावरणाय दृष्टेः
कल्पेत लोकस्य कथं तमिस्रा ? ॥ १३ ॥

( ५।११ ) इत्येवंरूपाम् । "स्वर्गेषु पशुवाग्वज्रदिङ्नेत्रघृणिभूजले । लक्ष्यदृष्ट्या स्त्रियां पुंसि गौः" इत्यमरः । नियम्य गुरुः वरतन्तुशिष्यः कौत्सः स्वार्थोपपत्तिं स्वकार्य्यसिद्धिं प्रति दुर्बलाशः कृशमयपात्रदर्शनात् शिथिलमनोरथः सन् तं रघुम् इति इति वक्ष्यमाणप्रकारेण अवोचत् ॥ १२ ॥

सर्वत्रेति । हे राजन् ! त्वं सर्वत्र नः अस्माकं वार्त्तं स्वास्थ्यम् अवेहि जानीहि । "वार्त्तं फल्गुन्यरोगे च" इत्यमरः । "वार्त्तं पाटवमारोग्यं भव्यं स्वास्थ्यमनामयम्" इति यादवः । न चैतदाश्चर्य्यमित्याह,—नाथ इति । त्वयि नाथे ईश्वरे सति प्रजानाम् अशुभं दुःखं कुतः ? तथा हि, अर्थान्तरं न्यस्यति— सूर्य्ये इत्यादिना । सूर्य्ये तपति प्रकाशमाने सति तमिस्रा तमस्ततिः । "तमिस्रं तिमिरं रोगे तमिस्रा तु तमस्ततौ । कृष्णपक्षनिशायां च" इति विश्वः । "तमिस्रम्" इति पाठे "तमिस्रं तिमिरं तमः" इत्यमरः । लोकस्य जनस्य । "लोकस्तु भुवने जने" इत्यमरः । दृष्टेः आवरणाय कथं कल्पेत दृष्टिम् आवरितुं नालम् इत्यर्थः । क्लृपेरलमर्थत्वात् तद्योगे "नमः-स्वस्ति—" इत्यादिना चतुर्थी । "अलमिति पर्य्याप्त्यर्थग्रहणम्" इति भगवान् भाष्यकारः । कल्पेत सम्पद्येत इत्यर्थः । क्लृपि सम्पद्यमाने चतुर्थीति वक्तव्यात् ॥ १३ ॥

भक्तिः प्रतीक्ष्येषु कुलोचिता ते
पूर्वान् महाभाग! तयातिशेषे।
व्यतीतकालस्त्वहमभ्युपेत-
स्त्वामर्थिभावादिति मे विषादः॥ १४॥
शरीरमात्रेण नरेन्द्र! तिष्ठन्
आभासि तीर्थप्रतिपादितर्द्धिः।
आरण्यकोपात्तफलप्रसूतिः
स्तम्बेन नीवार इवावशिष्टः॥ १५॥

"तवार्हतः—" (५।११) इत्यादिनोक्तं यत् तत्र चित्तमित्याह,—

भक्तिरिति। प्रतीक्ष्येषु पूज्येषु। "पूज्यः प्रतीक्ष्यः" इत्यमरः। भक्तिः अनुरागविशेषः, ते तव कुलोचिता कुलाभ्यस्ता। "अभ्यस्तेऽप्युचितं न्याय्यम्" इति यादवः। हे महाभाग! सार्वभौम! तया भक्त्या पूर्वान् अतिशेषे अतिवर्त्तसे, किन्तु सर्ववार्त्तं चेत् तर्हि कथं खेदमिव इव दृश्यसे, अत आह,—व्यतीतेति। अहं व्यतीतकालः अतिक्रान्तकालः सन् अर्थिभावात् त्वाम् अभ्युपेतः इति मे विषादः॥ १४॥

शरीरेति। हे नरेन्द्र! तीर्थे सत्पात्रे प्रतिपादिता ऋद्धिर्येन सः तथोक्तः। "योनौ जलावतारे च मन्त्राद्यष्टादशस्वपि। पुण्यक्षेत्रे तथा पात्रे तीर्थं स्याद् दर्शनेष्वपि"॥ इति हलायुधः। शरीरमात्रेण तिष्ठन् आरण्यकाः अरण्ये भवाः अनुष्ठाः मुनिप्रमुखाः। "अरण्याण्णुक्" इति वुञ्प्रत्ययः। तैः उपात्त

स्थाने भवानेकनराधिपः सन्
अकिञ्चनत्वं मखजं व्यनक्ति ।
पर्य्यायपीतस्य सुरैर्हिमांशोः
कलाक्षयः श्लाघ्यतरो हि वृद्धेः ॥ १६ ॥

तदन्यतस्तावदनन्यकार्य्यो
गुर्वर्थमाहर्त्तुमहं यतिष्ये ।
स्वस्त्यस्तु ते निर्गलिताम्बुगर्भं
शरद्घनं नार्दति चातकोऽपि ॥ १७ ॥

फलम् एव प्रकृतिः यस्य सः स्तम्बेन काण्डेन अवशिष्टः । प्रकृत्यादित्वात् तृतीया । नीवारः इव आभासि शोभसे ॥ १५ ॥

स्थान इति । भवान् एकनराधिपः सार्वभौमः सन् मखजं मखजन्यं, न विद्यते किञ्चन यस्य इति अकिञ्चनः । मयूरव्यंसकादित्वात् तत्पुरुषः । तस्य भावः तत्त्वं निर्धनत्वं व्यनक्ति प्रकटयति स्थाने युक्तम् । "युक्ते द्वे साम्प्रतं स्थाने" इत्यमरः । तथा हि, सुरैः देवैः पर्य्यायेण क्रमेण पीतस्य हिमांशोः कलाक्षयः वृद्धेः उपचयात् श्लाघ्यतरः हि वरः खलु । "मणिः शाणोल्लीढः समरविजयी हेतिनिहतो मदक्षीणो नागः शरदि सरितः श्यानपुलिनाः । कलाशेषश्चन्द्रः सुरतमृदिता बालवनिता तनिम्ना शोभन्ते गलितविभवाश्चार्थिषु नृपाः" ॥ इति भावः । अत्र कामन्दकः,—"धर्म्मार्थं क्षीणकोशस्य क्षीणत्वमपि शोभते । सुरैः पीतावशेषस्य कृष्णपक्षे विधोरिव" ॥ इति ॥ १६ ॥

तदिति । तत् तस्मात् तावत् अनन्यकार्य्यः । "यावत् तावच्च साकल्येऽवधौ मानेऽवधारणे" इति विश्वः । प्रयोजनान्तर-

भक्तिः प्रतीक्ष्येषु कुलोचिता ते
पूर्वान् महाभाग! तयातिशेषे।
व्यतीतकालस्त्वहमभ्युपेत-
स्त्वामर्थिभावादिति मे विषादः॥ १४॥

शरीरमात्रेण नरेन्द्र! तिष्ठन्
नाभासि तीर्थप्रतिपादितर्द्धिः।
आरण्यकोपात्तफलप्रसूतिः
स्तम्बेन नीवार इवावशिष्टः॥ १५॥

"तवार्हतः—" (५।११) इत्यादिनोक्तं यत् तत्र चिव-
मित्याह,—

भक्तिरिति। प्रतीक्ष्येषु पूज्येषु। "पूज्यः प्रतीक्ष्यः" इत्यमरः। भक्तिः अनुरागविशेषः, ते तव कुलोचिता कुलाभ्यस्ता। "अभ्यस्तेऽप्युचितं न्याय्यम्" इति यादवः। हे महाभाग! सार्वभौम! तया भक्त्या पूर्वान् अतिशेषे अतिवर्त्तसे, किन्तु सर्ववार्त्तं चेत् तर्हि कथं खेदखिन्न इव दृश्यसे, अत आह,— व्यतीतेति। अहं व्यतीतकालः अतिक्रान्तकालः सन् अर्थिभावात् त्वाम् अभ्युपेतः इति मे विषादः॥ १४॥

शरीरेति। हे नरेन्द्र! तीर्थे सत्पात्रे प्रतिपादिता ऋद्धिः येन सः तथोक्तः। "योनौ जलावतारे च मन्त्राद्यष्टादशस्वपि। पुण्यक्षेत्रे तथा पात्रे तीर्थं स्याद् दर्शनेष्वपि"॥ इति हलायुधः। शरीरमात्रेण तिष्ठन् आरण्यकाः अरण्ये भवाः मनुष्याः मुनिप्रमुखाः। "अरण्यान्मनुष्ये" इति वुञ्प्रत्ययः। तैः उपात्ता

स्थाने भवानेकनराधिपः सन्
अकिञ्चनत्वं मखजं व्यनक्ति।
पर्य्यायपीतस्य सुरैर्हिमांशोः
कलाक्षयः श्लाघ्यतरो हि वृद्धेः॥ १६॥

तदन्यतस्तावदनन्यकार्य्यो
गुर्वर्थमाहर्तुमहं यतिष्ये।
स्वस्त्यस्तु ते निर्गलिताम्बुगर्भं
शरद्घनं नार्दति चातकोऽपि॥ १७॥

पञ्चम् एव प्रकृतिः यस्य सः स्तम्बेन काण्डेन अवशिष्टः। प्रकृत्यादित्वात् तृतीया। नीवारः इव आभासि शोभसे॥१५॥

स्थान इति। भवान् एकनराधिपः सार्वभौमः सन् मखजं मखजन्यं, न विद्यते किञ्चन यस्य इति अकिञ्चनः। मयूरव्यंसकादित्वात् तत्पुरुषः। तस्य भावः तत्त्वं निर्धनत्वं व्यनक्ति प्रकटयति स्थाने युक्तम्। "युक्ते द्वे साम्प्रतं स्थाने" इत्यमरः। तथा हि, सुरैः देवैः पर्य्यायेण क्रमेण पीतस्य हिमांशोः कलाक्षयः वृद्धेः उपचयात् श्लाघ्यतरः हि वरः खलु। "मणिः शाणालीढ़ः समरविजयी हेतिनिहतो मदक्षीणो नागः शरदि सरितः श्यानपुलिनाः। कलाशेषश्चन्द्रः सुरतमृदिता बालवनिता तनिम्ना शोभन्ते गलितविभवाश्चार्थिषु नृपाः"॥ इति भावः। अत्र वामनः,—"धर्म्मार्थं क्षीणकोशस्य क्षीणत्वमपि शोभते। सुरैः पीतावशेषस्य कृष्णपक्षे विधोरिव"॥ इति॥ १६॥

तदिति। तत् तस्मात् तावत् अनन्यकार्य्यः। "यावत् तावच्च साकल्येऽवधौ मानेऽवधारणे" इति विश्वः। प्रयोजनान्तर-

एतावदुक्त्वा प्रतियातुकामं
शिष्यं महर्षेर्नृपतिर्निषिध्य।
किं वस्तु विद्वन्! गुरवे प्रदेयं
त्वया कियद्वेति तमन्वयुङ्क्त? ॥ १८ ॥

ततो यथावद्विहिताध्वराय
तस्मै स्मयावेशविवर्जिताय।
वर्णाश्रमाणां गुरवे स वर्णी
विचक्षणः प्रस्तुतमाचचक्षे ॥ १९ ॥

रहितः अहम् अन्यतः वदान्यान्तरात् गुर्वर्थं गुरुधनम् आहर्तुम् अर्जयितुं यतिष्ये उद्योक्ष्ये, ते तुभ्यं स्वस्ति शुभमस्तु। "नमः स्वस्ति—" इत्यादिना चतुर्थी। तथा हि, चातकोऽपि। "शरदो पतितं तोयं चातकानां रुजाकरम्" इति हेतोः अनन्यगतिको ऽपि इत्यर्थः। निर्गलितम् अम्बु एव गर्भः यस्य तं, शरद्घनं नार्दति न याचते। "अर्द गतौ याचने च" इति धातुः। "याचनार्थे रणेऽर्दनम्" इति यादवः ॥ १७ ॥

एतावदिति। एतावत् वाक्यम् उक्त्वा प्रतियातुं कामः यस्य तं प्रतियातुकामं गन्तुकामम्। "तुम् काममनसोरपि" इति मकारलोपः। महर्षेः वरतन्तोः शिष्यं कौत्सं नृपतिः रघुः निषिध्य निवार्य्य। हे विद्वन्! त्वया गुरवे प्रदेयं वस्तु किं किमात्मकं, कियत् किं परिमाणं वा? इत्येवं तं कौत्सम् अन्वयुङ्क्त अपृच्छत्। "प्रश्नोऽनुयोगः पृच्छा च" इत्यमरः ॥ १८ ॥

तत इति। ततः यथावत् यथार्हम्। अर्हार्थे वतिः। विहिताध्वराय विधिवत् अनुष्ठितयज्ञाय सदाचाराय इत्यर्थः।

समाप्तविद्येन मया महर्षि-
र्विज्ञापितोऽभूद्गुरुदक्षिणायै ।
स मे चिरायास्खलितोपचारां
तां भक्तिमेवागणयत्पुरस्तात् ॥ २० ॥
निर्बन्धसञ्जातरुषार्थकार्श्य-
मचिन्तयित्वा गुरुणाहमुक्तः ।

आवेशविवर्जिताय गर्वाभिनिवेशशून्याय अनुद्धताय इत्यर्थः । र्णानां ब्राह्मणादीनाम् आश्रमाणां ब्रह्मचर्य्यादीनाञ्च गुरवे नियामकाय । "वर्णाः स्युर्ब्राह्मणादयः" इति, "ब्रह्मचारी गृही वानप्रस्थो भिक्षुश्चतुष्टये । आश्रमोऽस्त्री" इति च अमरः । सर्वकार्य्यनिर्वाहकाय इत्यर्थः । तस्मै रघवे विचक्षणः विद्वान् वर्णी ब्रह्मचारी । "वर्णिनो ब्रह्मचारिणः" इत्यमरः । "वर्णाद् ब्रह्मचारिणि" इति इनिप्रत्ययः । सः कौत्सः प्रस्तुतं प्रकृतम् आचचक्षे ॥ १९ ॥

समाप्तेति । समाप्तविद्येन मया महर्षिः गुरुदक्षिणायै गुरुदक्षिणास्वीकारार्थं विज्ञापितः अभूत् । स च गुरुः चिराय अस्खलितोपचारां तां दुष्करां मे भक्तिम् एव पुरस्तात् प्रथमम् अगणयत् संख्यातवान्, भक्त्यैव सन्तुष्टः किं दक्षिणया इत्युक्तवान् इत्यर्थः । अथवा भक्तिम् एव तां दक्षिणाम् अगणयत् इति योज्यम् ॥ २० ॥

निर्बन्धेति । निर्बन्धेन प्रार्थनातिशयेन सञ्जातरुषा सञ्जात-क्रोधेन गुरुणा अर्थकार्श्यं दारिद्र्यम् अचिन्तयित्वा अविचार्य्य अहं वित्तस्य धनस्य चतस्रः दश च कोटीः चतुर्दश कोटीः मे मह्यम् आहर आनय इति विद्यापरिसंख्यया विद्यापरिसंख्यानु-

वित्तस्य विद्यापरिसंख्यया मे
कोटीश्चतस्रो दश चाहरेति ॥ २१ ॥

सोऽहं सपर्य्याविधिभाजनेन
मत्वा भवन्तं प्रभुशब्दशेषम् ।
अभ्युत्सहे सम्प्रति नोपरोद्धु-
मल्पेतरत्वाच्छ्रुतनिष्क्रयस्य ॥ २२ ॥

इत्थं द्विजेन द्विजराजकान्ति-
रावेदितो वेदविदां वरेण ।
एनोनिवृत्तेन्द्रियवृत्तिरेनं
जगाद भूयो जगदेकनाथः ॥ २३ ॥

सारेणैव उक्तः । अत्र मनुः,—"अङ्गानि वेदाश्चत्वारो मीमां
न्यायविस्तरः । पुराणं धर्म्मशास्त्रञ्च विद्या ह्येताश्चतुर्दश
इति ॥ २१ ॥

सोऽहमिति । सः अहं सपर्य्याविधिभाजनेन अर्घ्यपा
भवन्तं प्रभुशब्दः एव शेषः यस्य तं मत्वा निःस्वं निश्चित्य श्रुत
श्रुतनिष्क्रयस्य विद्यामूल्यस्य अल्पेतरत्वात् अतिमहत्त्व
सम्प्रति उपरोद्धुं निर्बन्धुं न अभ्युत्सहे ॥ २२ ॥

इत्थमिति । द्विजराजकान्तिः चन्द्रकान्तिः । "द्विजरा
शशधरः नक्षत्रेशः क्षपाकरः" इत्यमरः । "तस्मात् सो
राजा नो ब्राह्मणानाम्" इति श्रुतेः । द्विजराजकान्तित्वेन अ
वाप्तिवैराग्यं वारयति । एनसः पापात् निवृत्ता इन्द्रियवृ
यस्य सः जगदेकनाथः रघुः वेदविदां वरेण श्रेष्ठेन कौत्सेन
इत्थम् आवेदितः सन् एनं कौत्सं भूयः पुनः जगाद ॥२३॥

गुर्वर्थमर्थी श्रुतपारदृश्वा
रघोः सकाशादनवाप्य कामम् ।
गतो वदान्यान्तरमित्ययं मे
मा भूत्परीवादनवावतारः ॥ २४ ॥

स त्वं प्रशस्ते महिते मदीये
वसंश्चतुर्थोऽग्निरिवाग्न्यगारे ।
द्वित्राण्यहान्यर्हसि सोढुमर्हन् !
यावद् यते साधयितुं त्वदर्थम् ॥ २५ ॥

गुर्वर्थमिति । श्रुतस्य पारं दृष्टवान् श्रुतपारदृश्वा । "दृशेः क्वनिप्" इति क्वनिप् । गुर्वर्थं गुरुदक्षिणार्थं यथा तथा अर्थी याचकः । विशेषणद्वयेनापि पात्रस्य अप्रत्याख्येयत्वमाह । रघोः सकाशात् कामं मनोरथम् अनवाप्य अप्राप्य वदान्यान्तरं गतः । "स्युर्वदान्यस्थूललक्ष्यदानशौण्डा बहुप्रदे" इत्यमरः । इत्येवं रूपः अयं परीवादस्य अपवादस्य नवः नूतनः प्रथमः अवतारः आविर्भावः मे मा भूत् मा अस्तु । रघोरिति स्वनामग्रहणं सम्भावितत्वद्योतनार्थम् । तथाच,—"सम्भावितस्य चाकीर्त्तिर्मरणादतिरिच्यते" इति भावः ॥२४॥

स इति । सः त्वं महिते पूजिते प्रशस्ते प्रसिद्धे मदीये अग्न्यगारे अग्निशालायां, चतुर्थः अग्निः इव वसन् द्वित्राणि द्वे त्रीणि वा अहानि दिनानि । "संख्ययाऽव्ययासन्नादूराधिकसंख्याः संख्येये" इति बहुव्रीहिः । "बहुव्रीहौ संख्येये डजबहुगणात्" इति डच् । सोढुम् अर्हसि, हे अर्हन् ! मान्य ! त्वदर्थं तव प्रयोजनं साधयितुं यावत् यते यतिष्ये । "यावत्पुरानिपातयोर्लट्" इति भविष्यदर्थे लट् ॥ २५ ॥

तथेति तस्यावितथं प्रतीतः
प्रत्यग्रहीत्सङ्गरमग्रजन्मा।
गामात्तसारां रघुरप्यवेक्ष्य
निष्क्रष्टुमर्थं चकमे कुवेरात्॥ २६॥
वशिष्ठमन्त्रोक्षणजात्प्रभावा-
दुदन्वदाकाशमहीधरेषु।
मरुत्सखस्येव वलाहकस्य
गतिर्विजघ्ने न हि तद्रथस्य॥ २७॥
अथाधिशिष्ये प्रयतः प्रदोषे
रथं रघुः कल्पितशस्त्रगर्भम्।

तथेतीति। अग्रजन्मा ब्राह्मणः प्रतीतः प्रीतः सन् तस्य रघोः अवितथम् अमोघं सङ्गरं प्रतिज्ञाम्। "अथ प्रतिज्ञाजिसंविदापत्सु सङ्गरः" इत्यमरः। "तां गिरम्" इति केचित् पठन्ति। तथा इति प्रत्यग्रहीत्। रघुः अपि गां भूमिम् आत्तसारां गृहीतधनाम् अवेक्ष्य कुवेरात् अर्थं निष्क्रष्टुम् आहर्तुं चकमे इयेष॥ २६॥

वशिष्ठेति। वशिष्ठस्य यत् मन्त्रेण उक्षणम् अभिमन्त्रप्रोक्षणं तज्जात् प्रभावात् सामर्थ्यात् हेतोः उदन्वदाकाशमहीधरेषु उदन्वति उदधौ आकाशे महीधरेषु वा, मरुत्सखस्य। मरुतः सखा इति तत्पुरुषः बहुव्रीहौ समासान्ताभावात्। ततो वायुसहायस्येति लभ्यते। वारीणां वाहकः वलाहकः। पृषोदरादित्वात् साधुः। तस्य इव मेघस्य इव, तद्रथस्य गतिः सञ्चारः न विजघ्ने न विहता हि॥ २७॥

सामन्तसम्भावनयैव धीरः
कैलासनाथं तरसा जिगीषुः ॥ २८ ॥
प्रातः प्रयाणाभिमुखाय तस्मै
सविस्मयाः कोषगृहे नियुक्ताः ।
हिरण्मयीं कोषगृहस्य मध्ये
वृष्टिं शशंसुः पतितां नभस्तः ॥ २९ ॥
तं भूपतिर्भासुरहेमराशिं
लब्धं कुबेरादभियास्यमानात् ।

अथेति । अथ प्रदोषे रजनीमुखे तत्काले यानाधिरोहण-विधानात् प्रयतः धीरः रघुः समन्तात् भवः सामन्तः राजमात्रम् इति सम्भावनया एव कैलासनाथं कुवेरं तरसा बलेन जिगीषुः जेतुम् इच्छुः सन्, कल्पितं सज्जितं शस्त्रं गर्भे यस्य तं रथम् अधिशिश्ये रथे शयितवान् इत्यर्थः । "अधिशीङ्स्थासां कर्म" इति कर्मत्वम् ॥ २८ ॥

प्रातरिति । प्रातः प्रयाणाभिमुखाय तस्मै रघवे कोषगृहे नियुक्ताः अधिकृताः भाण्डारिकाः सविस्मयाः सन्तः कोषगृहस्य मध्ये नभस्तः नभसः । पञ्चम्यास्तसिल्प्रत्ययः । पतितां हिरण्मयीं सुवर्णमयीम् । "दाण्डिनायन—" इत्यादिना निपातनात् साधुः । वृष्टिं शशंसुः कथयामासुः ॥ २९ ॥

तमिति । भूपतिः रघुः अभियास्यमानात् अभिगमिष्य-माणात् कुवेरात् लब्धं, वज्रेण कुलिशेन भिन्नं सुमेरोः पादं प्रत्यन्तपर्वतम् इव, स्थितम् । "पादाः प्रत्यन्तपर्वताः" इत्यमरः । "शृङ्गं सुमेरोः" इति क्वचित् पाठः । तं भासुरं भास्वरम् ।

दिदेश कौत्साय समस्तमेव
पादं सुमेरोरिव वज्रभिन्नम्॥ ३०॥
जनस्य साकेतनिवासिनस्तौ
द्वावप्यभूतामभिनन्द्यसत्त्वौ।
गुरुप्रदेयाधिकनिस्पृहोऽर्थी
नृपोऽर्थिकामादधिकप्रदश्च॥ ३१॥
अथोष्ट्रवामीशतवाहितार्थं
प्रजेश्वरं प्रीतमना महर्षिः।
स्पृशन् करेणानतपूर्वकायं
संप्रस्थितो वाचमुवाच कौत्सः॥ ३२॥

"अभ्यभासमिदौ शुरच्" इति शुरच्। हेमराशिं समस्तं कृत्स्नमेव कौत्साय दिदेश ददौ, न तु चतुर्दशकोटिमात्रमित्येवकारार्थः॥ ३०॥

जनस्येति। तौ अर्थिदातारौ द्वौ अपि साकेतनिवासिनः अयोध्यावासिनः। "साकेतः स्यादयोध्यायां कोशला नन्दिनी च सा" इति यादवः। जनस्य अभिनन्द्यसत्त्वौ स्तुत्यव्यवसायौ अभूताम्। "द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु" इत्यमरः। कौ द्वौ? गुरुप्रदेयात् अधिके अतिरिक्तद्रव्ये निस्पृहः अर्थी, अर्थिकामात् अर्थिमनोरथात् अधिकं प्रददातीति तथोक्तः। "प्रे दाज्ञः" इति कप्रत्ययः। नृपश्च॥ ३१॥

अथेति। अथ प्रीतमनाः महर्षिः कौत्सः संप्रस्थितः प्रस्थास्यमानः सन्। "आशंसायां भूतवच्च" इति भविष्यदर्थे क्तः। उष्ट्राणां क्रमेलकानां वामीनां वडवानाञ्च शतैः वाहितार्थं

किमत्र चित्रं यदि कामसूर्भू-
र्वृत्ते स्थितस्याधिपतेः प्रजानाम्।
अचिन्तनीयस्तु तव प्रभावो
मनीषितं द्यौरपि येन दुग्धा॥ ३३॥

आशास्यमन्यत् पुनरुक्तभूतं
श्रेयांसि सर्वाण्यधिजग्मुषस्ते।
पुत्रं लभस्वात्मगुणानुरूपं
भवन्तमीड्यं भवतः पितेव॥ ३४॥

ापितवचनम् आनतपूर्वकायं, विनयनम्रम् इत्यर्थः। प्रजेश्वरं
घुं करेण स्पृशन् वाचम् उवाच॥ ३२॥

किमिति। वृत्ते स्थितस्य। "न्यायेनार्जनमर्थस्य वर्द्धनं
ालनं तथा। सत्पात्रे प्रतिपत्तिश्च राजवृत्तं चतुर्विधम्"॥ इति
ामन्दकः। तस्मिन् वृत्ते स्थितस्य प्रजानाम् अधिपतेः नृपस्य
ः कामान् सूते इति कामसूः यदि। "सत्सूद्विषद्रुह—"
त्यादिना क्विप्। अत्र कामप्रसवने किं चित्रं? न चित्रम्
त्यर्थः। किन्तु तव प्रभावः महिमा अचिन्तनीयः येन त्वया
यौः अपि मनीषितम् अभिलषितं दुग्धा। दुहेर्द्विकर्म्मकत्वादप्र-
धाने कर्म्मणि क्तः। "प्रधानकर्म्मण्याख्येये लादीनाहुर्द्विकर्म्म-
णाम्। अप्रधाने दुहादीनां ण्यन्ते कर्त्तुश्च कर्म्मणः"॥ इति
आरवात्॥ ३३॥

आशास्यमिति। सर्वाणि श्रेयांसि शुभानि अधिजग्मुषः
ाप्तवतः ते तव अन्यत् पुत्रातिरिक्तम् आशास्यम् आशीः साध्यम्
ाशंसनीयं वा पुनरुक्तभूतं सर्वं सिद्धम् इत्यर्थः। किन्तु ईड्यं

इत्थं प्रयुज्याशिषमग्रजन्मा
राज्ञे प्रतीयाय गुरोः सकाशम् ।
राजापि लेभे सुतमाशु तस्मा-
दालोकमर्कादिव जीवलोकः ॥ ३५ ॥
ब्राह्मे मुहूर्त्ते किल तस्य देवी
कुमारकल्पं सुषुवे कुमारम् ।
अतः पिता ब्रह्मण एव नाम्ना
तमात्मजन्मानमजं चकार ॥ ३६ ॥

तुल्यं भवन्तं भवतः पिता इव, आत्मगुणानुरूपं त्वया तुल्य-
गुणम् इत्यर्थः, पुत्रं लभस्व प्राप्नुहि ॥ ३४ ॥

इत्थमिति । अग्रजन्मा ब्राह्मणः । "अग्रजन्मा द्विजश्रेष्ठे
भ्रातरि ब्रह्मणि स्मृतः" इति विश्वः । इत्थं राज्ञे आशिषं
प्रयुज्य दत्त्वा गुरोः सकाशं समीपं प्रतीयाय प्राप । राजा अपि
जीवलोकः जीवसमूहः । "जीवः प्राणिनि गीष्पतौ" इति विश्वः ।
अर्कात् आलोकं प्रकाशम् इव । "चैतन्यम्" इति पाठे ज्ञानम्
इव । तस्मात् ऋषेः आशु सुतं लेभे प्राप ॥ ३५ ॥

ब्राह्म इति । तस्य रघोः देवी महिषी ब्राह्मे । "तस्येदम्"
इत्यण् । ब्रह्मदेवताके अभिजिन्नामके मुहूर्त्ते किल ईषद्
असमाप्तं कुमारं कुमारकल्पं स्कन्दसदृशम् । "ईषदसमाप्तौ—"
इत्यादिना कल्पप्प्रत्ययः । कुमारं पुत्रं सुषुवे । "कुमारो
बालके स्कन्दे" इति विश्वः । अतो ब्राह्ममुहूर्त्तोत्पन्नत्वात् पिता
रघुः, ब्रह्मणः विधेः एव नाम्ना तम् आत्मजन्मानं पुत्रम्

रूपं तदोजस्वि तदेव वीर्य्यं
तदेव नैसर्गिकमुन्नतत्वम्।
न कारणात् स्वाद् विभिदे कुमारः
प्रवर्त्तितो दीप इव प्रदीपात् ॥ ३७ ॥

उपात्तविद्यं विधिवद्गुरुभ्य-
स्तं यौवनोद्भेदविशेषकान्तम्।
श्रीः साभिलाषापि गुरोरनुज्ञां
धीरेव कन्या पितुराचकाङ्क्ष ॥ ३८ ॥

त्रम् अजनामकं चकार। "अजो हरौ हरे कामे विधौ छागे
यो: सुते" इति विश्वः ॥ ३६ ॥

रूपमिति। ओजस्वि तेजस्वि बलिष्ठं वा। "ओजस्तेजसि
ातूनाम् अवष्टम्भप्रकाशयो:। ओजो बले च दीप्तौ च" इति
विश्वः। रूपं वपुः। "अथ रूपं नपुंसकम्। स्वभावाकृतिसौन्दर्य्य-
पुषि श्लोकशब्दयो:" इति विश्वः। तत् एव पैतृकम् एव,
ीर्य्यं वीर्य्यं तत् एव, नैसर्गिकं स्वाभाविकम् उन्नतत्वं तत् एव
ादृशमेव इत्यर्थः। कुमारः बालकः, प्रवर्त्तितः उत्पादितः
ीपः प्रदीपात् स्वोत्पादकदीपात् इव, स्वात् स्वकीयात्।
"पूर्व्वादिभ्यो नवभ्यो वा" इति स्मात्स्मिनौ वैकल्पिकौ। कारणात्
ानकात् न बिभिदे भिन्नो नाभूत्, सर्व्वांशेन तादृश एवाभूत्
त्यर्थः ॥ ३७ ॥

उपात्तेति। गुरुभ्यः विधिवत् यथाशास्त्रम् उपात्तविद्यं
हीतविद्यम्। यौवनस्य उद्भेदात् आविर्भावात् हेतोः विशेषेण
ान्तं सौम्यं तम् अजं प्रति साभिलाषा अपि श्रीः, धीरा

अथेश्वरेण क्रथकैशिकानां
स्वयंवरार्थं स्वसुरिन्दुमत्याः ।
आप्तः कुमारानयनोत्सुकेन
भोजेन दूतो रघवे विसृष्टः ॥ ३९ ॥

तं श्लाघ्यसम्बन्धमसौ विचिन्त्य
दारक्रियायोग्यदशं च पुत्रम् ।
प्रस्थापयामास ससैन्यमेनं-
मृद्धां विदर्भाधिपराजधानीम् ॥ ४० ॥

स्थिरा उन्नतचित्ता । "स्थिरा चित्तोन्नतिर्या तु तदैर्यमिति संश्रितम्" इति भूपालः । कन्या पितुः इव, गुरोः अनुग्रा आपकाङ्क्ष इयेव । यौवराज्यार्होऽभूत् इत्यर्थः । अनुग्रामन्दा पितृपारतन्त्र्यम् उपमासामर्थ्यात् पार्थिवत्वयोग्यता व्यज्यते ॥ ३८ ॥

अथेति । अथ स्वसुः भगिन्याः इन्दुमत्याः स्वयंवरा कुमारस्य अजस्य आनयने उत्सुकेन क्रथकैशिकानां विदर्भदेशा नाम् ईश्वरेण स्वामिना भोजेन राज्ञा आप्तः हितः दूतः रघ विसृष्टः प्रेषितः । क्रियामात्रयोगेऽपि चतुर्थी ॥ ३९ ॥

तमिति । असौ रघुः तं भोजं श्लाघ्यसम्बन्धम् अनुरूप त्वादिगुणयोगात् स्पृहणीयसम्बन्धं विचिन्त्य विचार्य पुत्रं दारक्रियायोग्यदशं विवाहयोग्यवयसं विचिन्त्य, ससैन्यम् एनं पुत्र ऋद्धां समृद्धां विदर्भाधिपस्य भोजस्य राजधानीं पुरीं प्रति प्रस्थापयामास । धीयतेऽस्यामिति धानी । "करणाधिकरणयोश्च" इति अधिकरणे ल्युट्प्रत्ययः । राज्ञां धानीति विग्रहः ॥ ४० ॥

तस्योपकार्य्यारचितोपचारा
वन्येतरा जानपदोपदाभिः।
मार्गे निवासा मनुजेन्द्रसूनो-
र्बभूवुरुद्यानविहारकल्पाः ॥ ४१ ॥
स नर्मदारोधसि सीकरार्द्रै-
र्मरुद्भिरानर्त्तितनक्तमाले।

तस्येति। उपकार्य्यासु राजयोग्येषु पटभवनादिषु। "सौधो-
ऽस्त्री राजसदनमुपकार्य्योपकारिका" इति अमरवचनव्याख्याने
क्षीरस्वामी। उपक्रियते उपकरोति वा पटमण्डपादि राज-
सदनमिति। रचिताः उपचाराः शयनादयः येषु ते तथोक्ताः,
जनपदानां जनपदेभ्यः आगतानाम् उपदाभिः उपायनैः वन्याः
वने भवाः इतरे येषां ते वन्येतराः अवन्याः इत्यर्थः। "न बहु-
व्रीहौ" इति सर्वनामसंज्ञानिषेधः। तत्पुरुषे सर्वनामसंज्ञा
भवत्येव। तस्य मनुजेन्द्रसूनोः अजस्य मार्गे निवासाः वासनिकाः
उद्यानानि आक्रीडाः। "पुमानाक्रीड़ उद्यानम्" इत्यमरः।
तानि एव विहाराः विहारस्थानानि तत्कल्पाः तत्सदृशाः
इत्यर्थः। "ईषदसमाप्तौ—" इति कल्पप्प्रत्ययः। बभूवुः ॥ ४१ ॥
स इति। विलङ्घिताध्वा अतिक्रान्तमार्गः सः अजः सीक-
रार्द्रैः शीतलैः इत्यर्थः, मरुद्भिः वातैः आनर्त्तिताः कम्पिताः
नक्तमालाः चिरविल्वाख्यवृक्षभेदाः। "चिरविल्वो नक्तमालः कर-
ञ्जश्च करञ्जके" इत्यमरः। यस्मिन् तस्मिन् निवेशार्हे इत्यर्थः।
नर्मदायाः रोधसि रेवायाः तीरे क्लान्तं श्रान्तं रजोभिः धूसराः
केतवः ध्वजाः यस्य तत् सैन्यं निवेशयामास ॥ ४२ ॥

निवेशयामास विलङ्घिताध्वा
क्लान्तं रजोधूसरकेतु सैन्यम् ॥ ४२ ॥
अथोपरिष्टाद्भ्रमरैर्भ्रमद्भिः
प्राक्सूचितान्तःसलिलप्रवेशः ।
निर्धौतदानामलगण्डभित्ति-
र्वन्यः सरित्तो गज उन्ममज्ज ॥ ४३ ॥
निःशेषविक्षालितधातुनापि
वप्रक्रियामृक्षवतस्तटेषु ।
नीलोर्द्ध्वरेखाशबलेन शंसन्
दन्तद्वयेनाश्मविकुण्ठितेन ॥ ४४ ॥

अथेति । अथ उपरिष्टात् ऊर्द्ध्वम् । "उपर्य्युपरिष्टात्" इति निपातः । भ्रमद्भिः मदलोभात् इति भावः । भ्रमरैः प्राक् उन्मज्जनात् पूर्वं सूचितः ज्ञापितः अन्तःसलिले प्रवेशः यस्य सः तथोक्तः, निर्धौतदाने क्षालितमदे अत एव अमले गण्ड-भित्ती यस्य सः तथोक्तः । "दानं गजमदे त्यागे" इति शाश्वतः । प्रशस्तौ गण्डौ गण्डभित्ती । "प्रशंसावचनैश्च" इति समासः । भित्तिशब्दः प्रशस्तार्थः । तथा च गणरत्नमहोदधौ,—"मतल्लिको-धमिश्राः स्युः प्रकाण्डस्थलभित्तयः" इति । भित्तिः प्रदेशो वा । "भित्तिः प्रदेशे कुड्येऽपि" इति विश्वः । निर्धौतदानेन अमला गण्डभित्तिः यस्य इति वा । वन्यः गजः सरित्तः नर्म्मदायाः सकाशात् । पञ्चम्यास्तसिल्प्रत्ययः । उन्ममज्ज उत्थितः ॥४३॥

निःशेषेति । कथम्भूतो गजः ? निःशेषविक्षालितधातुना अपि धौतगैरिकादिना अपि नीलाभिः ऊर्द्ध्वाभिः रेखाभिः

संहारविक्षेपलघुक्रियेण
हस्तेन तीराभिमुखः सशब्दम्।
बभौ स भिन्दन् बृहतस्तरङ्गान्
वार्य्यर्गलाभङ्ग इव प्रवृत्तः॥ ४५॥
शैलोपमः शैवलमञ्जरीणां
जालानि कर्षन्नुरसा स पश्चात्।
पूर्वं तदुत्पीडितवारिराशिः
सरित्प्रवाहस्तटमुत्ससर्प॥ ४६॥

तटाभिघातजनिताभिः शवलेन कर्वुरेण। "चित्रं किर्म्मीर-कल्माषशवलैताश्च कर्वुरे" इत्यमरः। अश्मभिः पाषाणैः विकुण्ठितेन कुण्ठीकृतेन दन्तद्वयेन ऋक्षवान् नाम कश्चित् तवत्यः पर्वतः तस्य तटेषु वप्रक्रियां वप्रक्रीड़ाम् उत्खातकेलिम् इत्यर्थः। "उत्खातकेलिः शृङ्गाद्यैर्वप्रक्रीड़ा निगद्यते" इति शब्दार्णवः। शंसन् कथयन् सूचयन् इत्यर्थः। युग्मम्॥४४॥

संहारेति। संहारविक्षेपयोः सङ्कोचनप्रसारणयोः लघुक्रियेण क्षिप्रव्यापारेण। "लघु क्षिप्रमरं द्रुतम्" इत्यमरः। हस्तेन शुण्डादण्डेन। "हस्तो नक्षत्रभेदे स्यात् करेभकरयोरपि" इति विश्वः। सशब्दं सघोषं बृहतः तरङ्गान् भिन्दन् विदारयन् तीराभिमुखः सः गजः वारी गजबन्धनस्थानम्। "वारी तु गजबन्धनी" इति यादवः। वार्य्याः अर्गलायाः विष्कम्भस्य भङ्गे भञ्जने प्रवृत्तः इव, बभौ॥ ४५॥

शैलेति। शैलोपमः सः गजः शैवलमञ्जरीणां जालानि समूहानि उरसा कर्षन् पश्चात् तटम् उत्ससर्प पूर्वं तेन गजेन

तस्यैकनागस्य कपोलभित्त्यो-
र्जलावगाहक्षणमात्रशान्ता ।
वन्येतरानेकपदर्शनेन
पुनर्दिदीपे मददुर्दिनश्रीः ॥ ४७ ॥

सप्तच्छदक्षीरकटुप्रवाह-
मसह्यमाघ्राय मदं तदीयम् ।
विलङ्घिताधोरणतीव्रयत्नाः
सेनागजेन्द्रा विमुखा बभूवुः ॥ ४८ ॥

स च्छिन्नबन्धद्रुतयुग्यशून्यं
भग्नाक्षपर्य्यस्तरथं क्षणेन ।

उत्पीडितः नुन्नः वारिराशिः यस्य सः सरित्प्रवाहः तट
उत्ससर्प ॥ ४६ ॥

तस्येति । तस्य एकनागस्य एकाकिनः गजस्य कपोल
भित्त्योः जलावगाहेन क्षणमात्रं शान्ता निवृत्ता मददुर्दिनश्री
मदवर्षलक्ष्मीः वन्येतरेषां ग्राम्याणाम् अनेकपानां द्विपाना
दर्शनेन पुनः दिदीपे ववृधे ॥ ४७ ॥

सप्तच्छदेति । सप्तच्छदस्य वृक्षविशेषस्य क्षीरवत् कटु
सुरभिः प्रवाहः प्रसारः यस्य तम् । "कटुतिक्तकषायास्तु सौरभे
ऽपि प्रकीर्त्तिताः" इति यादवः । असह्यं तदीयं मदम् आघ्रा
सेनागजेन्द्राः विलङ्घितः तिरस्कृतः आधोरणानां हस्तिपका
तीव्रः महान् यत्नः यैः ते तथोक्ताः सन्तः । "आधोर
हस्तिपका हस्त्यारोहा निषादिनः" इत्यमरः । विमुखा
पराङ्मुखाः बभूवुः ॥ ४८ ॥

रामापरित्राणविहस्तयोधं
सेनानिवेशं तुमुलं चकार ॥ ४९ ॥
तमापतन्तं नृपतेरवध्यो
वन्यः करीति श्रुतवान् कुमारः।
निवर्त्तयिष्यन् विशिखेन कुम्भे
जघान नात्यायतकृष्टशार्ङ्गः ॥ ५० ॥
स विद्धमात्रः किल नागरूप-
मुत्सृज्य तद्विस्मितसैन्यदृष्टः।

स इति। सः गजः छिन्नाः बन्धाः यैः ते छिन्नबन्धाः, द्रुताः पलायिताः, युगं वहन्तीति युग्याः वाहाः यस्मिन् सः चासौ युक्ष्व तं भग्नाः अक्षाः रथावयवाः दारुविशेषाः। "अक्षो रथस्यावयवे पाशकेऽप्यक्षमिन्द्रियम्" इति शाश्वतः। येषां ते भग्नाक्षाः अत एव पर्य्यस्ताः पतिताः रथाः यस्मिन् तं, रामाणां स्त्रीणां परित्राणे संरक्षणे विहस्ताः व्याकुलाः। "विहस्त-व्याकुलौ समौ" इत्यमरः। योधाः यस्मिन् तं, सेनानिवेशं शिविरं क्षणेन तुमुलं सङ्कुलं चकार ॥ ४९ ॥

तमिति। नृपतेः राज्ञः वन्यः करी अवध्यः इति श्रुतवान् शास्त्रात् ज्ञातवान् कुमारः आपतन्तम् अभिधावन्तं तं गजं निवर्त्तयिष्यन् न तु प्रहनिष्यन् अत एव नात्यायतम् अनतिदीर्घं यथा स्यात्। नञर्थस्य नशब्दस्य सुप्सुपेति समासः! कृष्टशार्ङ्गः ईषदाकृष्टचापः सन् विशिखेन बाणेन कुम्भे जघान। अत्र चाणक्यः—"लक्ष्मीकामो युद्धादन्यत्र करिवधं न कुर्य्यात्। इयं हि श्रीर्यं करिणः" इति। अत एव "युद्धादन्यत्र" इति द्योतनार्थमेव वन्यग्रहणं कृतम् ॥ ५० ॥

स्फुरत्प्रभामण्डलमध्यवर्त्ति
कान्तं वपुर्व्योमचरं प्रपेदे ॥ ५१ ॥

अथ प्रभावोपनतैः कुमारं
कल्पद्रुमोत्थैरवकीर्य्य पुष्पैः।
उवाच वाग्मी दशनप्रभाभिः
संवर्द्धितोरःस्थलतारहारः ॥ ५२ ॥

मतङ्गशापादवलेपमूला-
दवाप्तवानस्मि मतङ्गजत्वम्।

स इति। सः गजः विद्धमात्रः ताड़ितमात्रः किल न तु प्रहृतः, तथापि नागरूपं गजशरीरम् उत्सृज्य तेन हत्तान्तेन विस्मितैः तद्विस्मितैः सैन्यैः दृष्टः सन् स्फुरतः प्रभामण्डलस्य मध्यवर्त्ति कान्तं मनोहरं व्योमचरं वपुः प्रपेदे प्राप ॥ ५१ ॥

अथेति। अथ प्रभावेण उपनतैः प्राप्तैः कल्पद्रुमोत्थैः कल्पवृक्षोत्पन्नैः पुष्पैः कुमारम् अजम् अवकीर्य्य अभिवृष्य दशनप्रभाभिः दन्तकान्तिभिः संवर्द्धिता उरःस्थले ये तारहाराः स्थूलमुक्ताहाराः ते येन सः तथोक्तः, वाचोऽस्य सन्तीति वाग्मी वक्ता। "वाचो ग्मिनिः" इति ग्मिनिप्रत्ययः। सः पुरुषः उवाच ॥ ५२ ॥

मतङ्गेति। अवलेपमूलात् गर्वहेतुकात्। "अवलेपस्तु गर्वे स्याल्लेपने दूषणेऽपि च" इति विश्वः। मतङ्गस्य मुनेः शापात् मतङ्गजत्वम् अवाप्तवान् अस्मि, मां प्रियदर्शनस्य प्रियदर्शनाख्यस्य गन्धर्वपतेः गन्धर्वराजस्य तनूजं पुत्रम्। "स्त्रियां मूर्त्तिस्तनुस्तनूः" इत्यमरः। "वन्यादेर्वा" इत्यूङिति केचित्। प्रिवं

अवेहि गन्धर्वपतेस्तनूजं
प्रियंवदं मां प्रियदर्शनस्य ॥ ५३ ॥
स चानुनीतः प्रणतेन पश्चा-
न्मया महर्षिर्मृदुतामगच्छत् ।
उष्णत्वमग्न्यातपसंप्रयोगा-
च्छैत्यं हि यत् सा प्रकृतिर्जलस्य ॥ ५४ ॥
इक्ष्वाकुवंशप्रभवो यदा ते
भेत्स्यत्यजः कुम्भमयोमुखेन ।
संयोक्ष्यसे स्वेन वपुर्महिम्ना
तदेत्यवोचत् स तपोनिधिर्माम् ॥ ५५ ॥

दं प्रियंवदाख्यम् अवेहि जानीहि । प्रियं वदतीति प्रियंवदः । "प्रियवशे वदः खच्" इति खच्प्रत्ययः ॥ ५३ ॥

स इति । सः महर्षिश्च प्रणतेन मया अनुनीतः सन् पश्चात् मृदुतां शान्तिम् अगच्छत्, तथा हि जलस्य उष्णत्वम् अग्नेः आतपस्य वा संप्रयोगात् सम्पर्कात्, न तु प्रकृत्या उष्णत्वं यत् शैत्यं सा प्रकृतिः स्वभावः । विधेयप्राधान्यात् सेति स्त्रीलिङ्गनिर्देशः । महर्षीणां शान्तिरेव स्वभावो न क्रोधः इत्यर्थः ॥ ५४ ॥

इक्ष्वाकविति । इक्ष्वाकुवंशः प्रभवः यस्य सः अजः यदा ते कुम्भम् अयोमुखेन लोहाग्रेण शरेण भेत्स्यति विदारयिष्यति तदा स्वेन वपुषः महिम्ना पुनः संयोक्ष्यसे सङ्गंस्यसे इति सः तपोनिधिः माम् अवोचत् ॥ ५५ ॥

संमोचितः सत्ववता त्वयाहं
शापाच्चिरप्रार्थितदर्शनेन ।
प्रतिप्रियं चेद्भवतो न कुर्यां
वृथा हि मे स्यात् स्वपदोपलब्धिः ॥ ५६ ॥

संमोहनं नाम सखे ! ममास्त्रं
प्रयोगसंहारविभक्तमन्त्रम् ।
गान्धर्वमादत्स्व यतः प्रयोक्तु-
र्न चारिहिंसा विजयश्च हस्ते ॥ ५७ ॥

अलं ह्रिया मां प्रति यन्मुहूर्त्तं
दयापरोऽभूः प्रहरन्नपि त्वम् ।

संमोचित इति । चिरं प्रार्थितं दर्शनं यस्य तेन सत्ववता बलवता त्वया अहं शापात् संमोचितः मोक्षं प्रापितः, भवतः प्रतिप्रियं प्रत्युपकारं न कुर्यां चेत्, मे स्वपदोपलब्धिः स्वस्थान- प्राप्तिः । "पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु" इत्यमरः । वृथा स्यात् हि । तदुक्तम्,—"प्रतिकर्त्तुमशक्तस्य जीविताम्मरणं वरम्" इति ॥ ५६ ॥

संमोहनमिति । हे सखे ! सखिशब्देन समप्राणतोक्ता यथोक्तम्,—"अत्यागसहनो बन्धुः सदैवानुमतः सुहृत् । एकक्रियं भवेन्मित्रं समप्राणः सखा मतः" ॥ इति । प्रयोगसंहारयोः विभक्तमन्त्रं गान्धर्वं गन्धर्वदेवताकं संमोह्यते अनेन इति संमोहनं नाम मम अस्त्रम् आदत्स्व गृहाण, यतः अस्मात् प्रयोक्तुः अस्त्रप्रयोगिणः अरिहिंसा न च, विजयश्च हस्ते हस्तगतो विजयो भवति इत्यर्थः ॥ ५७ ॥

तस्मादुपच्छन्दयति प्रयोज्यं
मयि त्वया न प्रतिषेधरौक्ष्यम् ॥ ५८ ॥

तथेत्युपस्पृश्य पयः पवित्रं
सोमोद्भवायाः सरितो नृसोमः।
उदङ्मुखः सोऽस्त्रविदस्त्रमन्त्रं
जग्राह तस्मान्निगृहीतशापात् ॥ ५९ ॥

एवं तयोरध्वनि दैवयोगा-
दासेदुषोः सख्यमचिन्त्यहेतु।

ननु जितः कथमस्त्रग्रहणपरः स्यामिति चेत् तत्राह,—

तस्मादिति। किञ्च, मां प्रति क्रिया प्रहारनिमित्तया
म्। कुतः? यत् यतः हेतोः त्वं मां प्रहरन् अपि मुहूर्त्तं
ापरः कृपालुः अभूः, तस्मात् उपच्छन्दयति प्रार्थयमाने मयि
या, प्रतिषेधः परिहारः सः एव रौक्ष्यं पारुष्यं तत् न प्रयोज्यं
कर्त्तव्यम् ॥ ५८ ॥

तथेति। ना सोमः चन्द्रः इव नृसोमः। उपमितसमासः।
सोम ओषधिचन्द्रयोः" इति शाश्वतः। पुरुषश्रेष्ठः इत्यर्थः।
अवित् अस्त्रज्ञः सः अजः तथेति, सोमः उद्भवः यस्याः सा
स्याः सोमोद्भवायाः सरितः नर्म्मदायाः। "रेवा तु नर्म्मदा
सोमोद्भवा मेकलकन्यका" इत्यमरः। पवित्रं पयः उपस्पृश्य
त्वा आचम्य इत्यर्थः। उदङ्मुखः सन् निगृहीतशापात्
वर्त्तितशापात् उपशान्तात् इत्यर्थः, तस्मात् प्रियंवदात् अस्त्र-
मं जग्राह ॥ ५९ ॥

एवमिति। एवम् अध्वनि मार्गे दैवयोगात् दैववशात्

एको ययौ चैत्ररथप्रदेशान्
सौराज्यरम्यानपरो विदर्भान् ॥ ६० ॥
तं तस्थिवांसं नगरोपकण्ठे
तदागमारूढ़गुरुप्रहर्षः ।
प्रत्युज्जगाम क्रथकैशिकेन्द्र-
श्चन्द्रं प्रवृद्धोर्मिरिवोर्मिमाली ॥ ६१ ॥
प्रवेश्य चैनं पुरमग्रयायी
नीचैस्तथोपाचरदर्पितश्रीः ।
मेने यथा तत्र जनः समेतो
वैदर्भमागन्तुमजं गृहेशम् ॥ ६२ ॥

अचिन्त्यहेतु अनिर्धार्य्यहेतुकं सख्यं सखित्वम्। "सख्युर्य्यः" इति यत्प्रत्ययः। आसेदुषोः प्राप्तवतोः तयोः मध्ये एकः गन्धर्वः चैत्ररथस्य कुवेरोद्यानस्य प्रदेशात्। "अस्योद्यानं चैत्ररथम्" इत्यमरः। अपरः अजः सौराज्येन राजन्वत्तया रम्यान् विदर्भान् विदर्भदेशान् ययौ ॥ ६० ॥

तमिति। नगरस्य उपकण्ठे समीपे तस्थिवांसं स्थितं तम् अजं तस्य अजस्य आगमेन आगमनेन आरूढ़ः उत्पन्नः गुरुः प्रहर्षः यस्य सः क्रथकैशिकेन्द्रः विदर्भराजः, प्रवृद्धोर्मिः ऊर्मिमाली समुद्रः चन्द्रम् इव, प्रत्युज्जगाम ॥ ६१ ॥

प्रवेश्येति। एनम् अजम् अग्रयायी सेवाधर्मेण पुरो गच्छन् इत्यर्थः, नीचैः नम्रः पुरं प्रवेश्य प्रवेशं कारयित्वा प्रीत्या अर्पितश्रीः तथा तेन प्रकारेण उपाचरत् उपचरितवान् यथा येन

तस्याधिकारपुरुषैः प्रणतैः प्रदिष्टां
प्राग्द्वारवेदिविनिवेशितपूर्णकुम्भाम्।
रम्यां रघुप्रतिनिधिः स नवोपकार्य्यां
बाल्यात् परामिव दशां मदनोऽध्युवास ॥६३॥

तत्र स्वयंवरसमाहृतराजलोकं
कन्याललाम कमनीयमजस्य लिप्सोः।
भावावबोधकलुषा दयितेव रात्रौ
निद्रा चिरेण नयनाभिमुखी बभूव ॥६४॥

प्रकारेण तत्र पुरे समेतः मिलितः जनः वैदर्भं भोजम् आगन्तुं प्राघुणिकं मेने, अजं गृहेशं गृहपतिं मेने ॥ ६२ ॥

तस्येति। रघुप्रतिनिधिः रघुकल्पः रघुतुल्यः इत्यर्थः। उक्तञ्च दण्डिना सादृश्यवाचकप्रस्तावे,—"कल्पदेशीयदेश्यादि प्रख्य-प्रतिनिधी अपि" इति। सः अजः प्रणतैः नमस्कृतवद्भिः। कर्त्तरि क्तः। तस्य भोजस्य अधिकारः नियोगः तस्य पुरुषैः अधिकृतैः इत्यर्थः। प्रदिष्टां निर्दिष्टां प्राग्द्वारस्य वेद्यां विनिवेशितः प्रतिष्ठापितः पूर्णकुम्भः यस्याः तां स्थापितमङ्गलकलसाम् इत्यर्थः। रम्यां रमणीयां नवोपकार्य्यां नूतनं राजभवनम्। "उपकार्य्या राजसद्मन्युपचारचितेऽन्यवत्" इति विश्वः। मदनः बाल्यात् परां शैशवात् अनन्तरां दशाम् इव यौवनम् इव इत्यर्थः अध्युवास अधिष्ठितवान् तत्रोषितवान् इत्यर्थः। "उपान्वध्याङ्-वसः" इति कर्म्मत्वम् ॥ ६३ ॥

तत्रेति। तत्र उपकार्य्यायां स्वयंवरनिमित्तं समाहृतः संमेलितः राजलोकः येन तत् कमनीयं स्पृहणीयं कन्याललाम

तं कर्णभूषणनिपीड़ितपीवरांसं
शय्योत्तरच्छदविमर्दकृशाङ्गरागम्।
सूतात्मजाः सवयसः प्रथितप्रबोधं
प्राबोधयन्नुषसि वाग्भिरुदारवाचः ॥६५॥
रात्रिर्गता मतिमतां वर ! मुञ्च शय्यां
धात्रा द्विधैव ननु धूर्जगतो विभक्ता।

लम्बाम् श्रेष्ठम्। "ललामोऽस्त्री ललामापि प्रभावे पुच्छे ध्वजे श्रेष्ठभूषाश्वकम्राश्वपुच्छचिह्नाश्वलिङ्गिषु"॥ इति यादवः विष्णोः लब्धुम् इच्छोः। लभेः समन्तादुप्रत्ययः। अजस्य भाव अबोधे पुरुषस्य अभिप्रायपरिज्ञाने कलुषा असमर्था इयि इव, रात्रौ निद्रा चिरेण नयनाभिमुखी बभूव। "राजानं कामि धीरं प्रविशन्ति प्रजागराः" इति भावः। अभिमुखीमन्त जीवन्तः मुक्तो वा ॥६४॥

तमिति। कर्णभूषणाभ्यां निपीड़ितौ पीवरौ पीनौ अंसौ यस्य तं शय्यायाः उत्तरच्छदस्य उपर्यास्तरणवस्त्रस्य विमर्द घर्षेण कृशः विरलः अङ्गरागः यस्य तं, न त्वङ्गनासङ्गात् इति भावः। प्रथितप्रबोधं प्रकाशज्ञानं तम् एनम् अजं सवयस समानवयस्काः उदारवाचः प्रगल्भगिरः सूतात्मजाः वन्दिपुत्राः "वैतालिकाः" इति वा पाठः। "वैतालिका बोधकराः" इत्यमरः वाग्भिः स्तुतिपाठैः उषसि प्राबोधयन् प्रबोधयामासुः ॥६५॥

रात्रिरिति। हे मतिमतां वर! निर्धारणे षष्ठी। रात्रि गता, शय्यां मुञ्च, विनिद्रो भव इत्यर्थः। विनिद्रत्वे कारणमाह, धात्रेति। धात्रा ब्रह्मणा जगतः धूः भारः। "धूः स्याद्यानमुखे भारे" इति यादवः। द्विधा एव द्वयोरेव इत्यर्थः। एकस्मा

तामेकतस्तव बिभर्त्ति गुरुर्विनिद्र-
स्तस्या भवानपरधुर्य्यपदावलम्बी ॥६६॥
निद्रावशेन भवताप्यनपेक्ष्यमाणा
पर्य्युत्सुकत्वमबला निशि खण्डितेव।
लक्ष्मीर्विनोदयति येन दिगन्तलम्बी
सोऽपि त्वदाननरुचिं विजहाति चन्द्रः ॥६७॥

तृतीयनिषेधार्थ:। विभक्ता ननु विभज्य स्थापिता खलु। तत् किमत आह,—तां धुरम् एकत: एककोटौ तव गुरु: पिता विनिद्र: सन् बिभर्त्ति, तस्या: धुर: भवान्। धुरं वहतीति धुर्य्य: भारवाही, तस्य पदं वहनस्थानम्, अपरं यत् धुर्य्यपदं तत् अवलम्बी, ततो विनिद्रो भव इत्यर्थ:। न हि उभयवाह्यम् एको वहति इति भाव: ॥ ६६ ॥

निद्रेति। चन्द्रारविन्दराजवदनादयो लक्ष्मीनिवासस्थानानीति प्रसिद्धिमाश्रित्योच्यते। निद्रावशेन निद्राधीनेन, स्त्र्यन्तरासङ्गो ध्वन्यते। भवता पर्य्युत्सुकत्वम् अपि त्वय्यनुरक्तत्वमपि इत्यर्थ:। "प्रसितोत्सुकाभ्यां तृतीया च" इति सप्तम्यर्थे तृतीया। अपिशब्दस्त्वद्विषयानुरागस्यानुपेक्ष्यत्वद्योतनार्थ:। निशि खण्डिता भर्त्तु: अन्यासङ्गज्ञानकलुषिता अबला इव नायिका इव। "ज्ञातेऽन्यासङ्गविकृते खण्डितेर्ष्याकषायिता" इति दशरूपके। अनपेक्ष्यमाणा अविचारयन्ती सती, उपेक्ष्यमाणा इत्यर्थ:। लक्ष्मी: येन चन्द्रेण सह, त्वदाननसदृशत्वात् इति भाव:। विनोदयति विनोदं करोति। विनोदशब्दात् "तत् करोति तदाचष्टे" इति णिच्प्रत्यय:। सादृश्यदर्शनादयो हि विरहिणां विनोदस्थानानि इति भाव:। स चन्द्रोऽपि दिगन्तलम्बी

तद् वल्गुना युगपदुन्मिषितेन तावत्
सद्यः परस्परतुलामधिरोहतां द्वे ।
प्रस्पन्दमानपरुषेतरतारमन्त-
श्चक्षुस्तव प्रचलितभ्रमरञ्च पद्मम् ॥६८॥
वृन्तात् श्लथं हरति पुष्पमनोकहानां
संसृज्यते सरसिजैररुणांशुभिन्नैः ।

पश्चिमाशां गतः सन्, अस्तं गच्छन् इत्यर्थः, अतएव त्वदानन-रुचिं विजहाति त्वन्मुखसादृश्यं त्यजति इत्यर्थः । अतो निद्रां विहाय तां लक्ष्मीमनन्यशरणां परिगृहाण इति भावः । "अनवेक्षमाणा" इति पाठे—निद्रावशेन भवता अपि अनवेक्ष-माणा अनिरीक्षमाणा । कर्मणि शानच् । लक्ष्मीः प्रयोजककर्त्री येन चन्द्रेण प्रयोज्येन पर्युत्सुकत्वं त्वद्विरहवेदनाम् । "कालाक्षमत्वमौत्सुक्यं मनस्तापज्वरादिकृत्" इत्यलङ्कारे । विनोदयति निरासयतीति योजना । शेषं पूर्ववत् । नाथस्य, अर्थोपपत्तिमपश्यन् इमं पक्षमुपेक्षिष्ट ॥ ६७ ॥

तदिति । तत् तस्मात् लक्ष्मीपरिग्रहणात् वल्गुना मनोज्ञेन । "वल्गु स्थाने मनोज्ञे च वल्गु भाषितमन्यवत्" इति विश्वः । युगपत् तावत् उन्मिषितेन युगपत् एव उन्मीलितेन सद्यः द्वे अपि परस्परतुलाम् अन्योन्यसादृश्यम् अधिरोहतां प्राप्नुताम् । प्रार्थनायां लोट् । के द्वे ? अन्तः प्रस्पन्दमाना चलन्ती परुषेतरा स्निग्धा तारा कनीनिका यस्य तत् तथोक्तम् । "तारकाक्ष्णः कनीनिका" इत्यमरः । तव चक्षुः, अन्तः प्रचलितभ्रमरं चलद्भृङ्गं पद्मं च, युगपदुन्मेषे सति सम्पूर्ण-सादृश्यलाभः इति भावः ॥ ६८ ॥

स्वाभाविकं परगुणेन विभातवायुः
सौरभ्यमीप्सुरिव ते मुखमारुतस्य ॥६९॥
ताम्रोदरेषु पतितं तरुपल्लवेषु
निर्धौतहारगुलिकाविशदं हिमाम्भः ।
आभाति लब्धपरभागतयाऽधरोष्ठे
लीलास्मितं सदशनार्चिरिव त्वदीयम् ॥७०॥
यावत् प्रतापनिधिराक्रमते न भानु-
रह्नाय तावदरुणेन तमो निरस्तम् ।

वृन्तादिति । विभातवायुः प्रभातवायुः स्वाभाविकं नैसर्गिकं तव मुखमारुतस्य निःश्वासपवनस्य सौरभ्यं तादृक् सौगन्ध्यम् इत्यर्थः परगुणेन अन्यदीयगुणेन, सङ्क्रामिकगन्धेन इत्यर्थः । ईप्सुः आप्तुमिच्छुः इव । "आप्ज्ञप्यृधामीत्" इति ईकारादेशः । अनोकहानां वृक्षाणां श्लथं शिथिलं पुष्पं वृन्तात् प्रसवबन्धनात् । "वृन्तं प्रसवबन्धनम्" इत्यमरः । हरति आदत्ते । अरुणांशुभिन्नैः अरुणकिरणोद्बोधितैः सरसि जातैः सरसिजैः कमलैः सह । "तत्पुरुषे कृति बहुलम्" इति सप्तम्या अलुक् । संसृज्यते सङ्गच्छते । सृजेर्दैवादिकात् कर्त्तरि लट् ॥ ६९ ॥

ताम्रेति । ताम्रोदरेषु अरुणाभ्यन्तरेषु तरुपल्लवेषु पतितं निर्धौता या हारगुलिका मुक्तामणयः तद्वत् विशदं हिमाम्भः लब्धपरभागतया लब्धोत्कर्षतया । "परभागो गुणोत्कर्षे" इति यादवः । अधरोष्ठे त्वदीयं सदशनार्चिः दन्तकान्तिसहितं लीलास्मितम् इव, आभाति शोभते ॥ ७० ॥

यावदिति । प्रतापनिधिः तेजोनिधिः । भानुः यावत् न

आयोधनाग्रसरतां त्वयि वीर ! याते
किंवा रिपूंस्तव गुरुः स्वयमुच्छिनत्ति ॥७१॥
शय्यां जहत्युभयपक्षविनीतनिद्राः
स्तम्बेरमा मुखरशृङ्खलकर्षिणस्ते ।
येषां विभान्ति तरुणारुणरागयोगा-
द्भिन्नाद्रिगैरिकतटा इव दन्तकोशाः ॥७२॥

आक्रमते न उद्गच्छति । "आङ उद्गमने" इत्यात्मनेपदम्, भा वनुदित एव इत्यर्थः । मङ्क्षु झटिति । "द्राक् झटित्यञ्जसा ह्नाय" इत्यमरः । अरुणेन अनूरुणा । "सूरसूतोऽरुणोऽनूरु इत्यमरः । तावत् तमः निरस्तम् । तथाहि, हे वीर ! त्व आयोधनेषु युद्धेषु । "युद्धमायोधनं जन्यम्" इत्यमरः । अ सरतां पुरःसरतां याते सति तव गुरुः पिता रिपून् स्वय उच्छिनत्ति किंवा नोच्छिनत्त्येव इत्यर्थः । न खलु योग्यपा न्यस्तभाराणां स्वामिनां स्वयं व्यापारखेदः इति भावः ॥७१॥

शय्यामिति । उभाभ्यां पक्षाभ्यां पार्श्वाभ्यां विनीता निद्रा ये ते उभयपक्षविनीतनिद्राः । अत्र समासविषये उभशब्दस्य उभयशब्दप्रयोग एव साधुः इत्यनुसन्धेयम् । यथाह कैयटः "उभादुदात्तो नित्यमिति, नित्यग्रहणस्येदं प्रयोजनं वृत्तिविष उभशब्दस्य प्रयोगो मा भूत् उभयशब्दस्यैव यथा स्यात् उभयपु इत्यादि भवति" इति । मुखराणि उत्थानचलनात् शब्दा मानानि शृङ्खलानि निगड़ानि कर्षन्तीति तथोक्ताः ते तव स्त रमन्तीति स्तम्बेरमा हस्तिनः । "स्तम्बकर्णयो रमिजपो इत्यच्प्रत्ययः, "हस्तिसूचकयोः" इति वक्तव्यात् । "इभः स्त रमः पद्मी" इत्यमरः । "तत्पुरुषे कृति बहुलम्" इति सप्त

दीर्घेष्वमी नियमिताः पटमण्डपेषु
निद्रां विहाय वनजाक्ष ! वनायुदेश्याः ।
वक्त्रोष्मणा मलिनयन्ति पुरोगतानि
लेह्यानि सैन्धवशिलाशकलानि वाहाः ॥७३॥

भवति विरलभक्तिर्म्लानपुष्पोपहारः
स्वकिरणपरिवेषोद्भेदशून्याः प्रदीपाः ।
अयमपि च गिरं नस्त्वत्प्रबोधप्रयुक्ता-
मनुवदति शुकस्ते मञ्जुवाक् पञ्जरस्थः ॥७४॥

पश्चत्। यस्यां वहति स्रजन्ति। येषां स्तम्बेरमाणां दन्ताः कोशाः इव दन्तकोशाः दन्तकुड्मलाः तद्धातुधरामयोमात् धात्वाकरावचसम्पर्कात् हेतोः भिन्नाद्रिगैरिकतटाः इव विभान्ति, धातुरक्ता इव भान्ति इत्यर्थः ॥ ७२ ॥

दीर्घेष्विति। हे वनजाक्ष ! नीरजाक्ष !। "वनं नीरं वनं सलिलम्" इति याम्नातः। दीर्घेषु पटमण्डपेषु नियमिताः बद्धाः वनायुदेश्याः वनायुदेशे भवाः। "पारसीका वनायुजाः" इति हलायुधः। अमी वाहाः अश्वाः निद्रां विहाय पुरोगतानि लेह्यानि आस्वाद्यानि सैन्धवशिलाशकलानि। "सैन्धवोऽस्त्री शितशिवं माणिमन्थञ्च सिन्धुजे" इत्यमरः। वक्त्रोष्मणा मलिनयन्ति मलिनानि कुर्वन्ति। उक्तञ्च सिद्धयोगसंग्रहे,— "पूर्वाह्नकाले चाश्वानां प्रायशो लवणं हितम्। शूलानाह-विबन्धघ्नं लवणं सैन्धवं वरम्" ॥ इत्यादि ॥ ७३ ॥

भवतीति। म्लानः पुष्पोपहारः पुष्पपूजा म्लानत्वात् एव विरलभक्तिः विरलरचनः भवति। प्रदीपाश्च स्वकिरणानां परि-

इति विरचितवाग्भिर्वन्दिपुत्रैः कुमारः
सपदि विगतनिद्रस्तल्पमुज्झाञ्चकार ।
मदपटु निनदद्भिर्बोधितो राजहंसैः
सुरगज इव गाङ्गं सैकतं सुप्रतीकः ॥७५॥
अथ विधिमवसाय्य शास्त्रदृष्टं
दिवसमुखोचितमञ्चिताचिपक्ष्मा ।

वेषस्य मण्डलस्य उद्भेदेन स्फुरणेन शून्याः भवन्ति, निस्तेजस्का भवन्ति इत्यर्थः । अपि च अयं मञ्जुवाक् मधुरवचनः पञ्जरस्थः ते तव शुकः त्वत्प्रबोधनिमित्ते प्रयुक्ताम् उच्चारितां नः अस्माकं गिरं वाणीम् अनुवदति, अनुकृत्य वदति इत्यर्थः । इत्थं प्रभातलिङ्गानि वर्त्तन्ते अतः प्रबोद्धव्यम् इति भावः ॥ ७४ ॥

इतीति । इति इत्थं विरचितवाग्भिः वन्दिपुत्रैः वैतालिकैः । पुत्रग्रहणं समानवयस्कत्वद्योतनार्थम् । सपदि विगतनिद्रः कुमारः तल्पं शय्याम् । "तल्पं शय्याट्टदारेषु" इत्यमरः । उज्झाञ्चकार विससर्ज । "इजादेश्च गुरुमतोऽनृच्छः" इत्याम्प्रत्ययः । कथमिव ? मदेन पटु मधुरं निनदद्भिः राजहंसैः बोधितः सुप्रतीकाख्यः सुरगजः ईशानदिग्गजः, गङ्गायाः इदं गाङ्गं सैकतं पुलिनम् इव । "तोयोत्थितं तत् पुलिनं सैकतं सिकतामयम्" इत्यमरः । "सिकताशर्कराभ्यां च" इत्यण्प्रत्ययः । सुप्रतीकग्रहणं प्रायशः कैलासवासिनस्तस्य नित्यं गङ्गातटविहारसम्भवादित्यनुसन्धेयम् ॥ ७५ ॥

अथेति । अथ उत्थानानन्तरम् अञ्चितानि चारूणि अक्षिपक्ष्माणि यस्य सः अजः शास्त्रे दृष्टम् अवगतं दिवसमुखोचितं

कुशलविरचितानुकूलवेषः
क्षितिपसमाजमगात् स्वयंवरस्थम् ॥७६॥

इति श्रीरघुवंशे महाकाव्ये कालिदासकृतौ
अजस्वयंवराभिगमनो नाम
पञ्चमः सर्गः।

ात:कालोचितं विधिम् अनुष्ठानम् अवसाय्य समाप्य। स्यते-
ंक्तात् ल्यप्। कुशलैः प्रसाधनदक्षैः विरचितः अनुकूलः स्वयं-
ोचितः वेषः नेपथ्यं यस्य सः तथोक्तः सन् स्वयंवरस्थं क्षितिप-
माजं राजसमूहम् अगात् अगमत्। "इणो गा लुङि" इति
ादेशः। पुष्पिताग्रावृत्तमेतत्। तल्लक्षणम्,—"अयुजि नयुग-
फतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा" इति ॥७६॥

इति श्रीमहामहोपाध्याय-कोलाचल-मल्लिनाथसूरि-
विरचितायां रघुवंशव्याख्यायां सञ्जीवनी-
समाख्यायां पञ्चमः सर्गः।

# षष्ठः सर्गः ।

स तत्र मञ्चेषु मनोज्ञवेषान्
सिंहासनस्थानुपचारवत्सु ।
वैमानिकानां मरुतामपश्य-
दाकृष्टलीलान् नरलोकपालान् ॥ १ ॥

रतेर्गृहीतानुनयेन कामं
प्रत्यर्पितस्वाङ्गमिवेश्वरेण ।
काकुत्स्थमालोकयतां नृपाणां
मनो बभूवेन्दुमतीनिराशम् ॥ २ ॥

जाह्नवी मूर्ध्नि पादे वा कालः कण्ठे वपुष्यथ ।
कामारिं कामतातं वा कञ्चिद्देवं भजामहे ॥

स इति । सः अजः तत्र स्थाने उपचारवत्सु राजोपचारवत्सु मञ्चेषु पर्य्यङ्केषु सिंहासनस्थान् मनोज्ञवेषान् मनोहरनेपथ्यान् वैमानिकानां विमानैश्चरताम् । "चरति" इति ठक्प्रत्ययः । मरुताम् अमराणाम् । "मरुतौ पवनामरौ" इत्यमरः । आकृष्टलीलान् गृहीतसौभाग्यान्, आकृष्टमरुल्लीलान् इत्यर्थः । सापेक्षत्वेऽपि गमकत्वात् समासः । नरलोकं पालयन्तीति नरलोकपालाः । कर्म्मण्यण्प्रत्ययः । तान् भूपालान् अपश्यत् । सर्गेऽस्मिन्नुपजातिः छन्दः ॥ १ ॥

रतेरिति । "रतिः स्मरप्रियायाञ्च रागे च सुरते स्मृता" इति विश्वः । रतेः कामप्रियायाः गृहीतानुनयेन स्वीकृतप्रार्थनेन गृहीतरत्यनुनयेन इत्यर्थः । सापेक्षत्वेऽपि गमकत्वात् समासः ।

वैदर्भनिर्दिष्टमसौ कुमारः
कॢप्तेन सोपानपथेन मञ्चम् ।
शिलाविभङ्गैर्मृगराजशाव-
स्तुङ्गं नगोत्सङ्गमिवारुरोह ॥ ३ ॥

परार्द्ध्यवर्णास्तरणोपपन्न-
मासेदिवान् रत्नवदासनं सः ।
भूयिष्ठमासीदुपमेयकान्ति-
र्मयूरपृष्ठाश्रयिणा गुहेन ॥ ४ ॥

...रेण हरेण प्रत्यर्पितस्वाङ्गं कामम् इव स्थितं काकुत्स्थम् अजम् आलोकयतां नृपाणां मनः इन्दुमतीनिराशं वैदर्भी-...स्पृहं बभूव । इन्दुमती सत्पतिमेनं विहाय नास्मान् वरिष्य-...तीति निश्चिक्युः इत्यर्थः । सर्वातिशयसौन्दर्य्यमस्य इति भावः॥२॥

वैदर्भेति । असौ कुमारः, वैदर्भेण भोजेन निर्दिष्टं प्रदर्शितं मञ्चं पर्य्यङ्कं कॢप्तेन सुविहितेन सोपानपथेन मृगराजशावः सिंहपोतः । "पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः" इत्यमरः । शिलानां विभङ्गैः भङ्गीभिः तुङ्गम् उन्नतं नगोत्सङ्गं शैलाग्रम् इव, आरुरोह ॥ ३ ॥

परार्द्ध्येति । परार्द्ध्याः श्रेष्ठाः वर्णाः नीलपीतादयः यस्य तेन आस्तरणेन कम्बलादिना उपपन्नं सङ्गतं रत्नवत् रत्न-खचितम् आसनं सिंहासनम् आसेदिवान् अधिष्ठितवान् सः अजः मयूरपृष्ठाश्रयिणा गुहेन सेनान्या सह । "सेनानीरग्नि-भूर्गुहः" इत्यमरः । भूयिष्ठम् अत्यर्थम् उपमेयकान्तिः आसीत् । मयूरस्य विचित्ररूपत्वात् तत्साम्यं रत्नासनस्य, तद्द्वारा च तदा-रूढ़योरपि इति भावः ॥ ४ ॥

तासु श्रिया राजपरम्परासु
प्रभाविशेषोदयदुर्निरीक्ष्यः ।
सहस्रधात्मा व्यरुचद्विभक्तः
पयोमुचां पङ्क्तिषु विद्युतेव ॥ ५ ॥
तेषां महार्हासनसंस्थितानां-
मुदारनेपथ्यभृतां स मध्ये ।
रराज धाम्ना रघुसूनुरेव
कल्पद्रुमाणामिव पारिजातः ॥६॥

तास्विति। तासु राजपरम्परासु श्रिया लक्ष्म्या कर्त्र्यां पयोमुचां मेघानां पङ्क्तिषु विद्युता इव, सहस्रधा विभक्तः तरङ्गेषु तरणिरिव स्वयमेकः एव प्रत्येकं सङ्क्रामितः इत्यर्थः। प्रभाविशेषस्य उदयेन आविर्भावेन दुर्निरीक्ष्यः दुर्दर्शनः आत्मा श्रियः स्वरूपं व्यरुचत् व्यद्योतिष्ट। "द्युद्भ्यो लुङि", इति परस्मैपदं द्युतादित्वादङ्प्रत्ययः। तस्मिन् समये प्रत्येकं सङ्क्रान्तलक्ष्मीकतया तेषां किमपि दुरासदं तेजः प्रादुरासीत् इत्यर्थः ॥ ५ ॥

तेषामिति। महार्हासनसंस्थितानां श्रेष्ठसिंहासनस्थानाम् उदारनेपथ्यभृताम् उज्ज्वलवेषधारिणां तेषां राज्ञां मध्ये, कल्पद्रुमाणां मध्ये पारिजातः इव सुरद्रुमविशेषः इव। "पञ्चैते देवतरवो मन्दारः पारिजातकः। सन्तानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम्" ॥ इत्यमरः। सः रघुसूनुः एव धाम्ना तेजसा रराज। "भूम्ना" इति पाठे अतिशयेन इत्यर्थः। अत्र कल्प-द्रुमशब्दः पञ्चान्यतमविशेषवचनः, उपकल्पयन्ति मनोरथा-

नेत्रव्रजाः पौरजनस्य तस्मिन्
विहाय सर्वान् नृपतीन् निपेतुः ।
मदोत्कटे रेचितपुष्पवृक्षा
गन्धद्विपे वन्य इव द्विरेफाः ॥ ७ ॥

अथ स्तुते वन्दिभिरन्वयज्ञैः
सोमार्कवंश्ये नरदेवलोके ।
सञ्चारिते चागुरुसारयोनौ
धूपे समुत्सर्पति वैजयन्तीः ॥८॥

ति व्युत्पत्त्या सुरद्रुममात्रोपलक्षकतया प्रयुक्त इत्यनुसन्धे-
म्। कल्पाः इति द्रुमाः कल्पद्रुमाः इति विग्रहः ॥ ६ ॥

नेत्रेति। पौरजनस्य नेत्रव्रजाः सर्वान् नृपतीन् विहाय
स्मिन् अजे निपेतुः स एव सर्वैस्त्वरैव ददृशे इत्यर्थः। कथ-
व ? मदोत्कटे मदेन उद्भिन्नगण्डे निर्भरमदे वा, वन्ये गन्ध-
पे गन्धप्रधाने द्विपे गजे रेचिताः रिक्तीकृताः पुष्पाणां वृक्षाः
ते त्यक्तपुष्पवृक्षाः इत्यर्थः, द्विरेफाः भृङ्गाः इव। द्विपस्य
थविशेषणं द्विरेफाणां पुष्पवृक्षत्यागसम्भावनार्थं कृतम् ॥ ७ ॥

त्रिभिर्विशेषकमाह,—

अथेति। अथ अन्वयज्ञैः राजवंशाभिज्ञैः वन्दिभिः स्तुति-
ठकैः। "वन्दिनः स्तुतिपाठकाः" इत्यमरः। सोमार्कवंश्ये
ोमसूर्यवंशभवे नरदेवलोके स्तुते सति, विविशेत्युत्तरेण सम्बन्धः,
मुत्तरत्रापि योज्यम्। सञ्चारिते समन्तात् प्रचारिते अगुरु-
र: योनिः कारणं यस्य तस्मिन् धूपे च वैजयन्तीः पताकाः
मुत्सर्पति सति अतिक्रम्य गच्छति सति ॥ ८ ॥

पुरोपकण्ठोपवनाश्रयाणां
कलापिनामुद्धतनृत्यहेतौ।
प्रध्मातशङ्खे परितो दिगन्ता-
स्तूर्य्यस्वने मूर्च्छति मङ्गलार्थे॥ ९॥
मनुष्यवाह्यं चतुरस्रयान-
मध्यास्य कन्या परिवारशोभि।
विवेश मञ्चान्तरराजमार्गं
पतिंवरा क्लृप्तविवाहवेषा॥ १०॥
तस्मिन् विधानातिशये विधातुः
कन्यामये नेत्रशतैकलक्ष्ये।

पुरेति। किञ्च, पुरस्य उपकण्ठे समीपे उपवनानि आश्रयः येषां तेषां कलापिनां बर्हिणाम् उद्धतनृत्यहेतौ मेघध्वनिसादृश्यात् ताण्डवकारणे प्रध्माताः पूरिताः शङ्खाः यस्मिन् तस्मिन् मङ्गलार्थे मङ्गलप्रयोजनके तूर्य्यस्वने वाद्यघोषे परितः सर्वतः दिगन्तान् मूर्च्छति व्याप्नुवति सति॥ ९॥

मनुष्येति। पतिं वृणोतीति पतिंवरा स्वयंवरा। "अथ स्वयंवरा पतिंवरा च वर्य्या च" इत्यमरः। "संज्ञायां भृतृवृजि—" इत्यादिना खच्प्रत्ययः। क्लृप्तविवाहवेषा कन्या इन्दुमती मनुष्यैः वाह्यं परिवारेण परिजनेन शोभि चतुरस्रयानं चतुरस्रवाहनं शिविकाम् अध्यास्य आरुह्य मञ्चान्तरे मञ्चमध्ये यः राजमार्गः तं विवेश॥ १०॥

तस्मिन्निति। नेत्रशतानाम् एकलक्ष्ये एकदृश्ये कन्यामये कन्यारूपे तस्मिन् विधातुः विधानातिशये सृष्टिविशेषे नरेन्द्रा

निपेतुरन्तःकरणैर्नरेन्द्रा
देहैः स्थिताः केवलमासनेषु ॥ ११ ॥
तां प्रत्यभिव्यक्तमनोरथानां
महीपतीनां प्रणयाग्रदूत्यः।
प्रवालशोभा इव पादपानां
शृङ्गारचेष्टा विविधा बभूवुः ॥ १२ ॥

न्तःकरणैः निपेतुः आसनेषु देहैः केवलं देहैः एव स्थिताः, हानपि विस्मृत्य तत्रैव दत्तचित्ता बभूवुः इत्यर्थः। न्तःकरणकर्तृके निपतने नरेन्द्राणां कर्तृत्वव्यपदेशः आदराति-शयार्थः॥ ११ ॥

तामिति। ताम् इन्दुमतीं प्रति, अभिव्यक्तमनोरथानां रूढ़ाभिलाषाणां महीपतीनां राज्ञां प्रणयाग्रदूत्यः, प्रणयः र्थना प्रेम वा। "प्रणयास्त्वमी विस्रम्भयाच्ञाप्रेमाणः" इत्य-रः। प्रणयेषु अग्रदूत्यः प्रथमदूतिकाः। प्रणयप्रकाशकत्व-म्यात् दूतीत्वव्यपदेशः। विविधाः शृङ्गारचेष्टाः शृङ्गार-कारा: पादपानां प्रवालशोभाः पल्लवसम्पदः इव बभूवुः त्यर्थाः। अत्र शृङ्गारलक्षणं रससुधाकरे,—"विभावैरनुभावैश्च चितैर्व्यभिचारिभिः। नीता सदस्यरस्यत्वं रतिः शृङ्गार च्यते"॥ रतिः इच्छाविशेषः। तल्लक्षणं तत्रैव,—"यूनोरन्योन्य-विषयस्थायिनीच्छा रतिः स्मृता" इति। चेष्टाशब्देन तदनु-भावविशेषा उच्यन्ते। तेऽपि तत्रैवोक्ताः,—"भावं मनोगतं साक्षात् स्वहेतुं व्यञ्जयन्ति ये। तेऽनुभावा इति ख्याता विक्षेपस्मितादयः। ते चतुर्धा चित्तगात्रवाग्बुद्ध्यारम्भसम्भवाः" ति। तत्र गात्रारम्भसम्भवान् चेष्टाशब्दोक्तानुभावान्

कश्चित् कराभ्यामुपगूढ़नाल-
मालोलपत्राभिहतद्विरेफम्।
रजोभिरन्तः परिवेषबन्धि
लीलारविन्दं भ्रमयाञ्चकार॥ १३ ॥

विस्रस्तमंसादपरो विलासी
रत्नानुविद्धाङ्गदकोटिलग्नम्।
प्रालम्बमुत्कृष्य यथावकाशं
निनाय साचीकृतचारुवक्त्रः॥ १४ ॥

"कश्चित्—" इत्यादिभिः श्लोकैर्वक्ष्यति। शृङ्गाराभासश्चायम् एकत्रैव प्रतिपादनात्। तदुक्तम्,—"एकत्रैवानुरागश्चेत् तिर्य्यक्म्लेच्छगतोऽपि वा। योषितां बहुशक्तिश्चेत् रसाभासस्त्रिधा मतः" ॥ इति ॥ १२ ॥

"शृङ्गारचेष्टा बभूवुः" इत्युक्तम्, ता एव दर्शयति,—

कश्चिदिति। कश्चित् राजा कराभ्यां पाणिभ्याम् उपगूढ़नालं गृहीतनालम् आलोलैः चञ्चलैः पत्रैः अभिहताः ताड़िताः द्विरेफाः भ्रमराः येन तत् तथोक्तं रजोभिः परागैः अन्तः परिवेषं मण्डलं बध्नातीति अन्तःपरिवेषबन्धि लीलारविन्दं भ्रमयाञ्चकार, करस्थलीलारविन्दवत् त्वयाहं भ्रमयितव्यः इति नृपाभिप्रायः। हस्तघूर्णकोऽयमपलक्षणक इति इन्दुमत्यभिप्रायः॥ १३ ॥

विस्रस्तमिति। विलसनशीलः विलासी। "वौ कषलसकत्थ-स्रम्भः" इति घिणुन्प्रत्ययः। अपरः राजा अंसात् विस्रस्तं रत्नानुविद्धं रत्नखचितं यत् अङ्गदं केयूरं तस्य कोटिलग्नं

आकुञ्चिताग्राङ्गुलिना ततोऽन्यः
किञ्चित् समावर्जितनेत्रशोभः ।
तिर्य्यग्विसंसर्पिनखप्रभेण
पादेन हैमं विलिलेख पीठम् ॥ १५ ॥
निवेश्य वामं भुजमासनार्द्धे
तत्सन्निवेशादधिकोन्नतांसः ।

प्रालम्बम् ऋजुलम्बिनीं स्रजम् । "प्रालम्बमृजुलम्बि स्यात् कण्ठात्" इत्यमरः । "प्रावारम्" इति पाठे तु उत्तरीयं वस्त्रम् । उत्क्षिप्य उद्धृत्य साचीकृतं तिर्य्यक्कृतं चारुवक्त्रं यस्य सः तथोक्तः सन् यथावकाशं स्वस्थानं निनाय । प्रावारोत्क्षेपण-च्छलेनाहं त्वामेवं परिरप्स्ये इति नृपाभिप्रायः । गोपनीयं किञ्चिदङ्गेऽस्ति ततोऽयं प्रावृणुत इति इन्दुमत्यभिप्रायः ॥१४॥

आकुञ्चितेति । ततः पूर्वोक्तात् अन्यः अपरः राजा किञ्चित् समावर्जितनेत्रशोभः ईषदर्वाक्पातितनेत्रशोभः सन् आकुञ्चिताः आभुग्नाः अग्राङ्गुलयः यस्य तेन तिर्य्यग्विसंसर्पिण्यः नखप्रभाः यस्य तेन च पादेन हैमं हिरण्मयं पीठं पादपीठं विलिलेख लिखितवान् । पादाङ्गुलीनामाकुञ्चनेन त्वं मत्समीपमागच्छ इति नृपाभिप्रायः । भूमिविलेखकोऽयमपलक्षणकः इति इन्दुमत्याशयः । भूमिविलेखनन्तु लक्ष्मीविनाशहेतु ॥१५॥

निवेश्येति । कश्चित् राजा वामं भुजम् आसनार्द्धे सिंहासनैकदेशे निवेश्य संस्थाप्य तत्सन्निवेशात् तस्य वामभुजस्य सन्निवेशात् संस्थापनात् अधिकोन्नतः अंसः वामांसः एव यस्य सः तथोक्तः विवृत्ते परावृत्ते त्रिके त्रिकप्रदेशे भिन्नहारः लुठित-हारः सन् । "पृष्ठवंशाधरे त्रिकम्" इत्यमरः । सुहृत्समा-

कश्चिद्विवृत्तत्रिकभिन्नहारः
सुहृत्समाभाषणतत्परोऽभूत् ॥१६॥
विलासिनीविभ्रमदन्तपत्र-
मापाण्डुरं केतकबर्हमन्यः।
प्रियानितम्बोचितसन्निवेशै-
र्विपाटयामास युवा नखाग्रैः ॥१७॥
कुशेशयाताम्रतलेन कश्चित्
करेण रेखाध्वजलाञ्छनेन।

भाषणतत्परः अभूत्, वामपार्श्ववर्त्तिनैव मित्रेण सम्भाषितुं प्रवृत्तः इत्यर्थः। अत एव विवृत्तत्रिकत्वं घटते। त्वया वामाङ्गे निवेशितया सह एवं वार्त्तां करिष्ये इति नृपाभिप्रायः। परं दृष्ट्वा पराङ्मुखोऽयं न कार्य्यकर्त्ता इति इन्दुमत्यभिप्रायः॥१६॥

विलासिनीति। अन्यः युवा विलासिन्याः प्रियायाः विभ्रमार्थं दन्तपत्रं दन्तपत्रभूतम् आपाण्डुरं केतकबर्हं केतकदलम्। "दलेऽपि बर्हम्" इत्यमरः। प्रियानितम्बे उचितसन्निवेशैः अभ्यस्तनिक्षेपणैः नखाग्रैः विपाटयामास विदारयामास। अहं तव नितम्बे एवं नखव्रणादीन् दास्यामि इति नृपाशयः। तृणच्छेदकवत् पत्रपाटकोऽयमपलक्षणकः इति इन्दुमत्याशयः॥ १७ ॥

कुशेशयेति। कश्चित् राजा कुशेशयं शतपत्रम् इव आताम्रं तलं यस्य तेन। "शतपत्रं कुशेशयम्" इत्यमरः। रेखा रूपः ध्वजः लाञ्छनं यस्य तेन करेण अङ्गुलिषु भवानि अङ्गुलीयानि ऊर्मिकाः। "अङ्गुलीयकमूर्मिका" इत्यमरः। "जिह्मामूला-

रत्नाङ्गुलीयप्रभयानुविद्धा-
नुदीरयामास सलीलमक्षान् ॥१८॥
कश्चिद्यथाभागमवस्थितेऽपि
स्वसन्निवेशाद् व्यतिलङ्घिनीव ।
वज्रांशुगर्भाङ्गुलिरन्ध्रमेकं
व्यापारयामास करं किरीटे ॥ १९ ॥
ततो नृपाणां श्रुतवृत्तवंशा
पुंवत् प्रगल्भा प्रतिहाररक्षी ।

द्युलेच्छः" इति कप्रत्ययः। रत्नानाम् अङ्गुलीयानि तेषां प्रभया अनुविद्धान् व्याप्तान् अक्षान् पाशान्। "अक्षास्तु देवनाः पाशकाश्च ते" इत्यमरः। सलीलम् उदीरयामास उत्क्षिप। अहं तया सहैवं रंस्ये इति नृपाभिप्रायः। अक्षधातुर्यं कापुरुषोऽयम् इति इन्दुमत्यभिप्रायः। "अक्षैर्मा दीव्येत्" इति श्रुतिनिषेधात् ॥ १८ ॥

कश्चिदिति। कश्चित् यथाभागं यथास्थानम्। अवस्थिते अपि स्वसन्निवेशात् व्यतिलङ्घिनि इव स्वस्थानात् चलिते इव किरीटे वज्राणां किरीटगतानाम् अंशवः गर्भे येषां तानि अङ्गुलिरन्ध्राणि यस्य तम् एकं करं व्यापारयामास। किरीटवत्त्वाम शिरसि स्थितामपि त्वां भारं न मन्ये इति नृपाभिप्रायः। शिरसि न्यस्तहस्तोऽयमपलक्षणकः इति इन्दुमत्यभिप्रायः ॥ १९ ॥

तत इति। ततः अनन्तरं नृपाणां श्रुतवृत्तवंशा श्रुतनृपवृत्तवंशा इत्यर्थः। सापेक्षत्वेऽपि गमकत्वात् समासः। प्रगल्भा वाग्मिनी सुनन्दा सुनन्दाख्या प्रतिहारं रक्षतीति प्रतीहाररक्षी

प्राक् सन्निकर्षं मगधेश्वरस्य
नीत्वा कुमारीमवदत् सुनन्दा ॥ २० ॥

असौ शरण्यः शरणोन्मुखाना-
मगाधसत्वो मगधप्रतिष्ठः ।
राजा प्रजारञ्जनलब्धवर्णः
परन्तपो नाम यथार्थनामा ॥ २१ ॥

द्वारपालिका । कर्मण्यण्प्रत्ययः । "टिड्ढाणञ्—" इत्यादिना ङीप् । प्राक् प्रथमं कुमारीम् इन्दुमतीं मगधेश्वरस्य सन्निकर्षं समीपं नीत्वा पुंवत् पुंसा तुल्यम् । "तेन तुल्यं क्रिया चेद्वतिः" इति वतिप्रत्ययः । अवदत् ॥ २० ॥

असाविति । असौ राजा । असाविति पुरोवर्त्तिनो निर्देशः, एवमुत्तरत्रापि द्रष्टव्यम् । शरणोन्मुखानां शरणार्थिनां शरण्यः शरणे रक्षणे साधुः । "तत्र साधुः" इति यत्प्रत्ययः । "शरणं भवितुमर्हः शरण्यः" इति नाथनिरुक्तिर्निर्मूलैव । अगाधसत्वः गम्भीरस्वभावः । "सत्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोः" इति विश्वः । मगधाः जनपदाः, तेषु प्रतिष्ठा आस्पदं यस्य सः मगधप्रतिष्ठः । "प्रतिष्ठा कृत्यमास्पदम्" इत्यमरः । प्रजारञ्जने लब्धवर्णः विचक्षणः, यद्वा प्रजारञ्जनेन लब्धोत्कर्षः, परान् शत्रून् तापयतीति परन्तपः परन्तपाख्यः । "द्विषत्परयोस्तापेः" इति खच्प्रत्ययः । "खचि ह्रस्वः" इति ह्रस्वः । "अरुर्द्विषदजन्तस्य मुम्" इति मुमागमः । नामेति प्रसिद्धौ, यथार्थनामा, शत्रुसन्तापनात् इति भावः ॥ २१ ॥

कामं नृपाः सन्तु सहस्रशोऽन्ये
राजन्वतीमाहुरनेन भूमिम् ।
नक्षत्रताराग्रहसङ्कुलापि
ज्योतिष्मती चन्द्रमसैव रात्रिः ॥२२॥

क्रियाप्रबन्धादयमध्वराणा-
मजस्रमाहूतसहस्रनेत्रः ।
शच्याश्चिरं पाण्डुकपोललम्बान्
मन्दारशून्यानलकांश्चकार ॥ २३ ॥

काममिति । अन्ये नृपाः कामं सहस्रशः सन्तु, भूमिम् अनेन राजन्वतीं शोभनराजवतीम् आहुः, नैतादृक् कश्चिदस्ति इत्यर्थः । "सुराज्ञि देशे राजन्वान् स्यात् ततोऽन्यत्र राजवान्" इत्यमरः । "राजन्वान् सौराज्ये" इति निपातनात् साधुः । तथाहि, नक्षत्रैः अश्विन्यादिभिः ताराभिः साधारणैः ज्योतिर्भिः ग्रहैः भौमादिभिश्च सङ्कुला अपि रात्रिः चन्द्रमसा एव, ज्योतिरस्या अस्तीति ज्योतिष्मती, नान्येन ज्योतिषा इत्यर्थः ॥ २२ ॥

क्रियेति । अयं परन्तपः अध्वराणां क्रतूनां क्रियाप्रबन्धात् अनुष्ठानसातत्यात्, अविच्छिन्नादनुष्ठानात् इत्यर्थः, अजस्रं नित्यम् आहूतसहस्रनेत्रः सन् चिरं शच्याः अलकान् पाण्डुकपोलयोः लम्बान् । स्रस्तान् । पचाद्यच् । मन्दारैः कल्पद्रुमकुसुमैः शून्यान् चकार । प्रोषितभर्तृका हि केशसंस्कारं न कुर्वन्ति । "प्रोषिते मलिना कृशा" इति "क्रीडां शरीरसंस्कारं समाजोत्सवदर्शनम् । हास्यं परगृहे यानं त्यजेत् प्रोषितभर्तृका" ॥ इति च स्मरणात् ॥ २३ ॥

अनेन चेदिच्छसि गृह्यमाणं
पाणिं वरेण्येन कुरु प्रवेशे।
प्रासादवातायनसंश्रितानां
नेत्रोत्सवं पुष्पपुराङ्गनानाम्॥ २४॥

एवं तयोक्ते तमवेक्ष्य किञ्चि-
द्विस्रंसिदूर्वाङ्कमधूकमाला।
ऋजुप्रणामक्रिययैव तन्वी
प्रत्यादिदेशैनमभाषमाणा॥ २५॥

तां सैव वेत्रग्रहणे नियुक्ता
राजान्तरं राजसुतां निनाय।

अनेनेति। वरेण्येन वरणीयेन। वृणोतेरौणादिक एन्य-प्रत्ययः। अनेन राज्ञा गृह्यमाणं पाणिम् इच्छसि चेत्, पाणि-ग्रहणमिच्छसि चेत् इत्यर्थः। प्रवेशे प्रवेशकाले प्रासादवाता-यनसंश्रितानां राजभवनगवाक्षस्थितानां पुष्पपुराङ्गनानां पाटलि-पुराङ्गनानां नेत्रोत्सवं कुरु। सर्वोत्तमानां तासामपि दर्शनीया भविष्यसि इति भावः॥ २४॥

एवमिति। एवं तया सुनन्दया उक्ते सति तं परन्तपम् अवेक्ष्य किञ्चित् विस्रंसिनी दूर्वाङ्का दूर्वाचिह्ना मधूकमाला गुड़पुष्पमाला यस्याः सा। "मधूके तु गुड़पुष्पमधुद्रुमौ" इत्यमरः, वरणे शिथिलप्रयत्ना इति भावः। तन्वी इन्दुमती एनं नृपम् अभाषमाणा ऋज्वा भावशून्यया प्रणामक्रियया एव प्रत्यादिदेश परिजहार॥ २५॥

तामिति। सा एव न अन्या, चित्तज्ञत्वात् इति भावः।

समीरणोत्थेव तरङ्गलेखा
पद्मान्तरं मानसराजहंसीम् ॥ २६ ॥
जगाद चैनामयमङ्गनाथः
सुराङ्गनाप्रार्थितयौवनश्रीः।
विनीतनागः किल सूत्रकारै-
रैन्द्रं पदं भूमिगतोऽपि भुङ्क्ते ॥ २७ ॥

प्रहवे नियुक्ता दौवारिकी सुनन्दा तां सङ्गमुखीं राजान्तरम् यराजानं निनाय। नयतिर्द्विकर्मकः। कथमिव? मीरणोत्था वातोत्पन्ना तरङ्गलेखा ऊर्म्मिपङ्क्तिः मानवे सि या राजहंसी तां पद्मान्तरम् इव ॥ २६ ॥

जगादेति। एनाम् इन्दुमतीं जगाद। किमिति? अयम् ङ्गनाथः अङ्गदेशाधीश्वरः सुराङ्गनाभिः प्रार्थिता कामिता वनश्रीः यस्य सः तथोक्तः। पुरा किलैनमिन्द्रसहायार्थमिन्द्र- गामिनम् अकामयन्त अप्सरसः इति प्रसिद्धिः। किञ्च त्रकारैः गजशास्त्रकर्त्तृभिः पालकाप्यादिभिः महर्षिभिः विनीतनागः क्षितगजः। किल इत्यैतिह्ये। अत एव भूमिगतः अपि ऐन्द्रं दम् ऐश्वर्यं भुङ्क्ते भूर्लोक एव स्वर्गसुखमनुभवति इत्यर्थः। काप्यादेर्वार्षिकत्वम् ऐन्द्रपदप्रसङ्गार्थः। पुरा किल कुतश्चि- शापकारणात् भुवमवतीर्य दिग्गजवर्णमालोक्य क्षयमगम- रन्द्राभ्यनुज्ञया आनीतैर्देवर्षिभिः प्रणीतेन शास्त्रेण गजान् नीकृत्य भुवि सम्प्रदायं प्रावर्त्तयदिति कथा गीयते ॥२७॥

अनेनेति। अङ्गविलासिनीनां स्तनेषु मुक्ताफलस्थूलतमाम् श्रुबिन्दून्। "अश्रमश्रुणि" इति विश्वः। पर्य्यासयता तारयता, भर्त्तृवधात् इति भावः। अनेन अङ्गनाथेन उन्मुच्य

अनेन पर्य्यासयताश्रुबिन्दून्
मुक्ताफलस्थूलतमान् स्तनेषु ।
प्रत्यर्पिताः शत्रुविलासिनीना-
मुन्मुच्य सूत्रेण विनैव हाराः ॥ २८ ॥

निसर्गभिन्नास्पदमेकसंस्थ-
मस्मिन् द्वयं श्रीश्च सरस्वती च ।
कान्त्या गिरा सूनृतया च योग्या
त्वमेव कल्याणि ! तयोस्तृतीया ॥ २९ ॥

अथाङ्गराजादवतार्य्य चक्षु-
र्याहीति जन्यामवदत् कुमारी ।

आक्षिप्य सूत्रेण विना हाराः एव प्रत्यर्पिताः । अविच्छिन्ना
श्रुबिन्दुप्रवर्त्तनाद्धुत्तूलहारार्पणमेव जातमित्युत्प्रेक्षा गम्यते ॥

निसर्गेति । निसर्गतः स्वभावतः भिन्नास्पदं भिन्नाश्र
सहावस्थानविरोधि इत्यर्थः, श्रीश्च सरस्वती च इति द्वयम्
अस्मिन् अङ्गनाथे एकत्र संस्था स्थितिः यस्य तत् एकसंस्थम्
उभयमिह सङ्गतम् इत्यर्थः । हे कल्याणि ! "बह्वादिभ्य"
इति ङीष् । कान्त्या सूनृतया सत्यप्रियया गिरा च योग्या
संसर्गार्हा त्वम् एव तयोः श्रीसरस्वत्योः तृतीया, समान
गुणयोर्युवयोः दाम्पत्यं युज्यत एव इति भावः । दक्षिण
नायकत्वञ्चास्य ध्वन्यते । तदुक्तम्,—"तुल्योऽनेकत्र दक्षिण
इति ॥ २९ ॥

अथेति । अथ कुमारी अङ्गराजात् चक्षुः अवतार्य्य
इत्यर्थः । जन्यां मातृकल्पां सुनन्दां याहि गच्छ इति अवद

नासौ न काम्यो न च वेद सम्यग्
द्रष्टुं न सा भिन्नरुचिर्हि लोकः ॥ ३० ॥
ततः परं दुष्प्रसहं द्विषद्भि-
र्नृपं नियुक्ता प्रतिहारभूमौ ।
निदर्शयामास विशेषदृश्य-
मिन्दुं नवोत्थानमिवेन्दुमत्यै ॥ ३१ ॥

अथवा, जनीं वधूं वहन्तीति जन्याः वधूबन्धवः तान् यात गच्छत इति अवदत् । "जन्या मातृसखीमुदोः । जन्यो हरवधूज्ञातिप्रियतुल्यहितेऽपि च" इति पञ्चद्वयेऽपि विश्वः । अथवा, जन्याः वधूभृत्याः । "भृत्याश्चापि नवोढायाः" इति केशवः । "संज्ञायां जन्या" इति यत्प्रत्ययान्तो निपातः । अत्राह वृत्तिकारः—"जनीं वधूं वहन्तीति जन्याः जामातुर्वयस्याः" इति । यथामरः,—"जन्याः स्निग्धाः वरस्य ये" इति तत्सर्वमुपपन्नार्थमित्यविरोधः । न चायमङ्गराजनिषेधो दृष्टदोषाच्चापि दृष्टदोषादित्याह,—नेत्यादिना । असौ अङ्गराजः काम्यः कमनीयः न इति न, किन्तु काम्य एव इत्यर्थः । सा कुमारी च सम्यक् द्रष्टुं न वेद इति न, वेद इत्यर्थः । किन्तु लोकः जनः भिन्नरुचिः हि, क्वचिदमपि किञ्चित् कश्चिच्चित् रोचते, किं कुर्मो न रोच्छा नियन्तुं शक्यते ॥ ३० ॥

तत इति । ततः अनन्तरं प्रतिहारभूमौ द्वारदेशे नियुक्ता दौवारिकी । "स्त्री द्वार्द्वारं प्रतीहारः" इत्यमरः । द्विषद्भिः शत्रुभिः दुष्प्रसहं दुःसहं शूरम् इत्यर्थः विशेषेण दृश्यं दर्शनीयं रूपवन्तम् इत्यर्थः । परम् अन्यं नृपं नवोत्थानं नवोदयम् इन्दुम् इव इन्दुमत्यै निदर्शयामास ॥ ३१ ॥

असौ महाकालनिकेतनस्य
वसन्नदूरे किल चन्द्रमौलेः ।
तमिस्रपक्षेऽपि सह प्रियाभिः
ज्योत्स्नावतो निर्विशति प्रदोषान् ॥३४॥

अनेन यूना सह पार्थिवेन
रम्भोरु ! कच्चिन्मनसो रुचिस्ते ।
सिप्रातरङ्गानिलकम्पितासु
विहर्त्तुमुद्यानपरम्परासु ॥ ३५ ॥

तस्मिन्नभिद्योतितबन्धुपद्मे
प्रतापसंशोषितशत्रुपङ्के ।

असाविति । असौ अवन्तिनाथः महाकालं नाम स्थानविशेषः तत् एव निकेतनं स्थानं यस्य तस्य चन्द्रमौलेः ईश्वरस्य अदूरे समीपे वसन् अतएव हेतोः तमिस्रपक्षे कृष्णपक्षे अपि प्रियाभिः सह ज्योत्स्नावतः प्रदोषान् रात्रीः निर्विशति अनुभवति किल। नित्यज्योत्स्नाविहारत्वमेतस्यैव नान्यस्य इति भावः ॥ ३४ ॥

अनेनेति । रम्भे कदलीस्तम्भौ इव ऊरू यस्याः सा रम्भोरूः तस्याः सम्बोधनं हे रम्भोरु ! ऊरूत्तरपदादौपम्ये इत्यूङ्प्रत्ययः, नदीत्वात् ह्रस्वः । यूना अनेन पार्थिवेन सह सिप्रा नाम तत्रत्या नदी तस्याः तरङ्गाणाम् अनिलेन कम्पितासु उद्यानानां परम्परासु पङ्क्तिषु विहर्त्तुं ते तव मनसः रुचिः कच्चित् ? स्पृहास्ति किम् इत्यर्थः । "अभिष्वङ्गे स्पृहायाञ्च गभस्तौ च रुचिः स्त्रियाम्" इत्यमरः ॥ ३५ ॥

बबन्ध सा नोत्तमसौकुमार्य्या
कुमुद्वती भानुमतीव भावम् ॥ २६ ॥

तामग्रतस्तामरसान्तराभा-
मनूपराजस्य गुणैरनूनाम्।
विधाय सृष्टिं ललितां विधातुः
जगाद भूयः सुदतीं सुनन्दा ॥ २७ ॥

संग्रामनिर्विष्टसहस्रबाहु-
रष्टादशद्वीपनिखातयूपः।

तस्मिन्निति। उत्तमसौकुमार्य्या उत्कृष्टाकुमार्दवा सा इन्दुमती अभिद्योतितानि उद्भासितानि बन्धवः एव पद्मानि येन तस्मिन् प्रतापेन तेजसा संशोषिताः शत्रवः एव पङ्काः कर्दमाः येन तस्मिन् अवन्तिनाथे कुमुद्वती। कुमुदनड्वेतसेभ्यो ड्मतुप् इति ड्मतुप्प्रत्ययः। भानुमति अंशुमति इव भावं चित्तं न बबन्ध, न तत्रानुरागमकरोत् इत्यर्थः बन्धूनां पद्मत्वेन शत्रूणां पङ्कत्वेन च रूपणं राज्ञः सूर्य्यसाम्यार्थम् ॥ २६ ॥

तामिति। सुनन्दा तामरसान्तराभां पद्मोदरतुल्यकान्तिं कनकगौरीम् इत्यर्थः गुणैः अनूनाम् अधिकाम् इत्यर्थः शोभनाः दन्ताः यस्याः सा सुदती। वयसि दन्तस्य दतृ इति दत्रादेशः उगितश्चेति ङीप्। तां प्रकृतां प्रसिद्धां वा विधातुः ललितां सृष्टिं मधुरनिर्माणां स्त्रियम् इत्यर्थः। अनुगताः आपः येषु ते अनूपा, नाम देशाः। ऋक्पूरब्धूः पथामानक्षे इत्यप्रत्ययः समासान्तः ऊदनोर्देशे इत्यूदादेशः। तेषां राज्ञः अनूपराजस्य अग्रतः विधाय व्यवस्थाप्य भूयः पुनः जगाद ॥ २७ ॥

अनन्यसाधारणराजशब्दो
बभूव योगी किल कार्त्तवीर्य्यः ॥ ३८ ॥
अकार्य्यचिन्तासमकालमेव
प्रादुर्भवंश्चापधरः पुरस्तात् ।
अन्तःशरीरेष्वपि यः प्रजानां
प्रत्यादिदेशाविनयं विनेता ॥ ३९ ॥

संग्रामेति । संग्रामेषु युद्धेषु निर्विष्टाः अनुभूताः सहस्रं बाहवः यस्य सः तथोक्तः युद्धादन्यत्र द्विभुज एव दृश्यते इत्यर्थः । अष्टादशसु द्वीपेषु निखाताः स्थापिताः यूपाः येन सः तथोक्तः । सर्वक्रतुयाजी सार्वभौमश्च इति भावः । जरायुजादिसर्वभूतरञ्जनात् अनन्यसाधारणः राजशब्दः यस्य सः तथोक्तः योगी ब्रह्मविद्वान् इत्यर्थः । स किल भगवतो दत्तात्रेयाल्लब्धयोगः इति प्रसिद्धिः । कृतवीर्य्यस्य अपत्यं पुमान् कार्त्तवीर्य्यः नाम राजा बभूव किल इति । अयं चास्य महिमा सर्वोऽपि दत्तात्रेयवरप्रसादलब्ध इति भारते दृश्यते ॥ ३८ ॥

अकार्य्येति । विनेता शिक्षकः यः कार्त्तवीर्य्यः अकार्य्यस्य असत्कार्य्यस्य चिन्तायाः अहं चौर्य्यादिकं करिष्यामीति बुद्ध्याः समकालम् एककालम् एव यथा तथा पुरस्तात् अग्रे चापधरः प्रादुर्भवन् सन् प्रजानाम् जनानाम् । "प्रजा स्यात् सन्ततौ जने" इत्यमरः । अन्तःशरीरेषु अन्तःकरणेषु । शरीरशब्देन इन्द्रियं लक्ष्यते । अविनयम् अपि प्रत्यादिदेश मानसापराधमपि निवारयामास इत्यर्थः । अन्ये तु वाक्कायापराधमात्रप्रतिकर्त्तारः इति भावः ॥ ३९ ॥

अन्योन्यसूतोन्मथनादभूतां
तावेव सूतौ रथिनौ च कौचित् ।
व्यश्वौ गदाव्यायतसंप्रहारौ
भग्नायुधौ बाहुविमर्दनिष्ठौ ॥५२॥

परस्परेण क्षतयोः प्रहर्त्रो-
रुत्क्रान्तवाय्वोः समकालमेव ।
अमर्त्यभावेऽपि कयोश्चिदासी-
देकाप्सरःप्रार्थितयोर्विवादः ॥ ५३ ॥

कलेवरं ददर्श । "कबन्धोऽस्त्री क्रियायुक्तमपमूर्द्धकलेवरम्" इत्यमरः ॥ ५१ ॥

अन्योन्येति । कौचित् वीरौ अन्योन्यस्य सूतयोः सारथ्योः उन्मथनात् निधनात् तौ एव सूतौ रथिनौ योद्धारौ च अभूतां, तौ एव व्यश्वौ नष्टाश्वौ सन्तौ गदाभ्यां व्यायतः दीर्घः सम्प्रहारः युद्धं ययोः तौ अभूतां, ततः भग्नायुधौ भग्नगदौ सन्तौ बाहुविमर्दे निष्ठा नाशः ययोः तौ अभूताम् । "निष्ठा निष्पत्तिनाशान्ता" इत्यमरः ॥ ५२ ॥

परस्परेणेति । परस्परेण अन्योन्यं क्षतयोः क्षततन्वोः समकालम् एककालं यथा तथा उत्क्रान्तवाय्वोः युगपदुद्गतप्राणयोः एका एव अप्सराः प्रार्थिता याभ्यां तयोः एकाप्सरःप्रार्थितयोः प्रार्थितैकाप्सरसोः इत्यर्थः । वाहिताग्न्यादिष्विति परनिपातः । अथवा, एकस्याम् अप्सरसि प्रार्थितं प्रार्थना ययोः इति विग्रहः । स्त्रियां बहुष्वप्सरस इति बहुत्वाभिधानं प्रायिकम् । कयोश्चित् प्रहर्त्रोः योधयोः अमर्त्यभावे अपि देवत्वे अपि

व्यूढावुभौ तावितरेतरस्मात्-
भङ्गं जयञ्चापतुरव्यवस्थम् ।
पश्चात्पुरोमारुतयोः प्रवृद्धौ
पर्य्यायवृत्त्येव महार्णवोर्म्मी ॥ ५४ ॥

परेण भग्नेऽपि बले महौजाः
ययावजः प्रत्यरिसैन्यमेव ।
धूमो निवर्त्त्येत समीरणेन
यतस्तु कक्षस्तत एव वह्निः ॥ ५५ ॥

विवादः कलहः आसीत् । एकामिषाभिलाषो हि महद्वैरवीजम् इति भावः ॥५३॥

व्यूढाविति । तौ उभौ व्यूढौ सेनासङ्घातौ । "व्यूहस्तु बलविन्यासः" इत्यमरः । पश्चात् पुरश्च यौ मारुतौ तयोः पर्य्यायवृत्त्या क्रमवृत्त्या प्रवृद्धौ महार्णवोर्म्मी इव इतरेतरस्मात् अन्योन्यस्मात् अव्यवस्थं व्यवस्थारहितम् अनियतं जयं भङ्गं पराजयं च आपतुः प्राप्तवन्तौ ॥ ५४ ॥

परेणेति । बले स्वसैन्ये परेण परबलेन भग्ने अपि महौजाः महाबलः अजः अरिसैन्यं प्रति एव ययौ । तथाहि, समीरणेन वायुना धूमः निवर्त्त्येत कक्षात् अपसार्य्येत । वर्त्ततेर्ण्यन्तात् कर्मणि सम्भावनायां लिङ् । वह्निस्तु यतः यत्र कक्षः तृणम् "कक्षौ तु तृणवीरुधौ" इत्यमरः । ततः एव तत्रैव प्रवर्त्तते इति शेषः । सार्वविभक्तिकस्तसिः ॥ ५५ ॥

रथी निषङ्गी कवची धनुष्मान्
दृप्तः स राजन्यकमेकवीरः।
निवारयामास महावराहः
कल्पक्षयोद्वृत्तमिवार्णवाम्भः॥५६॥
स दक्षिणं तूणमुखेन वामं
व्यापारयन् हस्तमलक्ष्यताजौ।
आकर्णकृष्टा सकृदस्य योद्धु-
र्मौर्वीव बाणान् सुषुवे रिपुघ्नान्॥५७॥
स रोषदष्टाधिकलोहितोष्ठै-
र्व्यक्तोर्ध्वरेखा भ्रुकुटीर्वहद्भिः।

रथीति। रथी रथारूढः निषङ्गी तूणीरवान्। "तूणोपासङ्ग-तूणीरनिषङ्गा इषुधिर्द्वयोः" इत्यमरः। कवची वर्मधरः धनुष्मान् धनुर्धरः दृप्तः रणदृप्तः एकवीरः असहायशूरः सः अजः राजन्यकं राजसमूहम्। गोत्रोक्षेत्यादिना वुञ्प्रत्ययः। महावराहः वराहावतारो विष्णुः कल्पक्षये कल्पान्तकाले उद्वृत्तम् उद्वेलम् अर्णवाम्भः इव निवारयामास॥ ५६॥

स इति। सः अजः आजौ संग्रामे दक्षिणं हस्तं तूणमुखेन निषङ्गविवरेण वामम् अतिसुन्दरम्। "वामं सव्ये प्रतीपे च द्रविणे चातिसुन्दरे" इति विश्वः। व्यापारयन् अलक्ष्यत शर-सन्धानादयस्तु दुर्लक्ष्याः इत्यर्थः। सकृत् आकर्णकृष्टा योद्धुः अस्य अजस्य मौर्वी ज्या रिपून् हन्तीति रिपुघ्नाः तान्। अमनुष्यकर्तृके च इति ठक्प्रत्ययः। बाणान् सुषुवे इव, सुषुवे किमु इत्युत्प्रेक्षा॥ ५७॥

तस्तार गां भल्लनिकृत्तकण्ठै-
र्हुङ्कारगर्भैर्द्विषतां शिरोभिः ॥५८॥
सर्वैर्बलाङ्गैर्द्विरदप्रधानैः
सर्वायुधैः कङ्कटभेदिभिश्च ।
सर्वप्रयत्नेन च भूमिपाला-
स्तस्मिन् प्रजह्रुर्युधि सर्व एव ॥५९॥
सोऽस्त्रव्रजैश्छन्नरथः परेषां
ध्वजाग्रमात्रेण बभूव लक्ष्यः ।

स इति । सः अजः रोषेण दष्टाः अतएव अधिकलोहिताः
ओष्ठाः येषां तानि तैः व्यक्ता ऊर्द्धा रेखा यासां ताः भ्रुकुटीः
भ्रूभङ्गान् वहद्भिः भल्लनिकृत्ताः बाणविशेषच्छिन्नाः कण्ठाः येषां
तैः हुङ्कारगर्भैः, सहुङ्कारैः हुङ्कुर्वद्भिः इत्यर्थः । द्विषतां शिरोभिः
गां भूमिं तस्तार छादयामास ॥ ५८ ॥

सर्वैरिति । द्विरदप्रधानैः गजमुख्यैः सर्वैः बलाङ्गैः सेनाङ्गैः ।
"हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चतुष्टयम्" इत्यमरः । कङ्कट-
भेदिभिः कवचभेदिभिः । "उरश्छदः कङ्कटकोऽजगरः कवचो-
ऽस्त्रियाम्" इत्यमरः । सर्वायुधैश्च । वाह्यबलमुक्त्वा आन्तरमाह
सर्वप्रयत्नेन च सर्वे एव भूमिपालाः युधि तस्मिन् अजे प्रजह्रुः
इत्यर्थः । सर्वत्र सर्वकारकशक्तिसम्भवात् कर्मणोऽप्यधिकरण-
विवक्षायां सप्तमी । तदुक्तम्, "अनेकशक्तियुक्तस्य विश्वस्यानेक-
कर्मणः । सर्वदा सर्वथाभावात् क्वचित् किञ्चित् विवक्ष्यते ॥"
इति ॥ ५९ ॥

स इति । परेषां द्विषाम् अस्त्रव्रजैः छन्नरथः सः अजः,

नीहारमग्नो दिनपूर्वभागः
किञ्चित्प्रकाशेन विवस्वतेव ॥६०॥
प्रियंवदात् प्राप्तमसौ कुमारः
प्रायुङ्क्त राजस्वधिराजसूनुः।
गान्धर्वमस्त्रं कुसुमास्त्रकान्तः
प्रस्वापनं स्वप्ननिवृत्तलौल्यः ॥ ६१ ॥
ततो धनुष्कर्षणमूढहस्त-
मेकांसपर्यस्तशिरस्त्रजालम्।
तस्थौ ध्वजस्तम्भनिषण्णदेहं
निद्राविधेयं नरदेवसैन्यम् ॥ ६२ ॥

नीहारैः हिमैः मग्नः दिनपूर्वभागःप्रातःकालः किञ्चित्प्रकाशे ईषल्लक्ष्येण विवस्वता इव, ध्वजाग्रमात्रेण लक्ष्यः बभूव ध्वजाग्र दन्यन्न किञ्चिल्लक्ष्यते स्म इत्यर्थः ॥ ६० ॥

प्रियंवदादिति। अधिराजसूनुः महाराजपुत्रः कुसुमा कान्तः मदनसुन्दरः स्वप्ननिवृत्तलौल्यः स्वप्नविद्वेषाः जागरू इत्यर्थः असौ कुमारः अजः प्रियंवदात् पूर्वोक्तात् गन्धर्वात् प्रा गान्धर्वं गन्धर्वदेवताकम्। सास्य देवतेत्यण्। प्रस्वापयती प्रस्वापनं निद्राजनकम् अस्त्रं राजसु प्रायुङ्क्त प्रयुक्तवान् ॥६१

तत इति। ततः धनुष्कर्षणे चापकर्षणे मूढहस्तम् अव्यापृ हस्तम् एकस्मिन् अंसे पर्यस्तं स्रस्तं शिरस्त्राणां शीर्षण्यानां जा समूहः यस्य तत् ध्वजस्तम्भेषु निषण्णाः अवष्टब्धाः देहाः य तत् नरदेवानां राज्ञां सेना एव सैन्यम्। चातुर्वर्ण्यादित्वा स्वार्थे ष्यञ्प्रत्ययः। निद्राविधेयं निद्रापरतन्त्रं तस्थौ ॥ ६२ ॥

ततः प्रियोपात्तरसेऽधरौष्ठे
निवेश्य दध्मौ जलजं कुमारः।
तेन स्वहस्तार्जितमेकवीरः
पिबन् यशो मूर्त्तमिवाबभासे ॥६३॥

शङ्खस्वनाभिज्ञतया निवृत्ता-
स्तं सन्नशत्रुं ददृशुः स्वयोधाः।
निमीलितानामिव पङ्कजानां
मध्ये स्फुरन्तं प्रतिमाशशाङ्कम् ॥ ६४ ॥

सशोणितैस्तेन शिलीमुखाग्रै-
र्निक्षेपिताः केतुषु पार्थिवानाम्।

तत इति। ततः कुमारः अजः प्रियया इन्दुमत्या उपात्तरसे
स्वादितमाधुर्य्ये अतिस्वाद्ये इति भावः अधरौष्ठे जलजं शङ्ख'
निवेश्य। "जलजं शङ्खपद्मयोः" इति विश्वः। दध्मौ मुखमा-
न पूरयामास, तेनौष्ठनिविष्टेन शङ्खेन एकवीरः सः स्वहस्ता-
र्जितं मूर्त्तं मूर्त्तिमत् यशः पिबन् इव आबभासे यशसः शुभ्रत्वात्
इति भावः ॥ ६३ ॥

शङ्खेति। शङ्खस्वनस्य अजशङ्खध्वनेः अभिज्ञतया प्रत्यभि-
ज्ञत्वात् निवृत्ताः प्राक् पलाय्य संप्रति प्रत्यागताः स्वयोधाः
सन्नशत्रुं निद्रास्त्रशत्रुं तम् अजं, निमीलितानां मुकुलितानां
पङ्कजानां मध्ये स्फुरन्तं प्रतिमा चासौ शशाङ्कश्च तं प्रतिमा-
शशाङ्कं प्रतिबिम्बचन्द्रम् इव, ददृशुः ॥ ६४ ॥

सशोणितैरिति। संप्रति राघवेण रघुपुत्रेण। पूर्वं रघुणा

यशो हृतं संप्रति राघवेण
न जीवितं वः कृपयेति वर्णाः ॥ ६५ ॥

स चापकोटीनिहितैकबाहुः
शिरस्त्रनिष्कर्षणभिन्नमौलिः ।
ललाटबद्धश्रमवारिबिन्दु-
र्भीतां प्रियामेत्य वचो बभाषे ॥ ६६ ॥

इतः परानर्भकहार्यशस्त्रान्
वैदर्भि ! पश्यानुमता मयासि ।

इति भावः । हे राजानः ! वः युष्माकं यशः हृतं जीवितं
तु कृपया न हृतं न त्वशक्त्या इति भावः इत्येवंरूपा वर्णाः
एतदर्थप्रतिपादकं वाक्यम् इत्यर्थः सशोणितैः शोणितदिग्धैः
शिलिमुखाग्रैः बाणाग्रैः साधनैः तेन अजेन प्रयोजककर्त्रा
पार्थिवानां राज्ञां केतुषु ध्वजस्तम्भेषु निवेशिताः प्रयोज्यैरस्त्रैः
निवेशिताः लेखिताः इत्यर्थः । क्षिपतेर्ण्यन्तात् कर्मणि क्तः ॥६५॥

स इति । चापकोट्यां निहितः एकबाहुः येन सः शिर-
स्त्रस्य निष्कर्षणेन अपनयनेन भिन्नमौलिः श्लथकेशबन्धः । चूडा
किरीटं केशाश्च संयता मौलयस्त्रय;" इत्यमरः । ललाटे बद्धाः
श्रमवारिबिन्दवः यस्य सः सः अजः भीतां प्रियाम् इन्दुमतीम्
एत्य आसाद्य वचो बभाषे ॥ ६६ ॥

किमित्याह, इत इति । हे वैदर्भि ! इन्दुमति ! इतः इदा-
नीम् अर्भकहार्यशस्त्रान् बालकापहार्यायुधान् परान् शत्रून्
पश्य मया अनुमता असि द्रष्टुम् इति शेषः । एभिः कर्तृभिः
एवंविधेन निद्रारूपेण आहवचेष्टितेन रणकर्मणा मम इदं

एवंविधेनाहवचेष्टितेन

त्वं प्रार्थ्यसे हस्तगता ममैभिः ॥६७॥

तस्याः प्रतिद्वन्द्विभवाद्विषादात्

सद्यो विमुक्तं मुखमाबभासे ।

निश्वासबाष्पापगमात् प्रपन्नः

प्रसादमात्मीयमिवात्मदर्शः ॥६८॥

हृष्टापि सा ह्रीविजिता न साक्षात्

वाग्भिः सखीनां प्रियमभ्यनन्दत् ।

स्थली नवाम्भःपृषताभिवृष्टा

मयूरकेकाभिरिवाभ्रवृन्दम् ॥६९॥

। हस्तगतवत् दुर्ग्रहा इत्यर्थः त्वं प्रार्थ्यसे अपजिहीर्ष्यसे
र्थः। एवंविधेनेत्यत्र स्वहस्तनिर्देशेन सोपहासमुवाचेति
व्यम् ॥ ६७ ॥

तस्या इति। प्रतिद्वन्द्विभवात् रिपूत्थात् विषादात् दैन्यात्
: विमुक्तं तस्याः मुखं, निःश्वासस्य यः बाष्पः उष्मा। "बाष्पो
जलोष्मणोः" इति विश्वः। तस्य अपगमात् हेतोः आत्मीयं
दं नैर्मल्यं प्रपन्नः प्राप्तः आत्मा स्वरूपं दृश्यते अनेनेति
मदर्शः दर्पणः इव, आबभासे ॥ ६८ ॥

हृष्टेति। सा इन्दुमती हृष्टा अपि पत्युः पौरुषेण प्रमुदिता
पि ह्रिया विजिता यतः अतः प्रियम् अजं साक्षात् स्वयं न
भनन्दत् न प्रशशंस, किन्तु नवैः [illegible]पृषतैः पयोविन्दुभिः
भिवृष्टा अभिषिक्ता स्थली अ[illegible] भूमिः। जानपदकुण्ड[illegible]

इति शिरसि स वामं पादमाधाय राज्ञा-
मुदवहदनवद्यां तामवद्यादपेतः।
रथतुरगरजोभिस्तस्य रूक्षालकाया
समरविजयलक्ष्मीः सैव मूर्त्ता बभूव ॥७०॥
प्रथमपरिगतार्थस्तं रघुः सन्निवृत्तं
विजयिनमभिनन्द्य श्लाघ्यजायासमेतम्।
तदुपहितकुटुम्बः शान्तिमार्गोत्सुकोऽभूत्
न हि सति कुलधुर्य्ये सूर्य्यवंश्या गृहाय ॥७१॥

इति श्रीरघुवंशे महाकाव्ये कालिदासकृतौ
अजपाणिग्रहणं नाम
सप्तमः सर्गः।

गोषस्थलेत्यादिना अकृत्रिमार्थे ङीष्। अभ्रवृन्दं मेघसङ्घं मयूरकेकाभिः इव,सखीनां वाग्भिः अभ्यनन्दत् ॥ ६९ ॥

इतीति। न उद्यते न उच्यते इति अवद्यं गर्ह्यम्। अवद्य-पण्येत्यादिना निपातः। "कुपूयकुत्सितावद्यखेटगर्ह्याणकाः समाः" इत्यमरः। तस्मात् अपेतः निर्दोषः इत्यर्थः सः अजः इति राज्ञां शिरसि वामं पादम् आधाय अनवद्याम् अदोषां ताम् इन्दुमतीम् उदवहत् उपानयत् आत्मसाच्चकार इत्यर्थः। अयमर्थस्तमुद्वहन्तं पथि भीष्मकन्यामित्यत्र न श्लिष्टः। तस्य अजस्य रथतुरगाणां रजोभिः रूक्षाणि परुषाणि अलकानि यस्याः सा, सा इन्दुमती एव मूर्त्ता मूर्त्तिमती समरविजय-लक्ष्मीः बभूव। एतल्लाभादन्यः को विजयलक्ष्मीलाभः इत्यर्थः ॥७०

## अष्टमः सर्गः ।

अथ तस्य विवाहकौतुकं
ललितं बिभ्रत एव पार्थिवः ।
वसुधामपि हस्तगामिनी-
मकरोदिन्दुमतीमिवापराम् ॥ १ ॥

प्रथमेति । प्रथमम् अजागमनात् प्राक् एव परिगतः ज्ञातः अर्थः विवाहविजयरूपः येन सः प्रथमपरिगतार्थः रघुः विजयिनं विजययुक्तं श्लाघ्यजायासमेतं सचिह्नस्तं प्रत्यागतं तम् अजम् अभिनन्द्य तस्मिन् अजे उपस्थितकुटुम्बः सन् "सुतविन्यस्तपत्नीकः" इति याज्ञवल्क्यस्मरणात् इति भावः । शान्तिमार्गे मोक्षमार्गे उत्सुकः अभूत्, तथापि कुलधुर्ये कुलधुरन्धरे सति सूर्यवंश्याः गृहाय गृहस्थाश्रमाय न भवन्ति ॥ ७१ ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरि-विरचितायां
रघुवंशटीकायां सञ्जीवनीसमाख्यायां
सप्तमः सर्गः ।

हेरम्बमवलम्बेऽहं यस्मिन् पातालकेलिषु ।
दन्तेनोदस्यति क्षौणीं विश्राम्यन्ति फणीश्वराः ॥

अथेति । अथ पार्थिवः रघुः ललितं सुभगं विवाहकौतुकं विवाहमङ्गलं विवाहहस्तसूत्रं वा बिभ्रतः एव । "कौतुकं मङ्गले हर्षे हस्तसूत्रे कुतूहले" इति शाश्वतः । तस्य अजस्य अपराम् इन्दुमतीम् इव वसुधाम् अपि हस्तगामिनीम् अकरोत् । अस्मिन् सर्गे वैतालीयं छन्दः ॥ १ ॥

दुरितैरपि कर्तुमात्मसात्
प्रयतन्ते नृपसूनवो हि यत्।
तदुपस्थितमग्रहीदजः
पितुराज्ञेति न भोगतृष्णया॥ २॥

अनुभूय वशिष्ठसम्भृतैः
सलिलैस्तेन सहाभिषेचनम्।
विशदोच्छ्वसितेन मेदिनी
कथयामास कृतार्थतामिव॥ ३॥

स बभूव दुरासदः परै-
र्गुरुणाथर्वविदा कृतक्रियः।

दुरितैरिति। नृपसूनवः राजपुत्राः यत् राज्यं दुरितैः अधैः विषप्रयोगादिनिषिद्धोपायैः अपि आत्मसात् स्वाधीनम् तदधीनवचन इति सातिप्रत्ययः। कर्तुं प्रयतन्ते हि प्रवर्त्तन्ते एव इत्यर्थः। हिशब्दोऽवधारणे। "हि हेतावधारणे" इत्यमरः। उपस्थितं स्वतः प्राप्तं तत् राज्यम् अजः पितुराज्ञेति हेतोः अग्रहीत् स्वीचकार भोगतृष्णया तु न अग्रहीत्॥ २॥

अनुभूयेति। मेदिनी भूमिः महिषी च ध्वन्यते वशिष्ठेन सम्भृतैः सलिलैः तेन अजेन सह अभिषेचनम् अनुभूय विशदोच्छ्वसितेन स्फुटमुद्गर्हणेन आनन्दनिर्मलोच्छ्वसितेन चेति ध्वन्यते, कृतार्थतां गुणवद्भर्तृलाभकृतं साफल्यं कथयामास इव। न चैतावता पूर्वेषामपकर्षः प्रशंसापरत्वात् "सर्वत्र जयमन्विच्छेत् पुत्रादिच्छेत् पराजयम्" इत्यङ्गीकृतत्वाच्च॥ ३॥

स इति। अथर्वविदा अथर्ववेदाभिज्ञेन गुरुणा वशिष्ठेन

पवनाग्निसमागमो ह्ययं
सहितं ब्रह्म यदस्त्रतेजसा ॥ ४ ॥
रघुमेव निवृत्तयौवनं
तममन्यन्त नवेश्वरं प्रजाः ।
स हि तस्य न केवलां श्रियं
प्रतिपेदे सकलान् गुणानपि ॥ ५ ॥
अधिकं शुशुभे शुभंयुना
द्वितयेन द्वयमेव सङ्गतम् ।

कृतक्रियः अथर्वोक्तविधिना कृताभिषेकसंस्कारः इत्यर्थः सः अजः परैः शत्रुभिः दुरासदः दुर्द्धर्षः बभूव। तथाहि, अस्त्रतेजसा चत्रतेजसा सहितं युक्तं यत् ब्रह्मतेजः अयं पवनाग्निसमागमः हि तत्कल्पः इत्यर्थः। पवनाग्नीत्यत्र पूर्वनिपातशास्त्रस्यानित्यत्वात् द्वन्द्वे घीति नाग्निशब्दस्य पूर्वनिपातः। तथा च काशिकायाम्, "अयमेकस्तु लक्षणहेत्वोरिति निर्देशः पूर्वनिपातव्यभिचारचिह्नम्" इति। क्षात्त्रेणैवायं दुर्द्धर्षः किमयं पुनर्वशिष्ठमन्त्रप्रभावे सति इत्यर्थः। अत्र मनुः, "नाक्षत्रं ब्रह्म भवति क्षत्रं नाब्रह्म वर्द्धते। ब्रह्मक्षत्रे तु संयुक्ते इहामुत्र च वर्द्धते॥" इति ॥४॥

रघुमिति। प्रजाः नवेश्वरं तम् अजम् निवृत्तयौवनं प्रत्यावृत्तयौवनं रघुम् एव अमन्यन्त न किञ्चिद्भेदकमस्ति इत्यर्थः। कुतः? हि यस्मात् सः अजः तस्य रघोः केवलाम् एकां श्रियं न प्रतिपेदे किन्तु सकलान् गुणान् शौर्य्यदाक्षिण्यादीन् अपि प्रतिपेदे अतस्तद्गुणयोगात् तद्बुद्धियुक्ता इत्यर्थः ॥ ५ ॥

पदमृद्धमजेन पैतृकं
विनयेनास्य नवञ्च यौवनम् ॥ ६ ॥

सदयं बुभुजे महाभुजः
सहसोद्वेगमियं व्रजेदिति ।
अचिरोपनतां स मेदिनीं
नवपाणिग्रहणां बधूमिव ॥७॥

अहमेव मतो महीपते-
रिति सर्वः प्रकृतिष्वचिन्तयत् ।
उदधेरिव निम्नगाशते-
ष्वभवन्नास्य विमानना क्वचित् ॥ ८ ॥

अधिकमिति । इयम् एव शुभंयुना शुभवता । "शुभंयुस्तु शुभान्वितः" इत्यमरः । अहंशुभयोर्युस् इति युस्प्रत्ययः । द्वितयेन सङ्गतं युतं सत् अधिकं शुशुभे । किं केनेत्याह, पदमिति । पैतृकं पितुरागतम् । ऋतष्ठञ् इति ठञ् प्रत्ययः । ऋद्धं समृद्धं पदं राज्यम् अजेन, अस्य अजस्य नवं यौवनं विनयेन च ॥ ६ ॥

सदयमिति । महाभुजः सः अजः अचिरोपनतां नवोपगतां मेदिनीं भुवं नवं पाणिग्रहणं विवाहः यस्याः ताम् नवोढ़ां बधूम् इव, सहसा बलात्कारेण चेत् । "सहोबलं सहामार्ग:" इत्यमरः । इयं मेदिनी बधूः वा उद्वेगं भयं व्रजेत् इति हेतोः सदयं सकृपं बुभुजे भुक्तवान् । भुजोऽनवन इत्यात्मनेपदम् ॥ ७ ॥

अहमिति । प्रकृतिषु प्रजासु मध्ये सर्वः जनः, अथवा प्रकृतिषु इति अस्य अहमित्यनेनान्वयः व्यवधानन्तु सह्यम् । सर्वः जनः

न खरो न च भूयसा मृदुः
पवमानः पृथिवीरुहानिव।
स पुरस्कृतमध्यमक्रमो-
नमयामास नृपाननुद्धरन् ॥ ९ ॥
अथ वीक्ष्य रघुः प्रतिष्ठितं
प्रकृतिष्वात्मजमात्मवत्तया।
विषयेषु विनाशधर्मसु
त्रिदिवस्थेष्वपि निःस्पृहोऽभवत् ॥१०॥

कृतिषु अहमेव महीपतेः मतः महीपतिना मन्यमानः। तिबुद्धिपूजार्थेभ्यश्चेति वर्त्तमाने क्तः, क्तस्य च वर्त्तमाने इति ष्ठी। इति अचिन्तयत् अमन्यत। उदधेः निम्नगाशतेषु व, अस्य नृपस्य कर्त्तुः। कर्तृकर्म्मणोः कृतीति कर्त्तरि षष्ठी। ।चित् अपि जने विषये विमानना अवगणना तिरस्कारः न भवत् यतो न कश्चिदवमन्यते अतः सर्वोऽप्यहमेवास्य मत ति अमन्यत इत्यर्थः ॥ ८ ॥

न खर इति। सः नृपः भूयसा बाहुल्येन खरः तीक्ष्णः न, ूयसा मृदुः अतिमृदुः अपि न, किन्तु पुरस्कृतमध्यमक्रमः सन् ध्यमपरिपाटीमवलम्ब्य इत्यर्थः, पवमानः वायुः पृथिवीरुहान् रून् इव नृपान् अनुद्धरन् अनुत्पाटयन् एव नमयामास। अत्र ामन्दकः, "मृदुश्चेदवमन्येत तीक्ष्णादुद्विजते जनः। तीक्ष्ण- व मृदुश्चैव प्रजानां स च सम्मतः॥" इति ॥ ९ ॥

अथेति। अथ रघुः आत्मजं पुत्रम् आत्मवत्तया निर्वि- ारमनस्कतया इत्यर्थः। "उदयादिष्वविकृतिर्मनसः सत्त्व-

गुणवत्सुतरोपितश्रियः
परिणामे हि दिलीपवंशजाः।
पदवीं तरुवल्कवाससां
प्रयताः संयमिनां प्रपेदिरे ॥११॥

तमरण्यसमाश्रयोन्मुखं
शिरसा वेष्टनशोभिना सुतः।
पितरं प्रणिपत्य पादयो-
रपरित्यागमयाचतात्मनः ॥१२॥

मुच्यते। "आत्मवान् सत्त्ववानुक्तः" इत्युत्पलमालायाम्। प्रकृतिषु अमात्यादिषु प्रतिष्ठितं रूढ़मूलं वीक्ष्य ज्ञात्वा विनाशः धर्मः येषां तेषु विनाशधर्म्मसु अनित्येषु इत्यर्थः। धर्मादनिच् केवलादित्यनिच्प्रत्ययः समासान्तः। त्रिदिवस्थेषु स्वर्गस्थेषु अपि विषयेषु शब्दादिषु निःस्पृहः निर्गतेच्छः अभवत् ॥ १० ॥

कुलधर्म्मश्चायमेवेत्याह,—

गुणवदिति। दिलीपवंशजाः परिणामे वार्द्धके गुणवत्सुतेषु रोपितश्रियः स्थापितलक्ष्मीकाः प्रयताश्च सन्तः तरुवल्कानि एव वासांसि येषां तेषां संयमिनां यतीनां पदवीं प्रपेदिरे यस्मात् तस्मात् अस्यापि इदमुचितम् इत्यर्थः ॥ ११ ॥

तमिति। अरण्यसमाश्रयोन्मुखं वनवासोद्युक्तं पितरं तं रघुं सुतः अजः वेष्टनशोभिना उष्णीषमनोहरेण शिरसा पादयोः प्रणिपत्य आत्मनः अपरित्यागम् अयाचत मां परित्यज्य न गन्तव्यमिति प्रार्थितवान् इत्यर्थः ॥ १२ ॥

रघुरश्रुमुखस्य तस्य तत्
कृतवानीप्सितमात्मजप्रियः।
न तु सर्प इव त्वचं पुनः
प्रतिपेदे व्यपवर्जितां श्रियम् ॥१३॥
स किलाश्रममन्त्यमाश्रितः
निवसन्नावसथे पुराद्बहिः।
समुपास्यत पुत्त्रभोग्यया
स्नुषयेवाविकृतेन्द्रियः श्रिया ॥ १४ ॥

रघुरिति। आत्मजप्रियः पुत्रवत्सलः रघुः अश्रूणि मुखे यस्य तस्य अश्रुमुखस्य अजस्य तत् अपरित्यागरूपम् ईप्सितम् अभिलषितं कृतवान्, किन्तु सर्पः त्वचम् इव, व्यपवर्जितां त्यक्तां श्रियं पुनः न प्रतिपेदे न प्राप ॥ १३ ॥

स इति। रघुः किल अन्त्यम् आश्रमं प्रव्रज्याम् आश्रितः पुरात् नगरात् बहिः आवसथे स्थाने निवसन् अविकृतेन्द्रियः जितेन्द्रियः सन् इत्यर्थः, अतएव स्नुषया इव बध्वा इव, पुत्र-भोग्यया न स्वभोग्यया श्रिया समुपास्यत शुश्रूषितः। जितेन्द्रि-यस्य तस्य स्नुषयेव श्रियापि पुष्पफलोदकाहरणादिशुश्रूषा-व्यतिरेकेण न किञ्चिदपेक्षितमासीत् इत्यर्थः। अत्र यद्यपि "ब्राह्मणाः प्रव्रजन्ति" इति श्रुतेः "आत्मन्यग्नीन् समारोप्य ब्राह्मणः प्रव्रजेद् गृहात्" इति मनुस्मरणात् "मुखजानामयं धर्मो यद्विष्णोर्लिङ्गधारणम्। बाहुजातोरुजातानामयं धर्मो न विद्यते॥" इति निषेधाच्च ब्राह्मणस्यैव प्रव्रज्या न क्षत्रियादे-रित्याहुः तथापि "यदहरेव विरजेत् तदहरेव प्रव्रजेत्" इत्यादि-

प्रथमस्थितपूर्वपार्थिवं
कुलमभ्युद्यतनूतनेश्वरम्।
नभसा निभृतेन्दुना तुला-
मुदितार्केण समारुरोह तत् ॥१५॥

श्रुतेस्त्रैवर्णिकसाधारण्यात् "त्रयाणां वर्णानां वेदमधीत्य चत्वार आश्रमाः" इति सूत्रकारवचनात् "ब्राह्मणः क्षत्रियो वापि वैश्यो वा प्रव्रजेद् गृहात् इति स्मरणात् "मुखजानामयं धर्मो वैष्णवं लिङ्गधारणम्। बाहुजातोरुजातानां त्रिदण्डं न विधीयते॥" इति निषेधस्य त्रिदण्डविषयत्वदर्शनाच्च कुत्रचिद् ब्राह्मणपदस्योपलक्षणमाचक्षाणाः केचित् त्रैवर्णिकाधिकारं प्रतिपेदिरे। तथा सति स किलाश्रममन्त्यमाश्रितः" इति अत्रापि कविनाप्ययमेव पक्षो विवक्षित इति प्रतीमः। अन्यथा वानप्रस्थाश्रमतया व्याख्याते "विदधे विधिमस्य नैष्ठिकं यतिभिः सार्द्धमनग्निमग्निचित्" इति वक्ष्यमाणेनानग्निसंस्कारेण विरोधः स्यात् अग्निसंस्काररहितस्य वानप्रस्थस्यैवाभावात् इत्यलं प्रासङ्गिकेन ॥ १४ ॥

प्रथमेति। प्रथमे स्थितः पूर्वपार्थिवः रघुः यस्य तत् अभ्युद्यतः अभ्युदितः नूतनेश्वरः अजः यस्य तत् प्रसिद्धं कुलं निभृतेन्दुना अस्तमयासन्नचन्द्रेण उदितार्केण प्रकटितसूर्य्येण नभसा तुलां सादृश्यम् समारुरोह प्राप। न च नभसा तुलामित्यत्र तुल्यार्थैरित्यादिना प्रतिषेधस्तृतीयायाः तस्य सदृशवाचि तुलाशब्दविषयत्वात् कृष्णस्य तुला नास्तीति प्रयोगात् अस्य च सादृश्यवाचित्वात् ॥१५॥

यतिपार्थिवलिङ्गधारिणौ
ददृशाते रघुराघवौ जनैः।
अपवर्गमहोदयार्थयो-
र्भुवमंशाविव धर्मयोर्गतौ ॥१६॥

अजिताधिगमाय मन्त्रिभि-
र्युयुजे नीतिविशारदैरजः।
अनपायिपदोपलब्धये
रघुराप्तैः समियाय योगिभिः ॥१७॥

नृपतिः प्रकृतीरवेक्षितुं
व्यवहारासनमाददे युवा।
परिचेतुमुपांशु धारणां
कुशपूतं प्रवयास्तु विष्टरम् ॥ १८ ॥

यतीति। यतिः भिक्षुः पार्थिवः राजा तयोः लिङ्गधारिणौ रघुराघवौ रघुतत्सुतौ अपवर्गमहोदयार्थयोः मोक्षाभ्युदयफलयोः निवर्त्तकप्रवर्त्तकरूपयोः भुवं गतौ भूलोकम् अवतीर्णौ अंशौ इव जनैः ददृशाते दृष्टौ ॥ १६ ॥

अजितेति। अजः अजिताधिगमाय अजितपदलाभाय नीतिविशारदैः नीतिज्ञैः मन्त्रिभिः युयुजे सङ्गतः, रघुः अपि अनपायिपदस्य उपलब्धये मोक्षस्य प्राप्तये यथार्थदर्शिनः यथार्थवादिनश्च आप्ताः तैः योगिभिः समियाय सङ्गतः। उभयत्राप्युपायचिन्तार्थम् इति शेषः ॥ १७ ॥

नृपतिरिति। युवा नृपतिः अजः प्रकृतीः प्रजाः कार्य्या-

अनयत् प्रभुशक्तिसम्पदा
वशमेको नृपतीननन्तरान्।
अपरः प्रणिधानयोग्यया
मरुतः पञ्च शरीरगोचरान्॥ १९ ॥
अकरोदचिरेश्वरः क्षितौ
द्विषदारम्भफलानि भस्मसात्।
इतरो दहने स्वकर्मणां
ववृते ज्ञानमयेन वह्निना॥ २० ॥

र्थिनोः अवेक्षितुं दृष्टादृष्टपरिज्ञानार्थम् इत्यर्थः व्यवहारासनं धर्मासनम् आददे स्वीचकार। प्रवयाः स्थविरः नृपतिः रघुस्तु। "प्रवयाः स्थविरो वृद्धः" इत्यमरः। धारणां चित्तस्यैकाग्रतां परिचेतुम् अभ्यसितुम् उपांशु विजने उपांशुविजने प्रोक्तम्" इति हलायुधः। कुशैः पूतं विष्टरम् आसनम् आददे। "यमादिगुणसंयुक्ते मनसः स्थितिरात्मनि। धारणा प्रोच्यते सद्भिर्योगशास्त्रविशारदैः॥" इति वशिष्ठः॥ १८ ॥

अनयदिति। एकः अन्यतरः अजः इत्यर्थः अनन्तरान् स्वभूम्यनन्तरान् नृपतीन् यातव्यपार्ष्णिग्राहादीन् प्रभुशक्तिसम्पदा कोशदण्डमहिम्ना वशं स्वायत्तताम् अनयत्। कोशो दण्डो बलं चैव प्रभुशक्तिः प्रकीर्त्तिता इति मिताक्षरायाम्। अपरः रघुः प्रणिधानयोग्यया समाध्यभ्यासेन। "योगाभ्यासार्कयोषितोः" इति विश्वः। शरीरगोचरान् देहाश्रयान् पञ्च मरुतः प्राणादीन् वशम् अनयत्॥ १९ ॥

अकरोदिति। अचिरेश्वरः अजः क्षितौ द्विषताम् आरम्भाः

पणबन्धमुखान् गुणानजः
षडुपायुङ्क्त समीक्ष्य तत्फलम् ।
रघुरप्यजयद् गुणत्रयं
प्रकृतिस्थं समलोष्टकाञ्चनः ॥२१॥

न नवः प्रभुराफलोदयात्
स्थिरकर्मा विरराम कर्मणः ।

कर्माणि तेषां फलानि भस्मसात् अकरोत् कार्त्स्न्येन भस्मीकृत-वान् । विभाषा साति कार्त्स्न्ये इति सातिप्रत्ययः । इतरः रघुः ज्ञानमयेन तत्त्वज्ञानप्रचुरेण वह्निना पावकेन करणेन स्वकर्मणां भवबीजभूतानां दहने भस्मीकरणे वृत्ते स्वकर्माणि दग्धुं प्रवृत्तः इत्यर्थः । "ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते-ऽर्जुन !" इति गीतावचनात् ॥ २० ॥

पणबन्धेति । "पणबन्धः सन्धिः" इति कौटिल्यः । अजः पणबन्धमुखान् सन्ध्यादीन् षड् गुणान् "सन्धिर्ना विग्रहो यान-मासनं द्वैधमाश्रयः । षड्गुणाः" इत्यमरः । तत्फलं तेषां गुणानां फलं समीक्ष्य आलोच्य उपायुङ्क्त फलिष्यन्तमेव गुणं प्रायुङ्क्त इत्यर्थः । प्रोपाभ्यां युजेरयज्ञपात्रेष्वित्यात्मनेपदम् । समः तुल्यतया भावितः लोष्टः मृत्पिण्डः काञ्चनं सुवर्णञ्च यस्य सः समलोष्टकाञ्चनः निःस्पृहः इत्यर्थः । रघुः अपि गुणत्रयं सत्त्वादिकम् । "गुणाः सत्त्वं रजस्तमः" इत्यमरः । प्रकृतौ साम्यावस्थायामेव तिष्ठतीति प्रकृतिस्थं पुनर्विकारशून्यं यथा तथा अजयत् ॥ २१ ॥

नेति । स्थिरकर्मा आफलोदयकर्मकारी नवः प्रभुः अजः आफलोदयात् फलसिद्धिपर्य्यन्तं कर्मणः आरम्भात् न विरराम

न च योगविधेर्नवेतरः
स्थिरधीरापरमात्मदर्शनात् ॥ २२ ॥

इति शत्रुषु चेन्द्रियेषु च
प्रतिषिद्धप्रसरेषु जाग्रतौ ।
प्रसितावुदयापवर्गयो-
रुभयीं सिद्धिमुभाववापतुः ॥ २३ ॥

अथ काश्चिदजव्यपेक्षया
गमयित्वा समदर्शनः समाः ।
तमसः परमापदव्ययं
पुरुषं योगसमाधिना रघुः ॥ २४ ॥

न निवृत्तः । जुगुप्साविरामप्रमादार्थानामुपसंख्यानमित्यपादानात् पञ्चमी, व्याङ्परिभ्यो रम इति परस्मैपदम् । स्थिरधीः नवेतरः रघुश्च आ परमात्मदर्शनात् परमात्मसाक्षात्कारपर्यन्तं योगविधेः ऐक्यानुसन्धानान्न विरराम ॥ २२ ॥

इतीति । इति एवं प्रतिषिद्धः प्रसरः स्वार्थप्रवृत्तिः येषां तेषु शत्रुषु च इन्द्रियेषु च जाग्रतौ अप्रमत्तौ उदयापवर्गयोः अभ्युदयमोक्षयोः प्रसितौ आसक्तौ । "तत्परे प्रसितासक्तौ" इत्यमरः । उभौ अजरघू उभयीं द्विविधाम् अभ्युदयमोक्षरूपाम् । उभादुदात्तो नित्यमिति तयप्प्रत्ययस्यायजादेशः, टिड्ढेति ङीप् । सिद्धिं फलम् अवापतुः उभौ उभे सिद्धी यथासंख्यम् अवापतुः इत्यर्थः ॥ २३ ॥

अथेति । अथ रघुः समदर्शनः सर्वभूतेषु समदृष्टिः स अजव्यपेक्षया अजाकाङ्क्षानुरोधेन काश्चित् समाः कतिचित्

श्रुतदेहविसर्जनः पितु-
श्चिरमश्रूणि विमुच्य राघवः।
विदधे विधिमस्य नैष्ठिकं
यतिभिः सार्द्धमनग्निमग्निचित् ॥२५॥
अकरोत् स तदौर्ध्वदैहिकं
पितृभक्त्या पितृकार्य्यकल्पवित्।
न हि तेन पथा तनुत्यज-
स्तनयावर्जितपिण्डकाङ्क्षिणः ॥ २६ ॥

वर्षाणि। "समा वर्षं समं तुल्यम्" इति विश्वः। गमयित्वा नीत्वा योगसमाधिना ऐक्यानुसन्धानेन। "संयोगो योग इत्युक्तो जीवात्मपरमात्मनोः" इति वशिष्ठः। अव्ययम् अविनाशिनं तमसः परम् अविद्यायाः परं मायातीतम् इत्यर्थः पुरुषं परमात्मानम् आपत् प्राप सायुज्यं प्राप्तः इत्यर्थः ॥ २४ ॥

श्रुतेति। अग्निचित् अग्निं चितवान्। अग्नौ चेरिति क्विप्प्रत्ययः। राघवः अजः पितुः श्रुतदेहविसर्जनः आकर्णितपितृतनुत्यागः सन् चिरम् अश्रूणि वाष्पान् विमुच्य विसृज्य अस्य पितुः अनग्निम् अग्निसंस्काररहितम् इत्यर्थः नैष्ठिकं निष्ठायाम् अन्ते भवं विधिम् आचारम् अन्त्येष्टिं यतिभिः सन्यासिभिः सार्द्धं सह विदधे चक्रे। अनग्निं विधिमित्यत्र शौनकः "सर्वसङ्गनिवृत्तस्य ध्यानयोगरतस्य च। न तस्य दहनं कार्य्यं नैव पिण्डोदकक्रिया। निदध्यात् प्रणवेनैव बिले भिक्षोः कलेवरम्। प्रोक्षणं खननञ्चैव सर्वं तेनैव कारयेत् ॥" इति ॥ २५ ॥

अकरोदिति। पितृकार्य्यस्य तातश्राद्धस्य कल्पवित् विधानज्ञः

स परार्द्धगतेरशोच्यतां
पितुरुद्दिश्य सदर्थवेदिभिः।
शमिताधिरधिज्यकार्मुकः
कृतवानप्रतिशासनं जगत्॥ २७॥
क्षितिरिन्दुमती च भामिनी
पतिमासाद्य तमग्र्यपौरुषम्।

सः अजः पितृभक्त्या पितरि प्रेम्णा कारणेन न पितुः परलोकसुखापेक्षया, मुक्तत्वात् इति भावः। तस्य रघोः और्ध्वदैहिकं देहादूर्ध्वं भवतीति तत्, तिलोदकपिण्डदानादिकम् अकरोत्। ऊर्ध्वं देहाच्चेति वक्तव्यात् ठक्प्रत्ययः, अनुशतिकादित्वादुभयपदवृद्धिः। ननु कथं भक्तिरेव श्राद्धादिफलप्रेप्सापि कस्मान्नाभूदित्याशङ्क्याह, न हीति। तेन पथा योगरूपेण मार्गेण तनुत्यजः शरीरत्यागिनः पुरुषाः तनयेन आवर्जितं दत्तं पिण्डं काङ्क्षन्तीति तथोक्ताः न हि भवन्ति॥ २६॥

स इति। परार्द्धगतेः प्रशस्तगतेः प्राप्तमोक्षस्य पितुः अशोच्यताम् अशोचनीयत्वम् उद्दिश्य अभिसन्धाय शोको न कर्त्तव्य इत्युपदिश्य इत्यर्थः सदर्थवेदिभिः परमार्थज्ञैः विद्वद्भिः शमिताधिः निवारितमनोव्यथः। "पुंस्याधिर्मानसी व्यथा" इत्यमरः। सः अजः अधिज्यकार्मुकः अधिज्यम् आरोपितमौर्वीकं कार्मुकं यस्य सः तथोक्तः सन् जगत् कर्मभूतम् अप्रतिशासनं द्वितीयाज्ञारहितम् आत्माज्ञाविधेयम् इत्यर्थः कृतवान् चकार॥ २७॥

क्षितिरिति। क्षितिः मही भामिनी कामिनी इन्दुमती च "भामिनी कामिनी च" इति हलायुधः। अग्र्यपौरुषं महा-

प्रथमा बहुरत्नसूरभूत्
अपरा वीरमजीजनत् सुतम् ॥२८॥
दशरश्मिशतोपमद्युतिं
यशसा दिक्षु दशस्वपि श्रुतम् ।
दशपूर्वरथं यमाख्यया
दशकण्ठारिगुरुं विदुर्बुधाः ॥ २९ ॥
ऋषिदेवगणस्वधाभुजां
श्रुतयागप्रसवैः स पार्थिवः ।
अनृणत्वमुपेयिवान् बभौ
परिधेर्मुक्त इवोष्णदीधितिः ॥ ३० ॥

पराक्रमम् उत्कृष्टभोगशक्तिञ्च तम् अजं पतिम् आसाद्य प्राप्य तत्र प्रथमा क्षितिः बहूनि रत्नानि श्रेष्ठवस्तूनि सूते इति बहुरत्नसूः अभूत् । "रत्नं स्वजातिश्रेष्ठेऽपि" इत्यमरः । अपरा इन्दुमती वीरं सुतम् अजीजनत् जनयति स्म । जायतेर्णौ लुङि रूपम् ॥२८

किं नामकोऽसावत आह,—

दशेति । दश रश्मिशतानि यस्य सः दशरश्मिशतः सूर्य्यः सः उपमा यस्याः सा दशरश्मिशतोपमा द्युतिः यस्य तं यशसा करणेन दशसु अपि दिक्षु आशासु श्रुतं प्रसिद्धं दशकण्ठारेः रावणारेः रामस्य गुरुं पितरं यं सुतम् आख्यया नाम्ना दशपूर्वः दशशब्दपूर्वः रथः रथशब्दः तं दशरथम् इत्यर्थः बुधाः विद्वांसः विदुः वदन्ति । विदो लटो वेति झेर्जुसादेशः ॥ २९ ॥

ऋणेति । श्रुतयागप्रसवैः अध्ययनयज्ञसन्तानैः करणैः यथा-

बलमार्त्तभयोपशान्तये
विदुषां सत्कृतये बहु श्रुतम् ।
वसु तस्य विभोर्न केवलं
गुणवत्तापि परप्रयोजना ॥ ३१ ॥

स कदाचिदवेक्षितप्रजः
सह देव्या विजहार सुप्रजाः ।
नगरोपवने शचीसखो
मरुतां पालयितेव नन्दने ॥३२॥

संख्यमृषीणां देवगणानामिन्द्रादीनां स्वधाभुजां पितॄणाम् अनृण-त्वम् ऋणविमुक्तत्वम् उपेयिवान् प्राप्तवान् । "एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारी वा" इति श्रुतेः । सः पार्थिवः अजः, परिधेः परिवेशात् । परिवेशस्तु परिधिः" इत्यमरः । मुक्तः निर्गतः कर्मकर्त्ता उष्णदीधितिः सूर्यः इव, बभौ दिदीपे इत्युपमा ॥ ३० ॥

बलमिति । तस्य विभोः अजस्य केवलं वसु धनम् एव परप्रयोजनं परोपकारकं न अभूत् किन्तु गुणवत्तापि गुणित्व-मपि परप्रयोजना परेषाम् अन्येषां प्रयोजनं यस्यां सा विधे-यांशत्वेन प्राधान्याद्गुणवत्ताया विशेषणम्, वसु इत्यत्र तूह-नीयम् । तथाहि बलं पौरुषम् आर्त्तानाम् आपन्नानां भयस्य उपशान्तये निषेधाय न तु स्वार्थं परपीड़नाय वा । बहु भूरि श्रुतं विद्या विदुषां सत्कृतये सत्काराय न तूत्सेकाय बभूव तस्य धनं परोपयोगीति किं वक्तव्यम् बलश्रुतादयोऽपि गुणाः परोपयोगिन इत्यर्थः ॥ ३१ ॥

स इति । अवेक्षितप्रजः अकुतोभयत्वेनानुसंहितप्रजः ।

अथ रोधसि दक्षिणोदधेः
श्रितगोकर्णनिकेतमीश्वरम् ।
उपवीणयितुं ययौ रवे-
रुदयावृत्तिपथेन नारदः ॥ ३३ ॥
कुसुमैर्ग्रथितामपार्थिवैः
स्रजमातोद्यशिरोनिवेशिताम् ।
अहरत् किल तस्य वेगवा-
नधिवासस्पृहयेव मारुतः ॥३४॥

नित्यमसिच् प्रजामेधयोरिति असिच्प्रत्ययः । न केवलं स्वयं गुणः इति भावः । शोभना प्रजा यस्य असौ सुप्रजाः सुपुत्रवान् पुत्र-न्यस्तभारः इति भावः । सः अजः कदाचित् देव्या महिष्या इन्दुमत्या सह नगरोपवने, नन्दने नन्दनाख्ये अमरावत्युपकण्ठ-वने शचीसखः शच्या सह इत्यर्थः मरुतां देवानां पालयिता इन्द्रः इव, विजहार चिक्रीड़ ॥३२ ॥

अथेति । अथ दक्षिणस्य उदधेः समुद्रस्य रोधसि तीरे श्रितगोकर्णनिकेतमधिष्ठितगोकर्णाख्यस्थानम् ईश्वरं शिवम् उपवीणयितुं वीणया उपगातुम् । सत्यापपाशेत्यादिना वीणा-शब्दादुपगानार्थं णिच्प्रत्ययः, ततस्तुमुन् । नारदः देवर्षिः रवेः सम्बन्धिना उदयावृत्तिपथेन आकाशमार्गेण ययौ जगाम । सूर्योपमानेन अस्य अतितेजस्त्वमुच्यते ॥ ३३ ॥

कुसुमैरिति । अपार्थिवैः अभौमैः दिव्यैः इत्यर्थः । कुसुमैः ग्रथितां रचितां तस्य नारदस्य आतोद्यस्य वाद्यस्य वीणायाः शिरसि अग्रे निवेशिताम् । "चतुर्विधमिदं वाद्यं वादित्रातोद्य-

भ्रमरैः कुसुमानुसारिभिः
परिकीर्णा परिवादिनी मुनेः ।
ददृशे पवनावलेपजं
सृजती वाष्पमिवाञ्जनाविलम् ॥३५॥

अभिभूय विभूतिमार्त्तवीं
मधुगन्धातिशयेन वीरुधाम् ।
नृपतेरमरस्रगाप सा
दयितोरुस्तनकोटिसुस्थितिम् ॥३६॥

नामकम्" इत्यमरः । स्रजं मालां वेगवान् मारुतः अधिवासे वासनायां स्पृहया इव स्रजा स्वाङ्गं संस्कर्त्तुम् इत्यर्थः । "संस्कारो गन्धमाल्याद्यैर्यः स्यात् तदधिवासनम्" इत्यमरः । अहरत् किल, किलेत्यैतिह्ये ॥ ३४ ॥

भ्रमरैरिति । कुसुमानुसारिभिः पुष्पानुयायिभिः भ्रमरैः अलिभिः परिकीर्णा व्याप्ता मुनेः नारदस्य परिवादिनी वीणा । "वीणा तु वल्लकी । विपञ्ची सा तु तन्त्रीभिः सप्तभिः परिवादिनी" इत्यमरः । पवनस्य वायोः अवलेपः अधिक्षेपः तज्जम् अञ्जनेन कज्जलेन आविलं कलुषं वाष्पम् अश्रु सृजती मुञ्चती इव ददृशे दृष्टा । परिभूताः स्त्रियोऽपि हि रुदन्ति इति भावः भ्रमराणां साञ्जनवाष्पविन्दुसादृश्यं विवक्षितम् । "वा नपुंसकस्य" इति वर्त्तमाने "आच्छीनद्योर्नुम्" विकल्पः ॥ ३५ ॥

अभिभूयेति । सा अमरस्रक् दिव्यमाला मधुगन्धयोः मकरन्दसौरभयोः अतिशयेन आधिक्येन वीरुधां लतानाम् । "लता प्रतानिनी वीरुत्" इत्यमरः । ऋतोः प्राप्ताम् आर्त्तवीम्

अथमात्रसखीं सुजातयोः
स्तनयोस्तामवलोक्य विह्वला।
निमिमील नरोत्तमप्रिया
हृतचन्द्रा तमसेव कौमुदी ॥३७॥
वपुषा करणोज्झितेन सा
निपतन्ती पतिमप्यपातयत्।
ननु तैलनिषेकविन्दुना
सह दीपार्चिरुपैति मेदिनीम् ॥ ३८ ॥

ऋतुसम्बन्धिनीं विभूतिं सम्पत्तिम् अभिभूय तिरस्कृत्य नृपतेः अजस्य दयितायाः इन्दुमत्याः उर्व्वोः विशालयोः स्तनयोः ये कोटी चूचुकौ तयोः सुस्थितिं गोप्यस्थाने पतितत्वात् प्रशस्तं स्थानम् आप ॥ ३६ ॥

अथमिति। सुजातयोः सुजन्मनोः सुन्दरयोः इत्यर्थः स्तनयोः अथमात्रसखीं सखीमिव स्थितां सुजातत्वसाधर्म्यात् अत्र: स्तनसखीत्वमिति भावः तां स्रजम् अवलोक्य ईषत् दृष्ट्वा विह्वला परवशा नरोत्तमप्रिया इन्दुमती, तमसा राहुणा। "तमस्तु राहुः स्वर्भानुः" इत्यमरः। हृतचन्द्रा कौमुदी चन्द्रिका इव, निमिमील सुमोह ममार इत्यर्थः। "निमीलो दीर्घनिद्रा च" इति हलायुधः कौमुद्याः निमीलनं प्रतिसंहारः ॥ ३७ ॥

वपुषेति। करणैः इन्द्रियैः उज्झितेन मुक्तेन। "करणं साधकतमं क्षेत्रगात्रेन्द्रियेष्वपि" इत्यमरः। वपुषा निपतन्ती सा इन्दुमती पतिम् अजम् अपि अपातयत् पातयति स्म।

उभयोरपि पार्श्ववर्त्तिनां
तुमुलेनार्त्तरवेण वेजिताः ।
विहगाः कमलाकरालयाः
समदुःखा इव तत्र चुक्रुशुः ॥३९॥

नृपतेर्व्यजनादिभिस्तमो
नुनुदे सा तु तथैव संस्थिता ।
प्रतिकारविधानमायुषः
सति शेषे हि फलाय कल्पते ॥ ४० ॥

तथाहि, निषिच्यते निषेकः तैलस्य निषेकः तैलनिषेकः क्षरत्तैलम् इत्यर्थः तस्य विन्दुना सह दीपार्च्चिः दीपज्वाला मेदिनीं भुवम् उपैतु ननु उपैत्येव। नन्वत्रावधारणे। "प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु" इत्यमरः। इन्दुमत्या दीपार्च्चिरुपमानम् अजस्य तैलविन्दुः तत एव तस्या जीवितसमाप्तिस्तस्य जीवितशेषस्य सूच्यते ॥ ३८ ॥

उभयोरिति। उभयोः दम्पत्योः पार्श्ववर्त्तिनां परिजनानां तुमुलेन सङ्कुलेन आर्त्तरवेण करुणस्वनेन वेजिताः भीताः कमलाकरालयाः सरःस्थिताः विहगाः हंसादयः अपि तत्र उपवने समदुःखाः इव तत्पार्श्ववर्त्तिनां समानशोका इव चुक्रुशुः क्रोशन्तिस्म ॥३९॥

नृपतेरिति। नृपतेः अजस्य तमः अज्ञानं व्यजनादिभिः साधनैः नुनुदे अपसारितं आदिशब्देन जलसेककर्पूरचोदादयो गृह्यन्ते। सा तु इन्दुमती तथैव संस्थिता मृता। तथाहि, प्रतिकारविधानं चिकित्सा आयुषः जीवितकालस्य शेषे सति

प्रतियोजयितव्यवल्लकी-
समवस्थामथ सत्त्वविप्लवात्।
स निनाय नितान्तवत्सलः
परिगृह्योचितमङ्कमङ्गनाम् ॥४१॥

पतिरङ्कनिषण्णया तया
करणापायविभिन्नवर्णया।
समलक्ष्यत बिभ्रदाविलां
मृगलेखामुषसीव चन्द्रमाः ॥४२॥

विद्यमाने। "आयुर्जीवितकालो ना" इत्यमरः। फलाय सिद्धये कल्पते आरोग्याय भवति नान्यथा नृपतेरायुःशेष-सद्भावात् प्रतीकारस्य साफल्यं तस्यास्तु तदभावात् वैफल्य इत्यर्थः ॥ ४० ॥

प्रतीति। अथ सत्त्वस्य चैतन्यस्य विप्लवात् विनाशात् हेतोः। "द्रव्यासुव्यवसायेषु सत्त्वम्" इत्यमरः। प्रतियोजयितव्या तन्त्रीभिः योजनीया न तु योजिततन्त्रीत्यर्थः या वल्लकी वीणा तस्याः समवस्था दशा यस्याः ताम् अङ्गनां वनितां नितान्तवत्सलः अतिप्रेमवान् सः अजः परिगृह्य हस्ताभ्यां गृहीत्वा उचितं परिचितम् अङ्कमुत्सङ्गं निनाय नीतवान् वल्लकीपक्षे तु सत्त्वं तन्त्रीणामवष्टम्भकः शलाकाविशेषः ॥ ४१ ॥

पतिरिति। पतिः अजः अङ्कनिषण्णया करणानामपायेन अपगमेन विभिन्नवर्णया विच्छायया तया, उषसि आविलां मलिनां मृगलेखां बिभ्रत् धारयन् चन्द्रमाः इव, समलक्ष्यत अदृश्यत इत्युपमा ॥ ४२ ॥

विललाप स बाष्पगद्गदं
सहजामप्यपहाय धीरताम्।
अभितप्तमयोऽपि मार्दवं
भजते कैव कथा शरीरिषु ॥ ४३ ॥

कुसुमान्यपि गात्रसङ्गमात्
प्रभवन्त्यायुरपोहितुं यदि
न भविष्यति हन्त! साधनं
किमिवान्यत् प्रहरिष्यतो विधेः ॥ ४४ ॥

विललापेति। सः अजः सहजां स्वाभाविकीम् अपि धीरतां धैर्य्यम् अपहाय विप्रकीर्य्य बाष्पेण कण्ठगतेन गद्गदं विशीर्णाक्षरं यथा यथा ध्वनिमात्रानुकारिगद्गदशब्दैः विललाप परिदेवितवान्। "विलापः परिदेवनम्" इत्यमरः। अभितप्तम् अग्निना सन्तप्तम् अयः लोहम् अचेतनम् अपि मार्दवं मृदुत्वम् अवैरत्वम् भजते, प्राप्नोति शरीरिषु देहिषु अभिसन्तप्तेषु इति शेषः विवये का एव कथा वार्त्ता अनुक्तसिद्धम् इत्यर्थः ॥ ४३ ॥

कुसुमानीति। कुसुमानि पुष्पाणि अपि। अपिशब्दो नितान्तमार्दवद्योतनार्थः। गात्रसङ्गमात् देहसंसर्गात् आयुः अपहितुम् अपहर्तुं प्रभवन्ति यदि। हन्त विषादे। "हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयोः" इत्यमरः। प्रहरिष्यतः हन्तुमिच्छतः विधेः दैवस्य अन्यत् कुसुमातिरिक्तं किम् इव वस्तु। इवशब्दो वाक्यालङ्कारे कीदृशम् इत्यर्थः। साधनं प्रहरणम् न भविष्यति न भवेत् सर्वमपि साधनं भविष्यत्येव इत्यर्थः ॥ ४४ ॥

अथवा मृदु वस्तु हिंसितुं
मृदुनैवारभते प्रजान्तकः ।
हिमसेकविपत्तिरत्र मे
नलिनी पूर्वनिदर्शनं मता ॥ ४५ ॥
स्रगियं यदि जीवितापहा
हृदये किं निहिता न हन्ति माम् ।
विषमप्यमृतं क्वचिद्भवेत्
अमृतं वा विषमीश्वरेच्छया ॥ ४६ ॥
अथवा मम भाग्यविप्लवात्
अशनिः कल्पित एष वेधसा ।

अथवेति । अथवा पक्षान्तरे प्रजान्तकः कालः मृदु कोमलं तु मृदुना एव वस्तुना हिंसितुं हन्तुम् आरभते उपक्रमते । अर्थे हिमसेकेन तुषारनिष्यन्देन विपत्तिः मृत्युः यस्याः सा ॥ नलिनी मे पूर्वं प्रथमं निदर्शनम् उदाहरणं मता । द्वितीयं दर्शनं पुष्पमृत्युरिन्दुमतीति भावः ॥४५॥

स्रगिति । इयं स्रक् जीवितम् अपहन्तीति जीवितापहा दि हृदये वक्षसि । "हृदयं वक्षसि स्वान्ते" इत्यमरः । हिता सती मां किं न हन्ति । ईश्वरेच्छया क्वचित् प्रदेशे षम् अपि अमृतं भवेत्, क्वचित् अमृतं वा विषं भवेत् । मेवात्र कारणम् इत्यर्थः ॥ ४६ ॥

अथवेति । अथवा मम भाग्यस्य विप्लवात् विपर्य्ययात् एषः क् इत्यर्थः । विधेयप्राधान्यात् पुंलिङ्गनिर्देशः । वेधसा भाग्यविः वेधसोऽशनिः कल्पितः । "दम्भोलिरशनिर्द्वयोः" मरः । यत् यस्मात् अनेन अपि अयमनिः अशनिरभिन्न

यदनेन तरुर्न पातितः
क्षपिता तद्विटपाश्रिता लता ॥ ४७ ॥

कृतवत्यसि नावधीरणाम्
अपराद्धेऽपि यदा चिरं मयि।
कथमेकपदे निरागसं
जनमाभाष्यमिमं न मन्यसे ॥ ४८ ॥

ध्रुवमस्मि शठः शुचिस्मिते!
विदितः कैतववत्सलस्तव।
परलोकमसन्निवृत्तये
यदनापृच्छ्य गतासि मामितः ॥ ४९ ॥

इव तरुः तरुस्थानीयः स्वयम् एव न पातितः किन्तु तस्य तरोः विटपाश्रिता लता क्षपिता नाशिता ॥ ४७ ॥

कृतेति। मयि चिरं भूरिशः अपराद्धे अपि अपराधं कृतवत्यपि। राधेः कर्त्तरि क्तः। यदा यस्मात् हेतोः। यदेति हेत्वर्थः "स्वरादौ पठ्यते यदेति हेतौ" इति गणव्याख्यानात् अवधीरणाम् अवज्ञां न कृतवती असि नाकार्षीः। तत् कथम् एकपदे तत्क्षणे। "स्यात् तत्क्षणे एकपदम्" इति विश्वः। निरागसं नितरामनपराधम् इमं जनम्। इममिति स्वात्मनिर्देशः। माम् इत्यर्थः आभाष्यं सम्भाष्यं न मन्यसे न चिन्तयसि ॥ ४८ ॥

ध्रुवमिति। हे शुचिस्मिते! धवलहसिते! शठः गूढविप्रियकारी कैतवेन कापटेन वत्सलः कैतववत्सलः इति ध्रुवं सत्यं तव विदितः त्वया विज्ञातः अस्मि। "मतिबुद्धि—" इत्यादिना कर्तरि क्तः "क्तस्य च वर्तमाने" इति कर्तरि षष्ठी। कुतः

दयितां यदि तावदन्वगात्
विनिवृत्तं किमिदं तया विना ।
सहतां हतजीवितं मम
प्रबलामात्मकृतेन वेदनाम् ॥ ५० ॥

सुरतश्रमसम्भृतो मुखे
ध्रियते स्वेदलवोद्गमोऽपि ते ।
अथ चास्तमिता त्वमात्मना
धिगिमां देहभृतामसारताम् ॥ ५१ ॥

मनसापि न विप्रियं मया
कृतपूर्वं तव किं जहासि माम् ।

: यस्मात् माम् अनापृच्छ्य अनामन्त्र्य इत: अस्मात् लोकात् लोकम् असन्निवृत्तये अपुनरावृत्तये गता असि ॥ ४८ ॥

दयितामिति । इदं मम हतजीवितं कुत्सितं जीवितं वत् आदौ दयिताम् इन्दुमतीम् अन्वगात् अन्वगच्छत् यदि ग्मात् एव । यद्यत्र अवधारणे । पूर्वं मूर्च्छितत्वादिति व: । तर्हि तया दयितया विना किं किमर्थं विनिवृत्तं आगतम् । प्रत्यागमनं न युक्तम् इत्यर्थ: । अतएव आत्म- तेन स्वदुश्चेष्टितेन निवृत्तिरूपेण प्रबलाम् अधिकां वेदनां सं सहतां क्षमताम् । स्वयङ्कृतापराधेषु सहिष्णुतैव शरणम् ति भाव: ॥ ५० ॥

सुरतेति । सुरतश्रमेण सम्भृत: जनित: स्वेदलवोद्गम: पि ते तव मुखे ध्रियते वर्तते अथ च त्वम् आत्मना स्वरूपेण स्तं नाशम् इता प्राप्ता, अत: कारणात् देहभृताम् प्राणिनाम् माम् प्रत्यक्षाम् असारताम् अस्थिरतां धिक् ॥ ५१ ॥

ननु शब्दपतिः क्षितेरहं
त्वयि मे भावनिबन्धना रतिः ॥ ५२ ॥
कुसुमोत्खचितान् वलीभृत-
श्चलयन् भृङ्गरुचस्तवालकान् ।
करभोरु ! करोति मारुत-
स्त्वदुपावर्तनशङ्कि मे मनः ॥ ५३ ॥
तदपोहितुमर्हसि प्रिये !
प्रतिबोधेन विषादमाशु मे ।
ज्वलितेन गुहागतं तम-
स्तुहिनाद्रेरिव नक्तमोषधिः ॥ ५४ ॥

मनसेति । मया मनसा अपि तव विप्रियं न कृतपूर्वं पू-
न कृतम् इत्यर्थः । सुप्सुपेति समासः । किं केन निमित्तेन
मां जहासि त्यजसि । ननु अहं क्षितेः शब्दपतिः शब्दत एव
पतिः न तु अर्थत इत्यर्थः । भावनिबन्धना अभिप्रायनिबन्धना
स्वभावहेतुका मे रतिः प्रेम तु त्वयि एव अस्ति इति शेषः ॥ ५२ ॥

कुसुमेति । कुसुमैः उत्खचितान् उत्कर्षेण खचितान्
वलीभृतः भङ्गीयुक्तान् कुटिलान् इत्यर्थः । भृङ्गरुचः नीलान्
तव अलकान् चलयन् कम्पयन् मारुतः हे करभोरु ! करभ-
सदृशोरु ! "मणिबन्धादाकनिष्ठं करस्य करभो बहिः" इत्यमरः ।
मे मनः त्वदुपावर्तनशङ्कि तव पुनरागमने शङ्कावत् करोति ।
त्वदुज्जीवने शङ्कां कारयति इत्यर्थः ॥ ५३ ॥

तदिति । हे प्रिये ! तत् तस्मात् कारणात् मम मे
विषादं दुःखं, नक्तं रात्रौ ओषधिः तृणज्योतिराख्या लता ज्वलि-

इदमुच्छ्वसितालकं मुखं
तव विश्रान्तकथं दुनोति माम्।
निशि सुप्तमिवैकपङ्कजं
विरताभ्यन्तरषट्पदस्वनम् ॥ ५५ ॥

शशिनं पुनरेति शर्वरी
दयिता द्वन्द्वचरं पतत्त्रिणम्।
इति तौ विरहान्तरक्षमौ
कथमत्यन्तगता न मां दहेः ॥ ५६ ॥

नवपल्लवसंस्तरेऽपि ते
मृदु दूयेत यदङ्गमर्पितम्।

। प्रकाशेन तुहिनाद्रेः हिमाचलस्य गुहागतं तमः अन्धकार-
व, प्रतिबोधेन ज्ञानेन अपोहितुं निरसितुम् अर्हसि ॥ ५४ ॥

इदमिति। इदम् उच्छ्वसितालकं चलितचूर्णकुन्तलं
श्रान्तकथं निवृत्तसंलापं तव मुखं, निशि रात्रौ सुप्तं निमीलितं
रतः अभ्यन्तराणाम् अन्तवर्त्तिनां षट्पदानां स्वनः यत्र तत्
अभ्यन्तरम् इत्यर्थः। एकपङ्कजम् अद्वितीयं पद्मम् इव, मां
नोति परितापयति ॥ ५५ ॥

शशिनमिति। शर्वरी रात्रिः शशिनं चन्द्रं पुनः एति
प्नोति, द्वन्द्वीभूय चरतीति द्वन्द्वचरः तं पतत्त्रिणं चक्रवाकं
यिता चक्रवाकी पुनः एति, इति हेतोः तौ चन्द्रचक्रवाकौ
रहान्तरक्षमौ विरहावधिसहौ। "अन्तरमवकाशावधिपरि-
नान्तर्द्धिभेदतादर्थ्ये" इत्यमरः। अत्यन्तगता पुनरावृत्ति-
हता त्वं तु कथं न मां दहेः न सन्तापयेः। अपितु दहेरेव
र्थः ॥५६॥

तदिदं विषहिष्यते कथं
वद वामोरु! चिताधिरोहणम् ॥ ५७ ॥
इयमप्रतिबोधशायिनीं
रशना त्वां प्रथमा रहःसखी।
गतिविभ्रमसादनीरवा
न शुचा नानुमृतेव लक्ष्यते ॥ ५८ ॥
कलमन्यभृतासु भाषितं
कलहंसीषु मदालसं मतम्।

नवेति। नवपल्लवसंस्तरे नूतनप्रवालास्तरणे ऽपि अर्पितं स्थापितं मृदु ते तव यत् अङ्गं शरीरं दूयेत परितप्तं भवेत्। वामौ सुन्दरौ ऊरू यस्याः सा हे वामोरु! "वामं स्यात् सुन्दरे सव्ये" इति केशवः। "संहितशफलक्षण" इत्यादिना ऊङ्प्रत्ययः। तत् इदम् अङ्गं चितायाः काष्ठसञ्चयस्य अधिरोहणं कथं विषहिष्यते, वद ॥ ५७ ॥

इयमिति। इयं प्रथमा आद्या रहःसखी सुरतसमयेऽप्यनुयानात् इति भावः। गतिविभ्रमसादेन नीरवा विलासोपरमेण निःशब्दा रशना मेखला अप्रतिबोधमपुनरुद्बोधं यथा तथा शायिनीं मृताम् इत्यर्थः त्वाम् अनु त्वया सह। तृतीयार्थ इत्यनुशब्दस्य कर्मप्रवचनीयत्वेन कर्मप्रवचनीययुक्ते द्वितीया। शुचा शोकेन मृता इव न लक्ष्यते इति न, लक्ष्यते एव इत्यर्थः। सम्भाव्यनिषेधनिवर्त्तनाय द्वौ प्रतिषेधौ ॥ ५८ ॥

कलमिति, त्रिदिवेति। युग्मम्। अन्यभृतासु कोकिलासु कलं मधुरं भाषितं भाषणम्, कलहंसीषु विशिष्टहंसीषु मदालसं मन्थरं मतं गमनम्। पृषतीषु हरिणीषु विलोलम् ईक्षितं

पृषतीषु विलोलमीक्षितं
पवनाधूतलतासु विभ्रमाः ॥ ५९ ॥
त्रिदिवोत्सुकयाप्यवेक्ष्य मां
निहिताः सत्यममी गुणास्त्वया ।
विरहे तव मे गुरुव्यथं
हृदयं न त्ववलम्बितुं क्षमाः ॥ ६० ॥
मिथुनं परिकल्पितं त्वया
सहकारः फलिनी च नन्विमौ ।
अविधाय 'विवाहसत्क्रियाम्
अनयोर्गम्यत इत्यसाम्प्रतम् ॥ ६१ ॥

चञ्चला दृष्टिः, पवनेन वायुना आधूतलतासु ईषत्कम्पितलतासु विभ्रमाः विलासाः ॥ ५९ ॥

इति अमी पूर्वोक्ताः कलभाषणादयः गुणाः, एषु कोकिलादिस्थानेषु इति शेषः। त्रिदिवोत्सुकया अपि इह जीवन्त्येव स्वर्गं प्रति प्रस्थितया अपि त्वया माम् अवेक्ष्य विरहासह्यं विचार्य्य सत्यं निहिताः। मत्प्राणधारणोपायतया स्थापिता इत्यर्थः। तव विरहे गुरुव्यथम् अतिदुःखं मे हृदयं मनः अवलम्बितुं स्थापयितुं न क्षमाः न शक्ताः। ते तु तत्सङ्गमे एव सुखकारिणः। नान्यथा प्रत्युत प्राणानपहरन्तीति भावः ॥६०॥

मिथुनमिति। ननु हे प्रिये! सहकारः चूतविशेषः फलिनी प्रियङ्गुलता च इमौ त्वया मिथुनं परिकल्पितं मिथुनत्वेन मन्यमानि। अनयोः फलिनीसहकारयोः विवाहसत्क्रियां विवाहमङ्गलम् अविधाय अकृत्वा गम्यते इति असाम्प्रतम् अयुक्तम्। मादृशेनानां न किञ्चित् सुखमस्तीति भावः ॥६१॥

कुसुमं कृतदोहदस्त्वया
यदशोकोऽयमुदीरयिष्यति।
अलकाभरणं कथन्नु तत्
तव नेष्यामि निवापमाल्यताम्॥ ६२॥
स्मरतेव सशब्दनूपुरं
चरणानुग्रहमन्यदुर्लभम्।
अमुना कुसुमाश्रुवर्षिणा
त्वमशोकेन सुगात्रि! शोच्यसे॥ ६३॥
तव निःश्वसितानुकारिभि-
र्बकुलैरर्द्धचितां समं मया।

कुसुममिति। वृक्षादिपोषकं दोहदम्। त्वया कृतं दोहदं पादताड़नरूपं यस्य सः अयम् अशोकः यत् कुसुमम् उदीरयिष्यति प्रसविष्यते। तव अलकानाम् आभरणम् आभरणभूतं तत् कुसुमं कथं नु केन प्रकारेण निवापमाल्यतां दाहाञ्जलेरर्ध्यतां नेष्यामि। "निवापः पितृदानं स्यात्" इत्यमरः॥ ६२॥

स्मरतेति। अन्यदुर्लभं किन्तु स्मर्त्तव्यमेव इत्यर्थः। सशब्दं ध्वनियुक्तं नूपुरं मञ्जीरं यस्य तं चरणेन अनुग्रहं पादेन ताड़नरूपं स्मरता इव चिन्तयता इव कुसुमान्येव अश्रूणि तद्वर्षिणा अमुना अशोकेन हे सुगात्रि! "अङ्गगात्रकण्ठेभ्यश्च" इति वक्तव्यात् ङीप्। त्वं शोच्यसे॥ ६३॥

तवेति। तव निःश्वसितानुकारिभिः बकुलैः बकुलकुसुमैः मया समं सार्द्धम् अर्द्धचिताम् अर्द्धं यथा तथा रचितां विलासमेखलाम् असमाप्य अपूरयित्वा। किन्नरस्य देवयोनिविशेषस्य

असमाप्य विलासमेखलां
किमिदं किन्नरकण्ठि ! सुप्यते ॥ ६४ ॥
समदुःखसुखः सखीजनः
प्रतिपच्चन्द्रनिभोऽयमात्मजः ।
अहमेकरसस्तथापि ते
व्यवसायः प्रतिपत्तिनिष्ठुरः ॥ ६५ ॥
धृतिरस्तमिता रतिश्च्युता
विरतं गेयमृतुर्निरुत्सवः ।

ण्ठ इव कण्ठः यस्याः तत्सम्बुद्धिः हे किन्नरकण्ठि ! "अङ्ग-गात्रकण्ठेभ्यश्च" इति ङीप् । किम् इदं सुप्यते निद्रा क्रियते । "वचिस्वपि" इत्यादिना सम्प्रसारणम् । अनुचितमिदं स्वपनम् इत्यर्थः ॥ ६४ ॥

समेति । सखीजनः समदुःखसुखः । त्वद्दुःखेन दुःखी त्वत्सुखेन सुखी इत्यर्थः । अयम् आत्मजः बालः प्रतिपच्चन्द्र-निभः । दर्शनीयः वर्द्धिष्णुश्च इत्यर्थः । प्रतिपच्छब्देन द्वितीया लक्ष्यते प्रतिपदि चन्द्रस्यादर्शनात् । अहम् एकरसः अभिन्न-रागः । "शृङ्गारादौ विषे वीर्य्ये गुणे रागे द्रवे रसः" इत्यमरः । तथापि जीवितसामग्रीसत्त्वेऽपीत्यर्थः ते तव व्यवसायः अस्मत्-परित्यागरूपो व्यापारः प्रतिपत्त्या निश्चयेन निष्ठुरः क्रूरः । "प्रतिपत्तिः पदप्राप्तौ प्रवृत्तौ गौरवेऽपि च । प्रागल्भ्ये च प्रबोधे च" इति विश्वः । स्मर्त्तुं न शक्यः किमुताधिकर्त्तुमिति भावः ॥ ६५ ॥

धृतिरिति । अद्य मे धृतिः धैर्य्यं प्रतीतिर्वा अस्तं नाशम् इता, रतिः क्रीड़ा च्युता गता, गेयं गानं विरतम्, ऋतुः वस-

गतमाभरणप्रयोजनं
परिशून्यं शयनीयमद्य मे ॥ ६६ ॥
गृहिणी सचिवः सखी मिथः
प्रियशिष्या ललिते कलाविधौ।
करुणाविमुखेन मृत्युना
हरता त्वां वद किं न मे हृतम्? ॥ ६७ ॥
मदिराक्षि! मदाननार्पितं
मधु पीत्वा रसवत्कथं नु मे।

त्यादिः निरुत्सवः। आभरणानां प्रयोजनं गतम् अपगतं शेते अस्मिन्निति शयनीयम् तल्पम्। कृत्यल्युटो बहुलम् इत्यधिकरणार्थे अनीयर्प्रत्ययः। परिशून्यम्। त्वां विना सर्वमपि निष्फलम् इति भावः॥ ६६ ॥

गृहिणीति। त्वम् एव गृहिणी दाराः। अनेन सर्वं कुटुम्बं तदाश्रयमिति भावः। सचिवः बुद्धिसहायो मन्त्री सर्वो हितोपदेशः त्वदायत्त इत्यनेनोच्यते। मिथः रहसि सखी नर्मसचिवः। सर्वोपभोगः त्वदाश्रय इति अमुना प्रकटितम्। ललिते मनोहरे कलाविधौ वादित्रादिचतुःषष्टिकलाप्रयोगे प्रियशिष्या। प्रियत्वं प्राज्ञत्वात् इति अभिसन्धिः सर्वानन्दोऽनेन त्वन्निबन्धन इत्युद्घाटितम्। अतः त्वां समष्टिरूपां हरता अतएव करुणाविमुखेन कृपाशून्येन मृत्युना मे मत्सम्बन्धि किं वस्तु न हृतं? वद। सर्वमपि हृतम् इत्यर्थः॥ ६७ ॥

मदिरेति। माद्यति अनया इति मदिरा लोकप्रसिद्धा तथापि "नार्यो मदिरलोचनाः" इत्यादिप्रयोगदर्शनात् माद्यति आभ्याम् इति मदिरे अक्षिणी यस्याः तत्सम्बुद्धिः हे मदिराक्षि!

अनुपास्यसि वाष्पदूषितं
परलोकोपनतं जलाञ्जलिम् ॥ ६८ ॥
विभवेऽपि सति त्वया विना
सुखमेतावदजस्य गण्यताम् ।
अहृतस्य विलोभनान्तरैः
मम सर्वे विषयास्त्वदाश्रयाः ॥ ६९ ॥
विलपन्निति कोशलाधिपः
करुणार्थग्रथितं प्रियां प्रति ।
अकरोत् पृथिवीरुहानपि
स्रुतशाखारसवाष्पदूषितान् ॥ ७० ॥

ाननेन अर्पितं रसवत् स्वादुतरं मधु मद्यं पीत्वा वाष्पदूषि-
[ अश्रुतप्तं परलोकोपनतं परलोकप्राप्तं मे जलाञ्जलिं तिलोद-
ञ्जलिं कथं नु अनु अनन्तरं पास्यसि। तदनन्तरमिदमनर्हम्
र्थः। यथाह भट्टमल्लः, "अनुपानं हिमजलं यवगोधूम-
र्मिते। दध्नि मद्ये विषे द्राक्षे पिष्टे मिष्टमयेऽपि च ॥"
ते। तच्च इहैव युज्यते। इदं तूष्णं लोकान्तरोपयोगि
इत्यायुर्वेदविरोधात् कथमनुपास्यसि इति भावः ॥ ६८ ॥

विभव इति। विभवे ऐश्वर्य्ये सति अपि त्वया विना
अस्य एतावत् एव सुखं गण्यताम् यावत् त्वया सह भुक्तं
ः अन्यत्र किञ्चिन्न भविष्यति इत्यर्थः। कुतः? विलोभना-
रैः विषयान्तरैः अहृतस्य अनाकृष्टस्य मम सर्वे विषयाः
ादयः त्वदाश्रयाः त्वदधीनाः त्वां विना मे न किञ्चिद्रोचते
र्थः ॥ ६९ ॥

विलपन्निति। कोशलाधिपः अजः इति, करुणः प्रोक्त-

अथ तस्य कथञ्चिदङ्कतः
स्वजनस्तामपनीय सुन्दरीम्।
विससर्ज तदन्त्यमण्डना-
मनलायागुरुचन्दनैधसे॥ ७१॥

प्रमदामनु संस्थितः शुचा
नृपतिः सन्निति वाच्यदर्शनात्।
न चकार शरीरमग्निसात्
सह देव्या न तु जीविताशया॥ ७२॥

रसः सः एव अर्थः तेन चषितं सम्यक् यथा तथा, स्त्रियां प्रति इन्दुमतीमुद्दिश्य विलपन् पृथिवीरुहान् वृक्षान् अपि सुम... शाखारसाः मकरन्दा एव वाष्पाः तैः दूषितान् अकरोत्, अचेतनानप्यरोदयदित्यर्थः॥ ७०॥

अथेति। अथ स्वजनः बन्धुवर्गः तस्य अजस्य अङ्कतः उत्सङ्गात् कथञ्चित् अपनीय। तत् दिव्यकुसुमम् एव अन्त्यमण्डनम् अलङ्कारः यस्याः ताम्। तां सुन्दरीम् अगुरुचन्द... नानि एधांसि इन्धनानि यस्य तस्मै अनलाय अग्नये विसस... विसृष्टवान्। "क्रियाग्रहणमपि कर्त्तव्यम्" इति क्रियामा... प्रयोगे सम्प्रदानत्वाच्चतुर्थी॥ ७१॥

प्रमदामिति। नृपतिः राजा सन् अपि विद्वान् अपि शु... शोकेन प्रमदाम् अनु प्रमदया सह संस्थितः मृत इति वाच्य... दर्शनात् निन्दादर्शनात् देव्या इन्दुमत्या सह शरीरम् अग्निसा... अग्न्यधीनं न चकार। "तदधीनवचने" इति सातिप्रत्ययः। जीविताशया प्राणेच्छया तु न इति॥ ७२॥

अथ तेन दशाहतः परे
गुणशेषामपदिश्य भामिनीम्।
विदुषा विधयो महर्द्धयः
पुर एवोपवने समापिताः॥ ७३ ॥

स विवेश पुरीं तया विना
क्षणदापायशशाङ्कदर्शनः।
परिवाहमिवावलोकयन्
स्वशुचः पौरवधूमुखाश्रुषु ॥ ७४ ॥

अथेति। अथ विदुषा शास्त्रज्ञेन तेन अजेन। गुणाः एव शेषाः रूपादयो यस्याः तां गुणशेषां भामिनीम् इन्दुमतीम् अपदिश्य उद्दिश्य दशानाम् अह्नां समाहारः दशाहः। "तद्धितार्थ—"इत्यादिना समासः, समाहारस्यैकत्वादेकवचनम्, "राजाहःसखिभ्यष्टच्" इति टच्। "रात्राह्नाहाः पुंसि" इति पुंवत्। ततस्तसिल्। तस्मात् दशाहतः परे ऊर्द्धं कर्त्तव्याः महासमृद्धयः विधयः क्रियाः पुरः पुर्य्याः उपवने उद्याने एव समापिताः सम्पूर्णमनुष्ठिताः। दशाहतः इत्यत्र "विप्रः शुध्येद् दशाहेन द्वादशाहेन भूमिपः" इति मनुवचनविरोधो नाशङ्कनीयः। तस्य निर्गुणक्षत्रियविषयत्वात्। गुणवत्क्षत्रियस्य तु दशाहेन शुद्धिमाह पराशरः—"क्षत्रियस्तु दशाहेन स्वधर्मनिरतः शुचिः" इति। सूच्यतेऽस्यापि गुणवत्त्वं विदुषेत्यनेन॥ ७३ ॥

स इति। तया इन्दुमत्या विना। क्षणदायाः रात्रेः अपाये अपगमे यः शशाङ्कः चन्द्रः स इव दृश्यत इति क्षणदापायशशाङ्कदर्शनः। प्रातःकालिकचन्द्र इव दृश्यमानः इत्यर्थः दृश्यते इति कर्मार्थे ल्युट्। सः अजः पौरवधूमुखाश्रुषु स्वशुचः स्वशो-

अथ तं सवनाय दीक्षितः
प्रणिधानाद्गुरुराश्रमस्थितः ।
अभिषङ्गजडं विजज्ञिवा-
निति शिष्येण किलान्वबोधयत् ॥ ७५ ॥

असमाप्तविधिर्यतो मुनि-
स्तव विद्वानपि तापकारणम् ।
न भवन्तमुपस्थितः स्वयं
प्रकृतौ स्थापयितुं पथश्च्युतम् ॥ ७६ ॥

तस्य परिवाहं जलोच्छ्वासम् इव अवलोकयन् । "जलोच्छ्वासाः परीवाहाः" इत्यमरः । स्वदुःखपूरातिशयम् इव पश्यन् पुरीं विवेश । वधूग्रहणात् तस्यामिन्दुमत्यां सख्याभिमानात् अजसमानदुःखसूचकपरीवाहोक्तिर्निर्वहति ॥ ७४ ॥

अथेति । अथ सवनाय यागाय दीक्षितः गुरुः वसिष्ठः आश्रमे स्वकीयाश्रमे स्थितः सन् तम् अजम् अभिषङ्गजडं दुःखमोहितं प्रणिधानात् चित्तैकाग्र्यात् विजज्ञिवान् ज्ञातवान् । "क्वसुश्च" इति क्वसुप्रत्ययः । इति वक्ष्यमाणप्रकारेण शिष्येण अन्वबोधयत् किल । बुधेर्ण्यन्तात्सिचि लङ् ॥ ७५ ॥

वसिष्ठशिष्य आह, असमाप्तेति । यतः हेतोः मुनिः असमाप्तविधिः असमाप्तक्रतुः ततः तव तापकारणं दुःखहेतुं कलत्रनाशरूपं विद्वान् जानन् अपि । "विदेः शतुर्वसुः" इति वस्वादेशः । "न लोक" इत्यादिना षष्ठीप्रतिषेधः । पथः च्युतं स्वभावात् भ्रष्टं भवन्तं प्रकृतौ स्वभावे स्थापयितुम् समाश्वासयितुमित्यर्थः । स्वयं न उपस्थितः न आगतः ॥ ७६ ॥

मयि तस्य सुवृत्त ! वर्त्तते
लघुसन्देशपदा सरस्वती ।
शृणु विश्रुतसत्त्वसार ! तां
हृदि चैनामुपधातुमर्हसि ॥ ७७ ॥
पुरुषस्य पदेष्वजन्मनः
समतीतञ्च भवच्च भावि च ।
स हि निष्प्रतिघेन चक्षुषा
त्रितयं ज्ञानमयेन पश्यति ॥ ७८ ॥
चरतः किल दुश्चरं तप-
स्तृणबिन्दोः परिशङ्कितः पुरा ।

मयीति । हे सुवृत्त ! सदाचार ! सन्दिश्यते इति सन्देशः सन्देष्टव्यार्थः । तस्य पदानि वाचकानि लघूनि संक्षिप्तानि सन्देशपदानि यस्यां सा लघुसन्देशपदा तस्य मुनेः सरस्वती वाक् मयि वर्त्तते । हे विश्रुतसत्त्वसार ! प्रख्यातधैर्यातिशय ! तां सरस्वतीं शृणु, एनां वाचं हृदि उपधातुं धर्त्तुं च अर्हसि ॥ ७७ ॥

वक्ष्यमाणार्थानुगुणं मुनेः सर्वज्ञत्वं तावदाह, पुरुषस्येति । अजन्मनः पुरुषस्य पुराणपुरुषस्य भगवतः त्रिविक्रमस्य पदेषु विक्रमेषु त्रिभुवनेष्वपि इत्यर्थः समतीतं भूतञ्च भवत् वर्त्तमानञ्च भावि भविष्यच्च इति त्रितयं सः मुनिः निष्प्रतिघेन अप्रतिबन्धेन ज्ञानमयेन चक्षुषा ज्ञानदृष्ट्या पश्यति हि, अतस्तदुक्तिषु न संशयितव्यम् इत्यर्थः ॥ ७८ ॥

चरत इति । पुरा किल दुश्चरं तीव्रं तपः चरतः तृण-

प्रजिघाय समाधिभेदिनीं
हरिरस्मै हरिणीं सुराङ्गनाम् ॥ ७९ ॥
स तप:प्रतिबन्धमन्युना
प्रमुखाविष्कृतचारुविभ्रमाम् ।
अशपद्भव मानुषीति तां
शमवेलाप्रलयोर्मिणा भुवि ॥ ८० ॥
भगवन् ! परवानयं जन:
प्रतिकूलाचरितं क्षमस्व मे ।
इति चोपनतां क्षितिस्पृशं
कृतवानासुरपुष्पदर्शनात् ॥ ८१ ॥

विन्दो: तृणबिन्दुनामकात् कस्माच्चित् ऋषे: परिशङ्कित. भीत: । कर्त्तरि क्त:, "भीत्रार्थानां भयहेतु:" इत्यपादानात् पञ्चमी । हरि: इन्द्र: समाधिभेदिनीं तपोविघातिनीं हरिणीं नाम सुराङ्गनाम् अस्मै तृणबिन्दवे प्रजिघाय प्रेरितवान् ॥७९॥

स इति । स: मुनि: शम: शान्तिरेव वेला मर्य्यादा यस्य प्रलयोर्मिणा प्रलयकालतरङ्गेण शमविघातकेन इत्यर्थ: । "अब्ध्यम्बुविकृतौ वेला कालमर्य्यादयोरपि" इत्यमर: । तपस: प्रतिबन्धेन विघ्नेन य: मन्यु: क्रोध: तेन हेतुना प्रमुखे अग्रे आविष्कृतचारुविभ्रमां प्रकाशितमनोहरविलासां तां हरिणीं भुवि भूलोके मानुषी मनुष्यस्त्री भव इति अशपत् शशाप ॥८०॥

भगवन्निति । हे भगवन् ! महर्षे ! अयं जन: परोऽस्या-स्तीति स्वामित्वेन परवान् पराधीन: । अयमिति आत्म-निर्देश:, अहं पराधीना इत्यर्थ: । मे मम प्रतिकूलाचरितम्

अपशोकमनाः कुटुम्बिनी-
मनुगृह्णीष्व निवापदत्तिभिः ।
स्वजनाश्रु किलातिसन्ततं
दहति प्रेतमिति प्रचक्षते ॥ ८६ ॥

मरणं प्रकृतिः शरीरिणां
विकृतिर्जीवितमुच्यते बुधैः ।
क्षणमप्यवतिष्ठते श्वसन्
यदि जन्तुर्ननु लाभवानसौ ॥ ८७ ॥

अवगच्छति मूढचेतनः
प्रियनाशं हृदि शल्यमर्पितम् ।

अपेति । किञ्च अपशोकमनाः निर्दुःखचित्तः सन् कुटुम्बिनीं पत्नीं निवापदत्तिभिः पिण्डोदकादिदानैः अनुगृह्णीष्व कृतार्थय इत्यर्थः । अन्यथा दोषमाह—अतिसन्ततम् अविच्छिन्नं स्वजनानां बन्धूनाम् । "बन्धुस्वस्वजनाः समाः" इत्यमरः । अश्रु कर्तृ प्रेतं मृतं दहतीति प्रचक्षते मन्वादयः किल । अत्र याज्ञवल्क्यः—"श्लेष्माश्रु बन्धुभिर्मुक्तं प्रेतो भुङ्क्ते यतोऽवशः । अतो न रोदितव्यं हि क्रियाः कार्य्याः स्वशक्तितः" इति ॥ ८६ ॥

मरणमिति । शरीरिणां मरणं प्रकृतिः स्वभावः ध्रुवम् इत्यर्थः । जीवितं विकृतिः यादृच्छिकं बुधैः उच्यते । एवं स्थिते जन्तुः प्राणी क्षणम् अपि । अत्यन्तसंयोगे द्वितीया । श्वसन् जीवन् अवतिष्ठते यदि असौ क्षणजीवी लाभवान् ननु । जीवने यथालाभं सन्तोष्टव्यम् अलभ्यलाभात् । मरणे तु न शोचितव्यम् । तस्य स्वाभाव्यात् इति भावः ॥ ८७ ॥

स्थिरधीस्तु तदेव मन्यते
कुशलद्वारतया समुद्धृतम् ॥ ८८ ॥
स्वशरीरशरीरिणावपि
श्रुतसंयोगविपर्य्ययौ यदा ।
विरहः किमिवानुतापयेत्
वद बाह्यैर्विषयैर्विपश्चितम् ॥ ८९ ॥
न पृथग्जनवच्छुचो वशं
वशिनामुत्तम ! गन्तुमर्हसि ।
द्रुमसानुमतां किमन्तरं
यदि वायौ द्वितयेऽपि ते चलाः ॥ ९० ॥

भवेति । मूढ़चेतनः भ्रान्तबुद्धिः प्रियनाशम् इष्टनाशं हृदि अर्पितं निखातं शल्यं शङ्कुम् अवगच्छति मन्यते, स्थिरधीः विद्वान् तु तत् एव शल्यं समुद्धृतम् उत्खातं मन्यते । प्रियनाशे सति इति शेषः । कुतः ? कुशलद्वारतया प्रियनाशस्य मोक्षोपायतया इत्यर्थः । विषयलाभाविनाशयोर्यथाक्रमं हिता-हितसाधनत्वाभिमानः पामराणां विपरीतं तु विपश्चिताम् इति भावः ॥ ८८ ॥

स्वेति । स्वस्य शरीरशरीरिणौ देहात्मनौ अपि यदा यतः श्रुतौ श्रुत्यवगतौ संयोगविपर्य्ययौ संयोगवियोगौ ययोः तौ तथोक्तौ । तदा बाह्यैः विषयैः पुत्रमित्रकलत्रादिभिः विरहः विपश्चितं विद्वांसं किम् इव अनुतापयेत्, त्वं वद, न किञ्चित् इत्यर्थः । अथवा स्वशब्दस्य शरीरेणैव सम्बन्धः ॥ ८९ ॥

नेति । हे वशिनाम् उत्तम ! जितेन्द्रियवर्य्य ! पृथग-

क्रथकैशिकवंशसम्भवा
तव भूत्वा महिषी चिराय सा ।
उपलब्धवती दिवश्च्युतं
विवशा शापनिवृत्तिकारणम् ॥ ८२ ॥

तदलं तदपायचिन्तया
विपदुत्पत्तिमतामुपस्थिता ।
वसुधेयमवेक्ष्यतां त्वया
वसुमत्या हि नृपाः कलत्रिणः ॥ ८३ ॥

पराधं क्षमस्व इति अनेन प्रकारेण उपनतां शरणागतां
। हरिणीम् आसुरपुष्पदर्शनात् सुरपुष्पदर्शनपर्यन्तं क्षितिं
शतीति क्षितिस्पृक् तां क्षितिस्पृशं मानुषीं कृतवान्
करोत् । दिव्यपुष्पदर्शनम् शापावधिरित्यनुगृहीतवान्
र्थः ॥ ८१ ॥

क्रथेति । क्रथकैशिकानां राज्ञां वंशे सम्भवः यस्याः सा
रिणी तव महिषी अभिषिक्ता स्त्री । "कृताभिषेका
हिषी" इत्यमरः । भूत्वा चिराय दिवः स्वर्गात् च्युतं पतितं
पनिवृत्तिकारणं सुरपुष्परूपम् उपलब्धवती विवशा अभूत्
ति शेषः मृता इत्यर्थः ॥ ८२ ॥

तदिति । तत् तस्मात् तस्याः अपायचिन्तया अलं, तस्या
णं न चिन्त्यम् इत्यर्थः । निषेधक्रियां प्रति करणत्वात्
न्तयेति तृतीया । कुतो न चिन्त्यमत आह—उत्पत्तिमतां
मवतां विपत् विपत्तिरुपस्थिता सिद्धा । जातस्य हि
वो मृत्युः इत्यर्थः तथापि कलत्ररहितस्य किं जीवितेन
आह—त्वया इयं वसुधा भूमिः अवेक्ष्यतां पाल्यतां, हि

उदये मदवाच्यमुज्झता
श्रुतमाविष्कृतमात्मवत् त्वया ।
मनसस्तदुपस्थिते ज्वरे
पुनरक्लीवतया प्रकाश्यताम् ॥ ८४ ॥
रुदता कुत एव सा पुन-
र्भवता नानुमृतापि लभ्यते ।
परलोकजुषां स्वकर्मभि-
र्गतयो भिन्नपथा हि देहिनाम् ॥ ८५ ॥

यस्मात् नृपाः वसुमत्या पृथिव्या कलत्रिणः कलत्रवन्तः, ध
न शोचितव्यम् इत्यर्थः ॥ ८३ ॥

उदय इति । उदये अभ्युदये सति मदेन यत् वा
निन्दादुःखं तदुज्झता परिहरता सत्यपि मदहेतौ अमाय
त्वया यत् आत्मवदध्यात्मप्रचुरं श्रुतं शास्त्रं तज्जनितं ज्ञानमि
यावत् । आविष्कृतं प्रकाशितं तत् श्रुतं मनसः ज्वरे सन्ता
उपस्थिते प्राप्ते अक्लीवतया धैर्य्येण लिङ्गेन पुनः प्रकाश
विदुषा सर्वास्ववस्थास्वपि धीरेण भवितव्यमित्यर्थः ॥ ८४ ॥

मृतोऽपि न रोदितव्यमित्याह, रुदतेति । रुदता भव
सा कुतः एव लभ्यते न लभ्यते एव, अनुम्रियते इति अनुमृ
क्विप् । तेन अनुमृता अनुमृतवता अपि भवता पुनः
लभ्यते । कथं न लभ्यते इत्याह, परलोकजुषां लोकान्तर
भाजां देहिनां गम्यन्ते इति गतयः गम्यस्थानानि स्वकर्मभि
पूर्वाचरितपुण्यपापैः भिन्नपथाः पृथक्कृतमार्गाः हि, परला
स्वस्वकर्मानुरूपफलभोगाय भिन्नदेहगमनात् मृतेनापि लभ
इत्यर्थः ॥ ८५ ॥

स तथेति विनेतुरुदारमतेः
प्रतिगृह्य वचो विससर्ज मुनिम् ।
तदलब्धपदं हृदि शोकघने
प्रतियातमिवान्तिकमस्य गुरोः ॥ ९१ ॥

तेनाष्टौ परिगमिताः समाः कथञ्चित्
बालत्वादवितथसूनृतेन सूनोः ।
सादृश्यप्रतिकृतिदर्शनैः प्रियायाः
स्वप्नेषु क्षणिकसमागमोत्सवैश्च ॥ ९२ ॥

त् पामरजनवत् शुचः शोकस्य वशं गन्तुं न अर्हसि ।
हि, द्रुमसानुमतां तरुशिखरिणां किम् अन्तरं कः विशेषः ।
सति द्वितये अपि द्विप्रकारा अपि । "प्रथमचरम"
दिना जसि विभाषया सर्वनामसंज्ञा । ते द्रुमसानुमन्तः
: चञ्चलाः यदि, सानुमतामपि चलने द्रुमवत् तेषामपि
संज्ञा न स्यात् इत्यर्थः ॥ ९० ॥

स इति । सः अजः उदारमतेः विनेतुः गुरोः वशिष्ठस्य
तच्छिष्यमुखेरितं तथेति प्रतिगृह्य अङ्गीकृत्य मुनिं
शिष्यं विससर्ज प्रेषयामास, किन्तु तद्वचः शोकघने
सान्द्रे अस्य अजस्य हृदि अलब्धपदम् अप्राप्तावकाशं
रोः वशिष्ठस्य अन्तिकं प्रतियातम् इव, प्रतिनिवृत्तं
इत्युत्प्रेक्षा । तोटकवृत्तमेतत् । "इह तोटकमम्बु-
प्रथितम्" इति तल्लक्षणम् ॥ ९१ ॥

तेनेति । अवितथं यथार्थं सूनृतं प्रियवचनं यस्य तेन अजेन
पुत्रस्य बालत्वात् राज्याक्षमत्वात् इत्यर्थः । प्रियायाः
त्वाः सादृश्यं वस्त्वन्तरगतम् आकारसाम्यं प्रतिकृतिः

उदये मदवाच्यमुज्झता
श्रुतमाविष्कृतमात्मवत् त्वया।
मनसस्तदुपस्थिते ज्वरे
पुनरक्लीवतया प्रकाश्यताम्॥ ८४॥

रुदता कुत एव सा पुन-
र्भवता नानुमृतापि लभ्यते।
परलोकजुषां स्वकर्मभि-
र्गतयो भिन्नपथा हि देहिनाम्॥ ८५॥

यस्मात् नृपाः वसुमत्या पृथिव्या कलत्रिणः कलत्रवन्तः, अतः
न शोचितव्यम् इत्यर्थः॥ ८३॥

उदय इति। उदये अभ्युदये सति मदेन यत् वा
निन्दादुःखं तदुज्झता परिहरता सत्यपि मदहेतौ प्रमाद
त्वया यत् आत्मवदध्यात्मप्रचुरं श्रुतं शास्त्रं तज्जनितं ज्ञानमि
यावत्। आविष्कृतं प्रकाशितं तत् श्रुतं मनसः ज्वरे सन्ता
उपस्थिते प्राप्ते अक्लीवतया धैर्य्येण लिङ्गेन पुनः प्रकाश
विदुषा सर्वास्ववस्थास्वपि धीरेण भवितव्यमित्यर्थः॥ ८४॥

इतोऽपि न रोदितव्यमित्याह, रुदतेति। रुदता भव
सा कुतः एव लभ्यते न लभ्यते एव, अनुम्रियते इति अनुम
क्विप्। तेन अनुमृता अनुमृतवता अपि भवता पुनः
लभ्यते। कथं न लभ्यते इत्याह, परलोकजुषां लोका
भाजां देहिनां मम्यन्ते इति गतयः गम्यस्थानानि स्वकर्म
पूर्वाचरितपुण्यपापैः भिन्नपथाः पृथक्कृतमार्गाः हि, पर
स्वस्वधर्मानुरूपफलभोगाय भिन्नदेहगमनात् मृतेनापि
इत्यर्थः॥ ८५॥

स तथेति विनेतुरुदारमतेः
प्रतिगृह्य वचो विससर्ज मुनिम् ।
तदलब्धपदं हृदि शोकघने
प्रतियातमिवान्तिकमस्य गुरोः ॥ ९१ ॥

तेनाष्टौ परिगमिताः समाः कथञ्चित्
बालत्वादवितथसूनृतेन सूनोः ।
सादृश्यप्रतिकृतिदर्शनैः प्रियायाः
स्वप्नेषु क्षणिकसमागमोत्सवैश्च ॥ ९२ ॥

त् पामरजनवत् शुचः शोकस्य वशं गन्तुं न अर्हसि ।
हि, द्रुमसानुमतां तरुशिखरिणां किम् अन्तरं कः विशेषः ।
सति द्वितये अपि द्विप्रकारा अपि । "प्रथमचरम"
दिना जसि विभाषया सर्वनामसंज्ञा । ते द्रुमसानुमन्तः
: चञ्चलाः यदि, सानुमतामपि चलने द्रुमवत् तेषामपि
संज्ञा न स्यात् इत्यर्थः ॥ ९० ॥

स इति । सः अजः उदारमतेः विनेतुः गुरोः वशिष्ठस्य
तच्छिष्यमुखेरितं तथेति प्रतिगृह्य अङ्गीकृत्य मुनिं
शिष्यं विससर्ज प्रेषयामास, किन्तु तद्वचः शोकघने
सान्द्रे अस्य अजस्य हृदि अलब्धपदम् अप्राप्तावकाशं
गुरोः वशिष्ठस्य अन्तिकं प्रतियातम् इव, प्रतिनिवृत्तं
इत्युत्प्रेक्षा । तोटकवृत्तमेतत् । "इह तोटकमम्बु-
: प्रथितम्" इति तल्लक्षणम् ॥ ९१ ॥

तेनेति । अवितथं यथार्थं सूनृतं प्रियवचनं यस्य तेन अजेन
: पुत्रस्य बालत्वात् राज्याक्षमत्वात् इत्यर्थः । प्रियायाः
त्याः सादृश्यं वस्त्वन्तरगतम् आकारसाम्यं प्रतिकृतिः

तस्य प्रसह्य हृदयं किल शोकशङ्कुः
प्लक्षप्ररोह इव सौधतलं बिभेद ।
प्राणान्तहेतुमपि तं भिषजामसाध्यं
लाभं प्रियानुगमने त्वरया स मेने ॥ ९२
सम्यग्विनीतमथ वर्महरं कुमार-
मादिश्य रक्षणविधौ विधिवत् प्रजानाम्

चित्वं तयोः दर्शनैः स्वप्नेषु चणिकाः चणसङ्गराः ये स
समोत्सवाः तैश्च कथञ्चित् कष्टेण षष्टी समाः वत्स
"संवत्सरो वत्सरोऽब्दो हायनोऽस्त्री शरत्समाः" इत्यमरः ।
नमिताः चलिवाहिताः । उक्तञ्च, "वियोगावस्थासु प्रि
सादृश्यानुभवनं ततश्चित्रं कर्म स्वपनसमये दर्शनमपि ।
सृष्टानामुपगतवतां स्पर्शनमपि प्रतीकारः कामव्यथितम
कोऽपि कथितः ॥" इति । प्रकृते सादृश्यादिचित्रयोगि
तदङ्गस्पृष्टपदार्थस्पृष्टेरप्यु पलक्षणम् । प्रहर्षिणीवृत्तमेतत्
तस्येति । शोकः एव शङ्कुः कीलः । "शङ्कुः कीले शि
च" इति विश्वः । तस्य अजस्य हृदयं, प्लक्षप्ररोहः सौध
इव, प्रसह्य बलात् किल बिभेद । सः अजः प्राणा
मरणकारणम् अपि भिषजाम् असाध्यम् अप्रतिसमाधे
शोकशङ्कुं रोगपर्य्यवसितं प्रियायाः अनुगमने त्वरया उप
लाभं मेने । तद्विरहस्यातिदुःसहत्वात् तत्प्रतिकारकं मर
वरमित्यमन्यत इत्यर्थः ॥९२॥
सम्यगिति । अथ नृपतिः अजः सम्यक् विनीतं नि
संस्काराभ्यां विनयवन्तं वर्म हरतीति वर्महरः कवच
चार्हवयस्कः । "वयसि च" इत्यच्प्रत्ययः । तं कुमारं र

रोगोपसृष्टतनुदुर्वसतिं मुमुक्षुः
प्रायोपवेशनमतिर्नृपतिर्बभूव ॥ ९४ ॥
तीर्थे तोयव्यतिकरभवे जह्नुकन्यासरय्वो-
र्देहत्यागादमरगणनालेख्यमासाद्य सद्यः ।
पूर्वाकाराधिकतररुचा सङ्गतः कान्तयासौ
लीलागारेष्वरमत पुनर्नन्दनाभ्यन्तरेषु ॥ ९५ ॥

इति श्रीरघुवंशे महाकाव्ये कालिदासकृतौ
अजविलापो नाम अष्टमः सर्गः ।

...तां रक्षणविधौ राज्ये विधिवत् विध्यर्हं यथाशास्त्रम् ...र्थः । "तदर्हम्" इति वतिप्रत्ययः । आदिश्य नियुज्य ...ण उपसृष्टायाः व्याप्तायाः तनोः शरीरस्य दुर्वसतिं दुःखा... ...तिं मुमुक्षुः जिहासुः सन् प्रायोपवेशने अनशनावस्थाने ...ः यस्य सः बभूव । "प्रायश्चानशने मृत्यौ तुल्यबाहुल्ययोरपि" ...इति विश्वः । अत्र पुराणवचनम्, "समासक्तो भवेद् यस्तु ...र्महदादिभिः । दुश्चिकित्स्यैर्महारोगैः पीड़ितो वा ...तु यः । स्वयं देहविनाशस्य काले प्राप्ते महामतिः । ...ह्माणं वा स्वर्गादिमहाफलजिगीषया । प्रविशेज्ज्वलनं ...कुर्यादनशनं तथा । एतेषामधिकारोऽस्ति नान्येषां ...न्तुषु । नराणामथ नारीणां सर्ववर्णेषु सर्वदा ॥" इति । ...र्वसन्ततिलकाच्छन्दः । तल्लक्षणम्, "उक्ता वसन्तति- ...तभजा जगौ गः" इति ॥ ९४ ॥

तीर्थ इति । असौ अजः जह्नुकन्यासरय्वोः तोयानां ...र्णां व्यतिकरेण सम्भेदेन भवे तीर्थे गङ्गासरयूसङ्गमे ...त्यागात् सद्यः एव । अमरगणनायां लेख्यं लेखनम् ।

## नवमः सर्गः।

पितुरनन्तरमुत्तरकोशलान्
समधिगम्य समाधिजितेन्द्रियः।
दशरथः प्रशशास महारथो-
यमवतामवताञ्च धुरि स्थितः॥ १॥

"तयोरेव कृत्यक्तखलर्थाः" इति भावार्थे खलप्रत्ययः। भाम
प्राप्य पूर्वस्मात् आकारात् अधिकतरा रुक् यस्याः त
कान्तया रमण्या सङ्गतः सन् नन्दनस्य इन्द्रोद्यानस्य अभ्य
रेषु अन्तर्वर्त्तिषु लीलागारेषु क्रीड़ाभवनेषु पुनः अरम
"यथाकथञ्चित् तीर्थेऽस्मिन् देहत्यागं करोति यः। तस
त्मातदोषो न प्राप्नुयादीप्सितान्यपि॥" इति स्कान्दे। मन्
क्रान्ताच्छन्दः। तल्लक्षणम्, "मन्दाक्रान्ता जलधिषड़गैर्म्भौ न
ताद्गुरू चेत्" इति॥ ८५॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां
रघुवंशटीकायां सञ्जीवनीसमाख्यायाम् अष्टमः सर्गः।

---

एकलोचनमेकार्द्धं सार्द्धलोचनमन्यतः।
नीलार्द्धं नीलकण्ठार्द्धं महः किमपि मन्महे॥

पितुरिति। समाधिना संयमेन जितेन्द्रियः। "समा
नियमे ध्याने" इति कोषः। यमवतां संयमिनाम् अव
रक्षतां राज्ञां च धुरि अग्रे स्थितः महारथः। "एको
सहस्राणि योधयेत् यस्तु धन्विनाम्। शस्त्रशास्त्रप्रवीण

अधिगतं विधिवद् यदपालयत्
प्रकृतिमण्डलमात्मकुलोचितम् ।
अभवदस्य ततो गुणवत्तरं
सनगरं नगरन्ध्रकरौजसः ॥ २ ॥

उभयमेव वदन्ति मनीषिणः
समयवर्षितया कृतकर्मणाम् ।
बलनिषूदनमर्थपतिञ्च तं
श्रमनुदं मनुदण्डधरान्वयम् ॥ ३ ॥

शारथ उच्यते ॥" इति । दशरथः पितुः अनन्तरम् उत्तर-
कोशलान् जनपदान् समधिगम्य प्रशशास । अत्र मनुः, "क्षत्रि-
यस्य परो धर्मः प्रजानां परिपालनम्" इति । द्रुतविलम्बितमि-
दं वृत्तम् । तल्लक्षणम्, "द्रुतविलम्बितमाह नभौ भरौ"
इति ॥ १ ॥

अधिगतमिति । अधिगतं प्राप्तम् आत्मकुलोचितं स्वकुला-
गतं सनगरं नगरजनसहितं प्रकृतिमण्डलम् जानपदमण्ड-
लम् । अत्र प्रकृतिशब्देन प्रजामात्रवाचिना नगरशब्दयोगाद्
गोबलीवर्दन्यायेन जानपदमात्रमुच्यते । यत् यस्मात् विधिवत्
यथाशास्त्रम् अपालयत् । ततः हेतोः रन्ध्रं करोतीति रन्ध्रकरः
छिद्रहेतुः इत्यर्थः । "कृञो हेतुताच्छील्यानुलोम्येषु" इति
टप्रत्ययः । नगस्य रन्ध्रकरः नगरन्ध्रकरः कुमारः । "कुमारः
क्रौञ्चदारणः" इत्यमरः । तदोजसः तत्तुल्यबलस्य अस्य दश-
रथस्य गुणवत्तरम् अभवत् । तत् पौरजानपदमण्डलं तस्मिन्न-
तीव आसक्तमभूत् इत्यर्थः ॥ २ ॥

उभयमिति । मनसः ईषिणः मनीषिणः विद्वांसः ।

जनपदे न गदः पदमादधा-
वभिभवः कुत एव सपत्नजः ?।
क्षितिरभूत् फलवत्यजनन्दने
शमरतेऽमरतेजसि पार्थिवे ॥ ४ ॥
दशदिगन्तजिता रघुणा यथा
श्रियमपुष्यदजेन ततः परम्।
तमधिगम्य तथैव पुनर्बभौ
न न महीनमहीनपराक्रमम् ॥ ५ ॥

पृषोदरादित्वात् साधुः। बलनिषूदनम् इन्द्रं दण्डस्य धरः राजा मनुरिति यो दण्डधरः स एव अन्वयः कूटस्थः यस्य तम् अर्थपतिं दशरथं च इति उभयम् एव समये अवसरे जलं धनं च वर्षतीति समयवर्षी तस्य भावः समयवर्षिता तया हेतुना कृतकर्मणां स्वकर्मकारिणां नुदतीति नुदम्। "इगुपधज्ञा-प्रीकिरः कः" इति कप्रत्ययः। श्रमस्य नुदं श्रमनुदम्। क्लिव-न्तत्वे नपुंसकलिङ्गेनोभयशब्देन सामानाधिकरण्यं न स्यात्। इति वदन्ति ॥ ३ ॥

जनपद इति। शमरते शान्तिपरे अमरतेजसि अजनन्दने दशरथे पार्थिवे पृथिव्याः ईश्वरे सति। "तस्येश्वरः" इत्यण् प्रत्ययः। जनपदे देशे गदः व्याधिः। "उपतापरोगव्याधि-गदामयाः" इत्यमरः। पदं न आदधौ नाचक्राम इत्यर्थः सपत्नजः शत्रुजन्यः अभिभवः कुतः एव ? असम्भावित एव इत्यर्थः, क्षितिः फलवती अभूच्च ॥ ४ ॥

दशेति। महीं दशदिगन्तान् जितवानिति दशदिगन्त-जित्। तेन रघुणा यथा श्रियं कान्तिम् अपुष्यत्। ततः प

समतया वसुवृष्टिविसर्जनै-
र्नियमनादसताञ्च नराधिपः ।
अनुययौ यमपुण्यजनेश्वरौ
सवरुणावरुणाग्रसरं रुचा ॥ ६ ॥

न मृगयाभिरतिर्न दुरोदरं
न च शशिप्रतिमाभरणं मधु ।
तमुदयाय न वा नवयौवना
प्रियतमा यतमानमपाहरत् ॥ ७ ॥

रयोः अनन्तरम् अजेन च यथा श्रियम् अपुष्यत्। तथैव अहीन-
पराक्रमं न हीनः पराक्रमः यस्य तम् अन्यूनपराक्रमं तं
दशरथम् इनं स्वामिनम् अधिगम्य पुनः न बभौ इति न बभा-
येव इत्यर्थः। द्वौ नञौ प्रकृतमर्थं गमयतः ॥ ५ ॥

समतयेति। नराधिपः दशरथः समतया समवर्त्तित्वेन
मध्यस्थत्वेन इत्यर्थः। वसुवृष्टेः धनवृष्टेः विसर्जनैः असतां
दुष्टानां नियमनात् निग्रहाच्च। सवरुणौ वरुणसहितौ यम-
पुण्यजनेश्वरौ यमकुवेरौ यमकुवेरवरुणान् यथासंख्यम् अनुययौ
अनुचकार। रुचा तेजसा अरुणाग्रसरम् अरुणसारथिं सूर्य्यम्
अनुययौ ॥ ६ ॥

तस्य व्यसनासक्तिर्नासीदित्याह, नेति। उदयाय यत-
मानम् अभ्युदयार्थं व्याप्रियमाणं तं दशरथं मृगयाभिरतिः
आखेटव्यसनं न अपाहरत् न आचकर्ष। "आच्छोदनं मृगव्यं
स्यादाखेटो मृगया स्त्रियाम्" इत्यमरः। दुष्टम् आसमन्तात्
उदरमस्येति दुरोदरं द्यूतं न च अपाहरत्। "दुरोदरो द्यूत-
कारे पणे द्यूते दुरोदरम्" इत्यमरः। शशिनः प्रतिमा प्रति-

न कृपणा प्रभवत्यपि वासवे
न वितथा परिहासकथास्वपि।
न च सपत्नजनेष्वपि तेन वाक्
अपरुषा परुषाक्षरमीरिता॥ ८॥

उदयमस्तमयञ्च रघूद्वहात्
उभयमानशिरे वसुधाधिपाः।
स हि निदेशमलङ्घयतामभूत्
सुहृदयोहृदयः प्रतिगर्जताम्॥ ९॥

विभ्रमाभरणं यस्य तत् मधु न अपाहरत्। नवेति पदच्छेदः
वाशब्दः समुच्चये। नवयौवना नवं नूतनं यौवनं तारुण्यं यस्या
तादृशी प्रियतमा वा स्त्री न अपाहरत्। जातावेकवचनम्
अत्र मनुः, "पानमक्षाः स्त्रियश्चेति मृगया च यथाक्रमम्
एतत् कष्टतमं विद्याच्चतुष्कं कामजे गणे" इति॥ ७॥

नेति। तेन राज्ञा प्रभवति प्रभौ सति वासवे अपि कृपण
दीना वाक् न ईरिता न उक्ता, परिहासकथासु अपि वितथ
अनृता वाक् न ईरिता, किन्तु अपरुषा रोषशून्येन तेन सपत्न
जनेषु अपि शत्रुजनेषु अपि परुषाक्षरं निष्ठुराक्षरं यथा तथ
वाक् न ईरिता किमुतान्यत्रेति। सर्वत्रापिशब्दार्थः। किन्तु
दीना सत्या मधुरैव वागुक्तेति फलितार्थः॥ ८॥

उदयमिति। वसुधाधिपः राजानः उद्वहति इति उद्वह
नायकः। पचाद्यच्। रघूणाम् उद्वहः रघुनायकः तस्मात्
रघुनायकात् उदयं वृद्धिम्। अस्तमयं नाशं च इत्युभयम्
मानशिरे लेभिरे। कुतः? हि यस्मात् सः दशरथः निदेश
माज्ञाम् अलङ्घयतां शोभनं हृदयमस्येति सुहृद् मित्रम् अभूत्

अजयदेकरथेन स मेदिनी-
मुदधिनेमिमधिज्यशरासनः ।
जयमघोषयदस्य तु केवलं
गजवती जवतीव्रहया चमूः ॥ १० ॥
अवनिमेकरथेन वरूथिना
जितवतः किल तस्य धनुर्भृतः ।
विजयदुन्दुभितां ययुरर्णवाः
घनरवा नरवाहनसम्पदः ॥ ११ ॥
शमितपक्षबलः शतकोटिना
शिखरिणां कुलिशेन पुरन्दरः ।

पृषद्दुहृदौ मित्रामित्रयोरिति निपातः । प्रतिगर्जतां प्रति-
स्पर्धिनाम् अयः इव हृदयं यस्य इति अयोहृदयः कठिनचित्तः
अभूत् आज्ञाकारिणो रक्षति अन्यान् मारयति इत्यर्थः ॥ ८ ॥

अजयदिति । अधिज्यशरासनः स दशरथः उदधिनेमिं
समुद्रवेष्टनां मेदिनीम् एकरथेन अजयत् स्वयमेकरथेन अजैषीत्
इत्यर्थः । गजवती गजयुक्ता जवेन तीव्राः जवाधिकाः हयाः
यस्यां सा चमूस्तु अस्य नृपस्य केवलं जयम् अघोषयत् अप्रथ-
यत् । स्वयमेकवीरस्य चमूरुपकरणमात्रमिति भावः ॥ १० ॥

अवनिमिति । वरूथिना गुप्तिमता । "वरूथो रथगुप्तिर्या
तिरोधत्ते रथस्थितिम्" इति सज्जनः । एकरथेन अद्वितीय-
रथेन अवनिं जितवतः धनुर्भृतः नरवाहनसम्पदः कुवेरतुल्य-
श्रीकस्य तस्य दशरथस्य घनरवाः मेघसमघोषाः अर्णवाः
विजयदुन्दुभितां किल ययुः । अर्णवान्तविजयी इत्यर्थः ॥ ११ ॥

स शरवृष्टिमुचा धनुषा द्विषां
स्वनवता नवतामरसाननः॥ १२ ॥
चरणयोर्नखरागसमृद्धिभिः
मुकुटरत्नमरीचिभिरस्पृशन्।
नृपतयः शतशो मरुतो यथा
शतमखं तमखण्डितपौरुषम्॥ १३ ॥
निववृते स महार्णवरोधसः
सचिवकारितबालसुताञ्जलीन्।
समनुकम्प्य सपत्नपरिग्रहा-
ननलकानलकानवमां पुरीम्॥ १४ ॥

शमितेति। पुरन्दरः इन्द्रः शतकोटिना शतास्रिणा कुलि-
शेन वज्रेण शिखरिणां पर्वतानां शमितपक्षबलः विनाशितपक्ष-
सारः नवतामरसाननः नवपङ्कजाननः। "पङ्केरुहं तामरसम्"
इत्यमरः। सः दशरथः शरवृष्टिमुचा स्वनवता धनुषा द्विषां
शमितः नाशितः पक्षः सहायः बलं च येन सः तथोक्तः।
"पक्षः सहायोऽपि" इत्यमरः॥ १२॥

चरणयोरिति। शतशः नृपतयः अखण्डितपौरुषं तं दश-
रथं, मरुतः देवाः शतमखं यथा शतक्रतुम् इव, नखरागेण
चरणनखकान्त्या समृद्धिभिः सम्पादितर्द्धिभिः मुकुटरत्नमरी-
चीभिः चरणयोः अस्पृशन् तं प्रणेमुः इत्यर्थः॥ १३॥

निववृत इति। सः दशरथः सचिवैः सम्प्रयोज्यैः कारिताः
बालसुतानाम् अञ्जलयः यैः तान् स्वयमसम्मुखागतान् इत्यर्थः।
अनलकान् हतभर्त्तृकतया अलकसंस्कारशून्यान् सपत्नपरि-

उपगतोऽपि च मण्डलनाभिता-
मनुदिताम्यसितातपवारण:।
श्रियमवेक्ष्य स रन्ध्रचलामभूत्
अनलसोऽनलसोमसमद्युति: ॥ १५ ॥

प्रहान् प्रवृपत्नी:। "पत्नी परिजनादानमूलशापा: प्रतिग्रहा:" इत्यमर:। समनुकम्प्य अनुगृह्य अलकानवमाम् अलकानगरादन्यूनां पुरीमयोध्यां प्रति महार्णवानां रोधस: पर्यन्तात् निववृते। शरणागतवत्सल: इति भाव: ॥ १४ ॥

उपगत इति। अनुदितम् अनुच्छ्रितम् अन्यत् स्वच्छत्रातिरिक्तं सितातपवारणं श्वेतच्छत्रं यस्य स:। अनलसोमयो: अग्निचन्द्रयो: समे द्युती तेज:कान्ती यस्य स: तथोक्त: श्रियं लक्ष्मीं रन्ध्रे अन्यायालस्यादिरूपे छले चलां चञ्चलाम् अवेक्ष्य अवलोक्य। स्त्रीर्हि केनचिच्छिद्रेण पुमांसं परिहरति। स दशरथ: मण्डलस्य नाभितां द्वादशराजमण्डलस्य प्रधानमहीपतित्वमुपगत: अपि चक्रवर्त्ती सन्नपि इत्यर्थ:। "अथ नाभिस्तु जन्तुके यस्य संज्ञा प्रतारिका। रथचक्रस्य मध्यस्थपिण्डिकायाञ्च ना पुन:। आद्यक्षत्रियभेदे तु मतोर्मुख्यमहीपतौ" इति केशव:। पाठान्तरे अजितं कृपास्पदमस्तीति बुद्ध्या अनलस: अप्रमत्त: अभूत्। विजितनिखिलजेतव्योऽपि पुनर्जेतव्यान्तरवानिव जागरूक एवावतिष्ठते इत्यर्थ:। द्वादशराजमण्डलं तु कामन्दकेनोक्तम्, "अरिर्मित्रमरेर्मित्रं मित्रमित्रमत: परम्। तथारिमित्रमित्रञ्च विजिगीषो: पुर:सरा:। पार्ष्णिग्राहस्तत: पश्चादाक्रन्दस्तदनन्तरम्। आसारावनयोश्चैव विजिगीषोस्तु पृष्ठत:। अरेश्च विजिगीषोश्च मध्यमो भूम्यनन्तर:। अनुग्रहे संहतयो: समर्थो व्यस्तयोर्वधे। मण्ड-

तमपहाय ककुत्स्थकुलोद्भवं
पुरुषमात्मभवञ्च पतिव्रता।
नृपतिमन्यमसेवत देवता
सकमला कमलाघवमर्थिषु ॥ १६ ॥

तमलभन्त पतिं पतिदेवताः
शिखरिणामिव सागरमापगाः।
मगधकोशलकेकयशासिनां
दुहितरोऽहितरोपितमार्गणम् ॥ १७ ॥

लाद् बहिरेतेषामुदासीनो बलाधिकः। अनुग्रहे संहतान व्यस्तानाञ्च वधे प्रभुः॥" इति। "अरिमित्रादयः पञ्च विजि गीषोः पुरःसराः। पार्ष्णिग्राहाक्रन्दपार्ष्णिग्राहासाराक्रन्दा साराः।" इति पृष्ठतः चत्वारः। मध्यमोदासीनौ द्वौ विजिगीषुरेकः, इत्येवं द्वादशराजमण्डलम्। तत्रोदासीन मध्यमोत्तरचक्रवर्त्ती दशरथश्चैतादृगिति तात्पर्य्यार्थः॥ १५॥

तमिति। पत्यौ व्रतं नियमः यस्याः सा पतिव्रता सक मला कमलहस्ता देवता लक्ष्मीः अर्थिषु विषये अलाघव लघुत्वरहितम् अपराङ्मुखम् इत्यर्थः ककुत्स्थकुलोद्भवं दशरथम् आत्मभवं पुरुषं विष्णुं च अपहाय त्यक्त्वा अन्यं नृपतिम् असेवत कमपि नासेवत इत्यर्थः। विष्णाविव वि तुल्ये तस्मिन्नपि श्रीः स्थिराभूत् इत्यर्थः॥ १६॥

तमिति। पतिरेव देवता यासां ताः पतिदेवताः प व्रताः मगधाश्च कोशलाश्च केकयाश्च तान् जनपदान् शासती तच्छासिनः तेषां राज्ञां दुहितरः पुत्र्यः सुमित्राकौशल्याकैके इत्यर्थः। अत्र क्रमो न विवक्षितः। अहितरोपितमार्ग

प्रियतमाभिरसौ तिसृभिर्बभौ
तिसृभिरेव भुवं सह शक्तिभिः ।
उपगतो विनिनीषुरिव प्रजाः
हरिहयोऽरिहयोगविचक्षणः ॥ १८ ॥

स किल संयुगमूर्द्ध्नि सहायतां
मघवतः प्रतिपद्य महारथः ।
स्वभुजवीर्य्यमगापयदुच्छ्रितं
सुरवधूरवधूतभयाः शरैः ॥ १९ ॥

बुनिखातशरम् । "कदम्बमार्गणशराः" इत्यमरः । तं दशरथं [illegible]निम्नगाः आश्रितां दुहितरः आसमन्तात् अपगच्छन्तीति अथवा "आपेन अपामवच्छिन्ना वेगेन गच्छन्तीति आपगाः" इति क्षीरस्वामी । नद्यः सागरम् इव, पतिं भर्त्तारम् अलभन्त प्रापुः ॥ १७ ॥

प्रियतमाभिरिति । अरीन् घ्नन्तीति अरिहणो रिपुघ्नाः हन्तेः क्विप् । "ब्रह्मभ्रूणवृत्तेषु क्विप्" इति नियमस्य प्रायिकत्वात् । यथाह न्यासकारः, "प्रायिकश्चायं नियमः क्वचिद्-न्यस्मिन्नप्युपपदे दृश्यते । मधुहा, प्रायिकत्वञ्च वक्ष्यमाणस्य बहुलग्रहणस्य पुरस्तादपकर्षाल्लभ्यते" इति । तेषु योगेषु उपायेषु विचक्षणः दक्षः । "योगः सन्नहनोपायध्यानसङ्गति-युक्तिषु" इत्यमरः । इन्द्रेऽपि योज्यमेतत् । असौ दशरथः तिसृभिः प्रियतमाभिः सह, प्रजाः विनिनीषुः विनेतुमिच्छुः तिसृभिः शक्तिभिः प्रभुमन्त्रोत्साहशक्तिभिः एव सह, भुवम् उपगतः हरिहयः इन्द्रः इव, बभौ ॥ १८ ॥

स इति । महारथः सः दशरथः संयुगमूर्द्ध्नि रणाग्रे

क्रतुषु तेन विसर्जितमौलिना
भुजसमाहृतदिग्वसुना कृताः।
कनकयूपसमुच्छ्रयशोभिनो
वितमसा तमसा सरयूतटाः॥ २०॥

अजिनदण्डभृतं कुशमेखलां
यतगिरं मृगशृङ्गपरिग्रहाम्।
अधिवसंस्तनुमध्वरदीक्षिता-
मसमभासमभासयदीश्वरः॥ २१॥

मघवतः इन्द्रस्य सहायतां प्रतिपद्य प्राप्य शरैः अवधूतभयाः निवर्त्तितवासाः सुरवधूः उच्छ्रितं स्वभुजवीर्य्यम् अगापयत् किल खलु। गायतेः शब्दकर्मत्वात् "गतिबुद्धि" इत्यादिना सुरवधूनामपि कर्मत्वम्॥ १९॥

क्रतुष्विति। क्रतुषु अश्वमेधेषु विसर्जितमौलिना अवरोपितकिरीटेन। "यावद् यज्ञमध्वर्युरेव राजा भवति" इति राजचिह्नत्यागविधानादित्यभिप्रायः। "मौलिः किरीटे धम्मिल्ले" इति विश्वः। भुजसमाहृतदिग्वसुना भुजार्जितदिगन्तसम्पदा। अनेन क्षत्रियस्य विजितत्वमित्युक्तम्, नियमार्जितधनत्वं सद्विनियोगकारित्वञ्च सूच्यते। वितमसा तमोगुणरहितेन तेन दशरथेन। तमसा च सरयूश्च नद्यौ तयोः तटाः कनकयूपानां समुच्छ्रयेण समुन्नमनेन शोभिनः कृताः। कनकमयत्वञ्च यूपानां शोभार्थं विध्यभावात्। "हैमयूपस्तु शोभिकः" इति यादवः॥ २०॥

अजिनेति। ईश्वरः भगवान् अष्टमूर्त्तिः अजिनं कृष्णाजिनं दण्डम् औदुम्बरं बिभर्त्तीति ताम् अजिनदण्डभृतम्

अवभृतप्रयतो नियतेन्द्रियः
सुरसमाजसमाक्रमणोचितः ।
नमयति स्म स केवलमुन्नतं
वनमुचे नमुचेररये शिरः ॥ २२ ॥

असकृदेकरथेन तरस्विना
हरिहयाग्रसरेण धनुर्भृता ।
दिनकराभिमुखा रणरेणवो-
रुरुधिरे रुधिरेण सुरद्विषाम् ॥ २३ ॥

ाजिनं दीक्षयति औदुम्बरं दीक्षितदण्डं यजमानाय च्छति" इति वचनात्। कुशमयी मेखला यस्याः तां मेखलां शरमयी मौञ्जी वा मेखला तया यजमानं दीक्षय-ति विधानात्। प्रकृते कुशग्रहणं क्वचित् प्रतिनिधिदर्श-[illegible]क्तम्। यतगिरं वाचंयमाम् "वाचं यच्छति" इति ः। मृगशृङ्गं परिग्रहः कण्डूयनसाधनं यस्याः ताम् विषाणया कण्डूयते" इति श्रुतेः। अध्वरदीक्षितां कारविशेषयुक्तां तनुं दाशरथीम् अधिवसन् अधितिष्ठन् सन् मा: भासः दीप्तयः यस्मिन् कर्मणि तत् यथा तथा अभा-त् भासयति स्म ॥ २१ ॥

अवभृथेति। अवभृथेन प्रयतः नियतेन्द्रियः सुरसमाज-ाक्रमणोचितः देवसभाधिष्ठानार्हः सः दशरथः उन्नतं शिरः मुचे जलवर्षिणे। "जलं नीरं वनं सत्त्वम्" इति शाश्वतः। मुचेः अरये केवलम् इन्द्राय एव नमयति स्म, न कस्मैचिद-स्मै मानुषाय इत्यर्थः ॥ २२ ॥

असकृदिति। एकरथेन अद्वितीयरथेन तरस्विना बलवता

अथ समावव्रते कुसुमैर्नवै-
स्तमिव सेवितुमेकनराधिपम् ।
यमकुवेरजलेश्वरवज्रिणां
समधुरं मधुरञ्चितविक्रमम् ॥ २४ ॥

जिगमिषुर्धनदाध्युषितां दिशं
रथयुजा परिवर्त्तितवाहनः ।
दिनमुखानि रविर्हिमनिग्रहै-
र्विमलयन् मलयन्नगमत्यजत् ॥ २५ ॥

हरिहयस्य इन्द्रस्य अग्रसरेण धनुर्भृता दशरथेन असकृत् बहु
दिनकरस्य अभिमुखाः अभिमुखस्थिता इत्यर्थः । रवेरे
सुरद्विषां दैत्यानां रुधिरेण रुरुधिरे निवारिताः ॥ २३ ॥

अथेति । अथ यमकुवेरजलेश्वरवज्रिणां धर्मराजधन
वरुणामरेन्द्राणां समा धूः भारः यस्य सः समधुरः माध
वितरणसन्नियमनैश्वर्य्यैस्तुल्यकक्षः इत्यर्थः । "ऋक्पूरब्धूः
इत्यादिना समासान्तो अच्प्रत्ययः । तं समधुरम् अञ्चित
क्रमं पूजितपराक्रमम् एकनराधिपं तं दशरथं सेवितुमि
मधुः वसन्तः । "अथ पुष्परसे मधु दैत्ये चैत्रे वसन्ते च मधु
इति विश्वः । नवैः कुसुमैः उपलक्षितः सन् समावव्रते समा
गतः । "रिक्तहस्तेन नोपेयाद् राजानं देवतां गुरुम्" इ
वचनात् पुष्पसमेतो राजानं सेवितुमागतः इत्यर्थः ॥ २४ ॥

जिगमिषुरिति । धनदाध्युषितां कुवेराधिष्ठितां दि
जिगमिषुः गन्तुमिच्छुः रथयुजा सारथिना अरुणेन परिवर्त्ति
वाहनः निवर्त्तिताश्वः रविः हिमस्य निग्रहैः निराकरणैः दिन

कुसुमजन्म ततो नवपल्लवा-
स्तदनु षट्पदकोकिलकूजितम् ।
इति यथाक्रममाविरभून्मधु-
र्द्रुमवतीमवतीर्य्य वनस्थलीम् ॥ २६ ॥

नवगुणोपचितामिव भूपतेः
सदुपकारफलां श्रियमर्थिनः ।
अभिययुः सरसो मधुसम्भृतां
कमलिनीमलिनीरपतत्त्रिणः ॥२७॥

ानि प्रभातानि विमलयन् विशदयन् मलयं नगं मलया-
म् अत्यजत् दक्षिणां दिशमत्याक्षीत् इत्यर्थः ॥ २५ ॥

कुसुमेति। आदौ कुसुमजन्म ततः नवपल्लवाः तदनु।
नुर्लक्षणे” इति कर्मप्रवचनीयत्वात् द्वितीया। यथासंख्यं
समयानन्तरं षट्पदानां कोकिलानाञ्च कूजितम्। इत्येवं
ारेण यथाक्रमं क्रममनतिक्रम्य द्रुमवतीं द्रुमभूयिष्ठां वन-
लीम् अवतीर्य्य मधुः वसन्तः आविरभूत्। केषाञ्चित्
ाणां पल्लवप्राथम्यात् केषाञ्चित् कुसुमप्राथम्यान्नोक्तक्रमस्य
विरोधः ॥ २६ ॥

नयेति। नयः नीतिः एव गुणः तेन अथवा नयेन गुणैः
र्य्यादिभिश्च उपचिताम्। सताम् उपकारः फलं यस्याः
सदुपकारफलां भूपतेः दशरथस्य श्रियम् अर्थिनः इव मधुना
न्तेन सम्भृतां सम्यक् पुष्टां सरसः सम्बन्धिनीं कमलिनीं
लिनीम् अलिनीरपतत्त्रिणः अलयः भृङ्गाः। नीरपतत्त्रिणः
पतत्त्रिणः हंसादयश्च अभिययुः ॥ २७ ॥

कुसुममेव न केवलमार्तवं
नवमशोकतरोः स्मरदीपनम् ।
किसलयप्रसवोऽपि विलासिनां
मदयिता दयिताश्रवणार्पितः ॥२८॥
विरचिता मधुनोपवनश्रिया-
मभिनवा इव पत्रविशेषकाः ।
मधुलिहां मधुदानविशारदाः
कुरवका रवकारणतां ययुः ॥ २९ ॥
सुवदनावदनासवसम्भृत-
स्तदनुवादिगुणः कुसुमोद्गमः ।

कुसुममिति । ऋतुरस्य प्राप्तः आर्त्तवम् । "ऋतोरण्" इत्यण् । नवं प्रत्यग्रम् अशोकतरोः केवलं कुसुमम् एव स्मर- दीपनम् उद्दीपनं न, किन्तु विलासिनां मदयिता मदजनक दयिताश्रवणार्पितः किसलयप्रसवः अपि पल्लवसन्तानः अपि स्मरदीपनः अभवत् ॥ २८ ॥

विरचिता इति । मधुना वसन्तेन विरचिताः उपवन- श्रियाम् अभिनवाः पत्रविशेषकाः पत्ररचना इव स्थिताः मधून मकरन्दानां दाने विशारदाः चतुराः कुरवकाः तरवः मधुलि मधुपानां रवकारणतां ययुः, भृङ्गाः कुरवकाणां मधूनि पीत्व जगुः इत्यर्थः । दानशौण्डान् अर्थिजनाः स्तुवन्ति इ भावः ॥ २९ ॥

सुवदनेति । सुवदनावदनासवेन कान्तामुखमद्येन सम्भृ जनितः । तत् तस्य दोहदम् इति प्रसिद्धिः । तस्य आस्व

मधुकरैरकरोत् मधुलोलुपै-
र्बकुलमाकुलमायतपङ्क्तिभिः ॥ ३० ॥

उपहितं शिशिरापगमश्रिया
मुकुलजालमशोभत किंशुके ।
प्रणयिनीव नखक्षतमण्डनं
प्रमदया मदयापितलज्जया ॥ ३१ ॥

व्रणगुरुप्रमदाधरदुःसहं
जघननिर्विषयीकृतमेखलम् ।
न खलु तावदशेषमपोहितुं
रविरलं विरलं कृतवान् हिमम् ॥३२॥

गुवादी सदृशः गुणः यस्य तदनुवादिगुणः कुसुमशोमः कर्त्ता
मधुलोलुपैः आयतपङ्क्तिभिर्दीर्घपङ्क्तिभिः मधुकरैः मधुपैः
रवैः बकुलं बकुलवृक्षम् आकुलम् अकरोत् ॥ ३० ॥

उपहितमिति । शिशिरापगमश्रिया वसन्तलक्ष्म्या किंशुके
तामवृक्षे । "पलाशः किंशुकः पर्णः" इत्यमरः । उपहितं
तं मुकुलजालं कुड्मलसंहतिः, मदेन यापितलज्जया अप-
ारितत्रपया प्रमदया प्रणयिनि प्रियतमे उपहितं नखक्षतम्
व मण्डनं तत् इव अशोभत ॥ ३१ ॥

व्रणेति । व्रणैः दन्तक्षतैः गुरुभिः दुर्भरैः प्रमदानाम् अधरैः
धरोष्ठैः दुःसहं हिमस्य व्रणाकरत्वात् असह्यं जघनेषु निर्वि-
षीकृता निरवकाशीकृता मेखला येन तत् शैत्यात् त्याजित-
खलम् इत्यर्थः । एवंभूतं हिमं रविः तावत् आवसन्तात्

अभिनयान् परिचेतुमिवोद्यता
मलयमारुतकम्पितपल्लवा।
अमदयत् सहकारलता मनः
सकलिका कलिकामजितामपि॥ ३३॥

प्रथममन्यभृताभिरुदीरिताः
प्रविरला इव मुग्धवधूकथाः।
सुरभिगन्धिषु शुश्रुविरे गिरः
कुसुमितासु मिता वनराजिषु॥ ३४॥

अशेषं निःशेषं यथा तथा अपोहितुं निरसितुं न अलं खलु अ-
शक्तो हि किन्तु विरलं कृतवान् तनूचकार॥ ३२॥

अभिनयानिति। अत्र चूतलतायां नर्त्तकीसमाधिरभि-
धीयते। अभिनयान् अर्थव्यञ्जकान् व्यापारान्। "व्यञ्जका-
भिनयौ समौ" इत्यमरः। परिचेतुम् अभ्यसितुम् उद्यता उप-
स्थिता, कुतः? मलयमारुतेन कम्पितपल्लवा, पल्लवशब्देन
हस्तो गम्यते, सकलिका सकोरका। "कलिका कोरकः
पुमान्" इत्यमरः। सहकारलता कलिः कलहः द्वेषः उच्यते।
"कलिः स्यात् कलहे शूरे कलिरन्त्ययुगे युधि" इति विश्वः।
कामः रागः तज्जिताम् अपि जितरागद्वेषाणामपि इत्यर्थः मनः
अमदयत्॥ ३३॥

प्रथममिति। सुरभिः गन्धः यासां तासु सुरभिगन्धिषु।
"गन्धस्य—" इत्यादिनेकारः। कुसुमानि आसां सञ्जातानि
कुसुमिताः तासु वनराजिषु वनपङ्क्तिषु अन्यभृताभिः कोकि-
लाभिः प्रथमं प्रारम्भेषु उदीरिताः उक्ताः अतएव मिताः परि-

श्रुतिसुखभ्रमरस्वनगीतयः
कुसुमकोमलदन्तरुचो बभुः ।
उपवनान्तलताः पवनाहतैः
किसलयैः सलयैरिव पाणिभिः ॥ ३५॥

ललितविभ्रमबन्धविचक्षणं
सुरभिगन्धपराजितकेसरम् ।
पतिषु निर्विविशुर्मधुमङ्गनाः
स्मरसखं रसखण्डनवर्जितम् ॥ ३६ ॥

ताः गिरः आलापाः, प्रविरलाः मौग्ध्यात् स्तोकोक्ताः मुग्ध-
नां कथाः वाच इव शुश्रुविरे श्रुताः ॥ ३४ ॥

श्रुतीति । श्रुतिसुखाः कर्णमधुराः भ्रमरस्वनाः एव
तयः यासां ताः, कुसुमानि एव कोमलाः दन्तरुचः दन्त-
न्तयः यासां ताः, अनेन सस्मितत्वं विवक्षितम्, उपवनान्त-
ताः पवनेन आहतैः कम्पितैः किसलयैः सलयैः साभिनयैः ।
शब्देन लयानुगतोऽभिनयो लक्ष्यते उपवनान्ते पवनाहतै-
ति सक्रियत्वाभिधानात् । पाणिभिः इव बभुः । अनेन
नानां नर्त्तकीसाम्यं गम्यते ॥ ३५ ॥

ललितेति । अङ्गनाः ललितविभ्रमबन्धविचक्षणं मधुर-
लासघटनापटुतरं सुरभिणा मनोहरेण गन्धेन पराजितकेसरं
र्जितवकुलपुष्पम् । "अथ केसरे वकुलः" इत्यमरः । स्मरस्य
खायं स्मरसखं स्मरोद्दीपकम् इत्यर्थः मधुं मद्यम् । "अर्धर्चाः
से च" इति पुंलिङ्गता । उक्तञ्च, "मकरन्दस्य मद्यस्य
धिकस्यापि वाचकः । अर्धर्चादिगणे पाठात् पुंनपुंसक-
मधुः ॥" इति पतिषु विषये रसखण्डनवर्जितम् अनुराग-

जज्ञुभिरे स्मितचारुतराननाः
स्त्रिय इव श्लथशिञ्जितमेखलाः।
विकचतामरसा गृहदीर्घिकाः
मदकलोदकलोलविहङ्गमाः॥ ३७॥
उपययौ तनुतां मधुखण्डिता
हिमकरोदयपाण्डुमुखच्छविः।
सदृशमिष्टसमागमनिर्वृतिं
वनितयानितया रजनीवधूः॥ ३८॥

भङ्गरहितं यथा तथा निर्विविशुः। परस्परानुरागपूर्वकं पतिभि
सह पपुः इत्यर्थः॥ ३६॥

जज्ञुभिरे इति। विकचतामरसाः विकसितकमलाः मदे
कलाः अव्यक्तमधुरं ध्वनन्तः उदकलोलविहङ्गमाः जलप्रिय
पक्षिणः हंसादयः यासु ताः मदकलोदकलोलविहङ्गमाः गृहे
दीर्घिकाः वाप्यः। स्मितेन चारुतराणि आननानि यासां ता
श्लथाः शिञ्जिताः मुखराः मेखलाः यासां ताः। शिञ्जितेति
कर्त्तरि क्तः। स्त्रियः इव, जज्ञुभिरे॥ ३७॥

उपययाविति। मधुना मधुसमयेन खण्डिता ह्रास
गमिता। क्षीयन्ते खलूत्तरायणे रात्रयः। खण्डिताख्या च
नायिका ध्वन्यते। हिमकरोदयेन चन्द्रोदयेन पाण्डुः मुख
प्रदोषस्य वक्त्रस्य च छविः यस्याः सा रजनी एव वधूः इष्टसमाग
मनिर्वृतिं प्रियसङ्गमसुखम् अनितया अप्राप्तया। "इण् गतौ"
इति धातोः कर्त्तरि क्तः। वनितया सदृशं तुल्यं तनुता
न्यूनतां कार्श्यं च उपययौ॥ ३८॥

अपतुषारतया विशदप्रभैः
सुरतसङ्गपरिश्रमनोदिभिः ।
कुसुमचापमतेजयदंशुभि-
र्हिमकरो मकरोर्जितकेतनम् ॥ ३९ ॥

हुतहुताशनदीप्ति वनश्रियः
प्रतिनिधिः कनकाभरणस्य यत् ।
युवतयः कुसुमं दधुराहितं
तदलके दलकेसरपेशलम् ॥ ४० ॥

अलिभिरञ्जनबिन्दुमनोहरैः
कुसुमपङ्क्तिनिपातिभिरङ्कितः ।

अपेति । हिमकरः चन्द्रः अपतुषारतया अपगतनीहार-
ा विशदप्रभैः निर्मलकान्तिभिः सुरतसङ्गपरिश्रमनोदिभिः
तसङ्गखेदहारिभिः अंशुभिः किरणैः मकरोर्जितकेतनं मक-
र ऊर्जितं केतनं ध्वजः यस्य तं लब्धावकाशत्वादुच्छ्रितध्वजम्
र्थः कुसुमचापं कामम् अतेजयत् । "तिज निशाने" इति
तोर्ण्यन्ताल्लङ् । सहकारिलाभात् कामोऽपि तीक्ष्णोऽभूत्
र्थः ॥ ३९ ॥

हुतेति । हुतहुताशनदीप्ति आज्यादिप्रज्वलिताग्निप्रभं
त् कुसुमं कर्णिकारम् इत्यर्थः । वनश्रियः उपवनलक्ष्म्याः
नकाभरणस्य प्रतिनिधिः अभूत् इति शेषः । दलेषु केसरेषु
पेशलं सुकुमारपत्रकिञ्जल्कम् इत्यर्थः । आहितं प्रियैः इति
षः तत् कुसुमं युवतयः अलके कुन्तले दधुः ॥ ४० ॥

अलिभिरिति । अञ्जनबिन्दुमनोहरैः कज्जलकणसुन्दरैः

न खलु शोभयति स्म वनस्थलीं
न तिलकस्तिलकः प्रमदामिव ॥ ४१ ॥

अमदयत् मधुगन्धसनाथया
किसलयाधरसङ्गतया मनः।
कुसुमसम्भृतया नवमल्लिका
स्मितरुचा तरुचारुविलासिनी ॥ ४२ ॥

अरुणरागनिषेधिभिरंशुकैः
श्रवणलब्धपदैश्च यवाङ्कुरैः

कुसुमपङ्क्तिषु निपतन्ति ये तैः अलिभिः अञ्जितः चित्रितः तिलकः श्रीमान् नाम वृक्षः। "तिलकः क्षुरकः श्रीमान्" इत्यमरः। वनस्थलीं तिलकः विशेषकः। "तमालपत्रतिलकचित्रकाणि विशेषकम्। द्वितीयञ्च तुरीयञ्च न स्त्रियाम्" इत्यमरः। प्रमदामिव न शोभयति स्म इति न खलु अपि तु अशोभयदेवेत्यर्थः। "लट् स्मे" इति स्मशब्दयोगात् भूतार्थे लट् ॥ ४१ ॥

अमदयदिति। तरुचारुविलासिनी तरोः पुंसश्च चारुविलासिनी नवमल्लिका सप्तलाख्या लता। "सप्तला नवमल्लिका" इत्यमरः। मधुनः मकरन्दस्य मद्यस्य च गन्धेन सनाथया गन्धप्रधानया इत्यर्थः। किसलयम् एव अधरः तत्र सङ्गतया प्रसृतरागया इत्यर्थः कुसुमैः सम्भृतया सम्पादितया कुसुमरूपया इत्यर्थः। स्मितरुचा हासकान्त्या मनः पश्यताम् इति शेषः अमदयत् ॥ ४२ ॥

अरुणेति। विलासिनः विलसनशीलाः पुरुषाः। "वीकषलस—" इत्यादिना घिनुण्प्रत्ययः। अरुणस्य अनूरोः रागम्

परभृताविरुतैश्च विलासिनः
स्मरबलैरबलैकरसाः कृताः ॥ ४३ ॥

उपचितावयवा शुचिभिः कणै-
रलिकदम्बकयोगमुपेयुषी ।
सदृशकान्तिरलक्ष्यत मञ्जरी
तिलकजालकजालकमौक्तिकैः ॥ ४४ ॥

ध्वजपटं मदनस्य धनुर्भृत-
श्छविकरं मुखचूर्णमृतुश्रियः ।

रक्तं निषेधन्ति तिरस्कुर्वन्ति इति अधरागनिषेधिनः तैः
ष्ण्यादिरञ्जनात् तत्सदृशैः इत्यर्थः । "तमन्वेत्यनुबध्नाति
शीलं तन्निषेधति । तस्येवानुकरोतीति शब्दाः सादृश्य-
चकाः ॥" इति दण्डी । अंशुकैः अम्बरैः अवयवेषु कार्येषु
पदैः निवेशितैः इत्यर्थः यवाङ्कुरैश्च परभृताविरुतैः
किलाकूजितैश्च इत्येतैः स्मरबलैः कामसैन्यैः अबलासु एक
रसः रागः येषां ते अबलैकरसाः स्त्रीपरतन्त्राः कृताः ॥४३॥
उपचितेति । शुचिभिः शुभ्रैः कणैः रजोभिः उपचिता-
वा पुष्टावयवा अलिकदम्बकयोगम् उपेयुषी प्राप्ता तिलकजा
लकप्रचोत्या मञ्जरी अलकेषु यत् जालकम् आभरणविशेषः
न् मौक्तिकैः सदृशकान्तिः अलक्ष्यत । भृङ्गसङ्गिनी शुभ्रा
लकमञ्जरी नीलालकसक्तमुक्ताजालम् इव अलक्ष्यत इति
भावार्थः ॥ ४४ ॥
ध्वजेति । अलिव्रजाः षट्पदनिवहाः धनुर्भृतः धानुष्कस्य
दनस्य कामस्य ध्वजपटं पताकाभूतम् ऋतुश्रियः वसन्त-
श्रियाः छविकरं शोभाकरं मुखचूर्णं मुखालङ्कारचूर्णभूतं

कुसुमकेशररेणुमलिव्रजाः
सपवनोपवनोत्थितमन्वयुः ॥ ४५ ॥

अनुभवन् नवदोलमृतूत्सवं
पटुरपि प्रियकण्ठजिघृक्षया।
अनयदासनरज्जुपरिग्रहे
भुजलतां जडतामबलाजनः ॥ ४६ ॥

त्यजत मानमलं बत विग्रहैः
न पुनरेति गतं चतुरं वयः।
परभृताभिरितीव निवेदिते
स्मरमते रमते स्म वधूजनः ॥ ४७ ॥

सपवनोपवनोत्थितं सपवनं पवनेन सहितं यत् उपवनं त
उत्थितं कुसुमानां केशरेषु किञ्जल्केषु यः रेणुः तम् अ
अन्वयच्छन्। यातेर्लङ् ॥ ४५ ॥

अनुभवन्निति। नवा दोला प्रेङ्खा यस्मिन् तं नवदो
मृतूत्सवम् वसन्तोत्सवम् अनुभवन् अबलाजनः पटुः अपि नि
अपि प्रियकण्ठस्य जिघृक्षया ग्रहीतुम् आलिङ्गितुम् इ
आसनरज्जुपरिग्रहे पीठरज्जुग्रहणे भुजलतां बाहुलतां ज
मैथिल्यं, डलयोरभेदः, अनयत् दोलाक्रीड़ासु पतनभयनाटि
तेन प्रियकण्ठमाश्लिष्यत् इत्यर्थः ॥ ४६ ॥

त्यजतेति। बतेति आमन्त्रणे। "खेदानुकम्पासन्तो
विस्मयामन्त्रणे बत" इत्यमरः। बत अङ्गना मानं को
त्यजत। तदुक्तम् "स्त्रीणामीर्ष्याकृतः कोपो मानोऽन्या
ङ्गिनि प्रिये" इति। विग्रहैः विरोधैः अलं विग्रहो न का

अथ यथासुखमार्त्तवमुत्सवं
समनुभूय विलासवतीसखः ।
नरपतिश्चकमे मृगयारतिं
स मधुमन्मधुमन्मथसन्निभः ॥ ४८ ॥

परिचयं चललक्ष्यनिपातने
भयरुषोश्च तदिङ्गितबोधनम् ।
श्रमजयात् प्रगुणाञ्च करोत्यसौ
तनुमतोऽनुमतः सचिवैर्ययौ ॥ ४९ ॥

र्थः गतम् अतीतं चतुरम् उपभोगक्षमं वयः यौवनं पुनः न
। न आगच्छति, इत्येवंरूपे अरमते अराभिप्राये। नपुंसके
े क्तः। परभृताभिः कोकिलाभिः निवेदिते सति इव
जनः रमते स्म रेमे, कोकिलाकूजितोद्दीपितस्मरः स्त्रीजनः
मयासनभयादिवोच्छृङ्खलमखेलत् इत्यर्थः ॥ ४७ ॥

अथेति। अथ अनन्तरं मधुं मथ्नातीति मधुमत् विष्णुः।
पदादित्वात् क्विप्। मधुः वसन्तः मथ्नातीति मथः।
ाच्च। मनसः मथः मन्मथः कामः तेषां सन्निभः सदृशः
मधुमन्मथसन्निभः सः नरपतिः दशरथः विलासवतीसखः
ीसहचरः सन् ऋतुः प्राप्तोऽस्य आर्त्तवः तम् उत्सवं वसन्तोत्-
ं यथासुखं समनुभूय मृगयारतिं मृगयाविहारं चकमे
चकाङ्क्ष ॥ ४८ ॥

व्यसनासक्तदोषं परिहरन्नाह, परिचयमिति। असौ मृगया
चललक्ष्याणि मृगगवयादीनि तेषां निपातने परिचयम् अभ्यासं
रोति, भयरुषोः भयक्रोधयोः तदिङ्गितबोधनं तेषां चल-
क्ष्याणाम् इङ्गितस्य चेष्टितस्य भयादिविकारभूतस्य बोधनं

मृगवनोपगमक्षमवेषभृत्
विपुलकण्ठनिषक्तशरासनः।
गगनमश्वखुरोद्धतरेणुभि-
र्नृसविता स वितानमिवाकरोत् ॥ ५० ॥

ग्रथितमौलिरसौ वनमालया
तरुपलाशसवर्णतनुच्छदः।
तुरगवल्गनचञ्चलकुण्डलः
विरुरुचे रुरुचेष्टितभूमिषु ॥ ५१ ॥

श्यानं च करोति, तनुं शरीरं श्रमस्य जयात् निरासात् प्रगु
प्रकृष्टलाघववातिगुणवतीं च करोति। अतः हेतोः सचि
अनुमतः अनुमोदितः सन् ययौ। सर्वञ्चैतद् युद्धोपयोगीत्य
तदपेक्षया मृगयाप्रवृत्तिर्न तु व्यसनितया इति भावः ॥ ४९ ॥

मृगेति। मृगाणां वनं तस्य उपगमः प्राप्तिः तस्य क्षम
अर्हं वेषं बिभर्त्तीति सः तथोक्तः। मृगयाविहारानुगुणवेषधा
इत्यर्थः। विपुलकण्ठे निषक्तशरासनः लग्नधन्वा, ना सवित
इव नृसविता पुरुषश्रेष्ठः। उपमितसमासः। सः रा
अश्वखुरोद्धतरेणुभिः गगनं वितानं तुच्छम् असत् इव अक
रोत् गगनं नालक्ष्यत इत्यर्थः। "वितानं तुच्छमन्दयोः" इ
विश्वः। अथवा सवितानम् इत्येकं पदं, सवितानम् उल्लोच
सहितमिव अकरोत्। "अस्त्री वितानमुल्लोचः" इत्यमरः ॥ ५०

ग्रथितेति। वनमालया वनपुष्पस्रजा ग्रथितमौलिः ब
धम्मिल्लः तरूणां पलाशैः पत्रैः सवर्णः समानः तनुच्छदः व
यस्य सः तथोक्तः। इदं च वर्मणः पलाशसावर्ण्याभिधा
मृगादीनां विश्वासार्थम्। तुरगस्य वल्गनेन गतिविशेषे

तनुलताविनिवेशितविग्रहाः
भ्रमरसंक्रमितेक्षणवृत्तयः ।
ददृशुरध्वनि तं वनदेवताः
सुनयनं नयनन्दितकोशलम् ॥ ५२ ॥

श्वगणिवागुरिकैः प्रथमास्थितं
व्यपगतानलदस्यु विवेश सः ।
स्थिरतुरङ्गमभूमि निपानवत्
मृगवयोगवयोपचितं वनम् ॥ ५३ ॥

कुण्डलः असौ दशरथः ककुभिः मृगविशेषैः चेष्टिताः
ताः याः भूमयः तासु विरुरुचे विदिद्युते ॥ ५१ ॥

तन्विति । तनुषु लतासु विनिवेशितविग्रहाः संक्रमित-
: भ्रमरेषु संक्रमिताः ईक्षणवृत्तयः दृग्व्यापाराः यासां
वनदेवताः सुनयनं सुलोचनं नयेन नीत्या नन्दिताः
ताः कोशलाः येन तं दशरथमध्वनि ददृशुः । प्रसन्नपावन-
तं देवता अपि गूढवृत्त्या ददृशुः इत्यर्थः ॥ ५२ ॥

श्वगणीति । सः दशरथः शुनां गणः सः एषामस्तीति
णिनः श्वग्राहिणः तैः वागुरा मृगबन्धनरज्जुः । "वागुरा
बन्धनी" इत्यमरः । तया चरन्तीति वागुरिकाः जालिकाः ।
ति" इति ठक्प्रत्ययः । "द्वौ वागुरिकजालिकौ" इत्यमरः ।
प्रथमम् आस्थितम् अधिष्ठितं व्यपगताः अनलाः दावाग्नयः
: तस्कराश्च यस्मात् तथोक्तम् । "दस्युतस्करमोषकाः"
मरः । "कारयेद् वनविशोधनमादौ मातुरन्तिकमपि
विभुः । आप्तशस्त्रानुगतः प्रविशेद् वा सङ्कटे च गहने न
तिष्ठेत् ॥" इति कामन्दकः । स्थिरा दृढा पङ्कादिरहिता

अथ नभस्य इव त्रिदशायुधं
कनकपिङ्गतडिद्गुणसंयुतम्।
धनुरधिज्यमनाधिरुपाददे
नरवरो रवरोषितकेशरी ॥ ५४ ॥

तस्य स्तनप्रणयिभिर्मुहुरेणशावै-
र्व्याहन्यमानहरिणीगमनं पुरस्तात्।
आविर्बभूव कुशगर्भमुखं मृगाणां
यूथं तदग्रसरगर्वितकृष्णसारम् ॥ ५५ ॥

तुरङ्गमयोग्या भूमिः यस्य तत्, निपानवत् आहावकु
"आहावस्तु निपानं स्यात् उपकूपजलाशये" इत्यमरः।
हरिणादिभिः वयोभिः पक्षिभिः गवयैः गोसदृशैः अरण्यप
विशेषैश्च उपचितं समृद्धं वनं विवेश प्रविष्टवान् ॥ ५३ ॥

अथेति। अथ अनाधिः मनोव्यथारहितः नरवरः न
श्रेष्ठः रवेण धनुष्टङ्कारेण रोषिताः केशरिणः सिंहाः येन
राजा कनकम् इव पिङ्गः पिशङ्गः यः तड़िदेव गुणः मौर्वी
संयुतं त्रिदशायुधम् इन्द्रचापं नभस्यः भाद्रपदमासः इव
"स्युर्नभस्यप्रौष्ठपदभाद्रभाद्रपदाः समाः" इत्यमरः। अधि
अधिगतमौर्वीकं धनुः उपाददे जग्राह ॥ ५४ ॥

तस्येति। स्तनप्रणयिभिः स्तनपायिभिः एणशावैः हरि
शिशुभिः। "पृथुकः शावकः शिशुः" इत्यमरः। व्याहन्यम
तद्वत्सलतया तद्गमनानुसारेण मुहुर्मुहुः प्रतिषिध्यमानं हरि
णीनां गमनं गतिः यस्य तत्, कुशाः गर्भे येषां तानि मुखा
यस्य तत् कुशगर्भमुखं तस्य यूथस्य अग्रेसरः पुरःसरः गर्वि
दृप्तश्च कृष्णसारः यस्य तत् मृगाणां यूथम् कुलम्। "सजातीै

तत् प्रार्थितं जवनवाजिगतेन राज्ञा
तूणीमुखोद्धृतशरेण विशीर्णपङ्क्ति ।
श्यामीचकार वनमाकुलदृष्टिपातै-
र्वातेरितोत्पलदलप्रकरैरिवार्द्रैः ॥ ५६ ॥
लक्ष्यीकृतस्य हरिणस्य हरिप्रभावः
प्रेक्ष्य स्थितां सहचरीं व्यवधाय देहम् ।
आकर्णकृष्टमपि कामितया स धन्वी
बाणं कृपामृदुमनाः प्रतिसञ्जहार ॥५७॥

'यूथं तिरश्चां पुन्नपुंसकम्" इत्यमरः । तस्य दशरथस्य
तात् अग्रे आविर्बभूव । वसन्ततिलकं वृत्तम् ॥ ५५ ॥
तदिति । जवनः जवशीलः । "जुचङ्क्रम्य—" इत्या-
। युच्प्रत्ययः । "तरस्वी त्वरितो वेगी प्रजवी जवनो
" इत्यमरः । तं वाजिनम् अश्वं गतेन आरूढेन तूणी
धः "बह्वादिभ्यश्च" इति स्त्रियां ङीप् । तस्याः मुखात्
रात् उद्धृतशरेण राज्ञा प्रार्थितम् अभियातम् । "याञ्चा-
भियाने च प्रार्थना कथ्यते बुधैः" इति केशवः । अतएव
र्णा पङ्क्तिः सङ्घीभावः यस्य तत् मृगयूथं कर्तृ आर्द्रैः
त् अश्रुसिक्तैः आकुलाः भयचकिताः ये दृष्टिपाताः तैः
रितोत्पलदलप्रकरैः पवनकम्पितेन्दीवरदलवृन्दैः इव वनं
मीचकार ॥ ५६ ॥
लक्ष्यीकृतेति । हरिः इन्द्रः विष्णुः वा तस्य इव प्रभावः
र्थं यस्य सः तथोक्तः धन्वी धनुष्मान् सः नृपः । लक्ष्यी-
स्य वेद्धुमिष्टस्य हरिणस्य स्वप्रेयसः देहं व्यवधाय अनुरागात्
र्याय स्थितां सह चरतीति सहचरी । पचादिषु चरतेः

तस्यापरेष्वपि मृगेषु शरान् मुमुक्षोः
कर्णान्तमेत्य बिभिदे निबिड़ोऽपि मुष्टिः ।
त्रासातिमात्रचटुलैः स्मरतः सुनेत्रैः
प्रौढ़प्रियानयनविभ्रमचेष्टितानि ॥ ५८ ॥

उत्तस्थुषः सपदि पल्वलपङ्कमध्यात्
मुस्ताप्ररोहकवलावयवानुकीर्णम् ।
जग्राह स द्रुतवराहकुलस्य मार्गं
सुव्यक्तमार्द्रपदपङ्क्तिभिरायताभिः ॥५९॥

टित्करणात् ङीप् । यथाह वामनः, "अनुचरीति चरेष्टित्वा
इति । तां सहचरीं हरिणीं प्रेक्ष्य कामितया स्वयं कामुकत्वा
कृपार्द्रमनाः करुणार्द्रचित्तः सन् आकर्णकृष्टमपि दुष्पू
संहरमपि इत्यर्थः बाणं प्रतिसंजहार नैपुण्यात् इत्यर्थः । नैपु
तु धन्वीत्यनेन गम्यते ॥ ५७ ॥

तस्येति । त्रासाद्भयात् अतिमात्रचटुलैः अत्यन्तच
सुनेत्रैः प्रौढ़प्रियानयनविभ्रमचेष्टितानि प्रगल्भकान्ताविलोच
विलासव्यापारान् सादृश्यात् स्मरतः अपरेषु अपि मृगेषु श
मुमुक्षोः मोक्तुमिच्छोः तस्य नृपस्य निविड़ः दृढ़ः अपि मु
कर्णान्तम् एत्य प्राप्य बिभिदे स्वयमेव भिद्यते स्म । भिदेः क
कर्त्तरि लिट् । कामिनस्तस्य प्रियाविभ्रमस्मृतिजनितम
तिरेकात् मुष्टिभेदो न तु अनैपुण्यादिति तात्पर्य्यार्थः ॥ ५८

उत्तस्थुष इति । सः नृपः मुस्ताप्ररोहाणां मुस्ताङ्कुरा
कवलाः ग्रासाः तेषाम् अवयवैः अर्धचर्वितसुखण्डैरिभिः कव
अनुकीर्णं व्याप्तम् आयताभिः दीर्घाभिः आर्द्रपदपङ्क्ति

तं वाहनादवनतोत्तरकायमीषत्
विध्यन्तमुद्धृतसटाः प्रतिहन्तुमीषुः ।
नात्मानमस्य विविदुः सहसा वराहाः
वृक्षेषु विद्धमिषुभिर्जघनाश्रयेषु ॥ ६० ॥
तेनाभिघातरभसस्य विकृष्य पत्री
वन्यस्य नेत्रविवरे महिषस्य मुक्तः ।
निर्भिद्य विग्रहमशोणितलिप्तपुङ्ख-
स्तं पातयां प्रथममास पपात पश्चात् ॥६१॥

तं सपदि पल्वलपङ्कमध्यात् उत्तस्थुषः उत्थितस्य द्रुतवराह-स्य पलायितवराहयूथस्य मार्गं जग्राह अनुससार ॥ ५९ ॥

तमिति । वराहाः वाहनात् अश्वात् ईषत् अवनतोत्तर-किञ्चित् आनतपूर्वकायं विध्यन्तं प्रहरन्तं तं नृपम् उद्धृत-: उद्धृकेसराः सन्तः । "सटा जटाकेशरयोः" इति केशवः । हन्तुम् ईषुः प्रतिहर्तुम् ऐच्छन् अस्य नृपस्य इषुभिः सहसा णाम् आश्रयेषु अवष्टम्भेषु विद्धम् आत्मानं न विविदुः । वराहाणां मनस्वित्वं नृपस्य हस्तलाघवं चोक्तम् ॥ ६० ॥

तेनेति । अभिघाते रभसः औत्सुक्यं यस्य तस्य अभि-मुद्यतस्य इत्यर्थः, वन्यस्य वने भवस्य महिषस्य नेत्रविवरे मध्ये तेन नृपेण विकृष्य आकृष्य मुक्तः पत्री शरः विग्रहं देहं निर्भिद्य विदार्य शोणितलिप्तो न भवतीति अशो-लिप्तः पुङ्खः यस्य सः तथोक्तः सन् तं महिषं प्रथमं पातया-स्वयं पश्चात् पपात । "कृञ्चानुप्रयुज्यते लिटि" इत्यत्र शब्दस्य व्यवहितविपर्यस्तप्रयोगनिवृत्त्यर्थत्वात् "पातयां

प्रायो विषाणपरिमोक्षलघूत्तमाङ्गान्
खड्गांश्चकार नृपतिर्निशितैः क्षुरप्रैः।
शृङ्गं स दृप्तविनयाधिकृतः परेषा-
मत्युच्छ्रितं न ममृषे न तु दीर्घमायुः ॥६२॥

व्याघ्रानभीरभिमुखोत्पतितान् गुहाभ्यः
फुल्लासनाग्रविटपानिव वायुरुग्णान्।
शिक्षाविशेषलघुहस्ततया निमेषात्
तूणीचकार शरपूरितवक्त्ररन्ध्रान् ॥ ६३ ॥

प्रथमसमास" इत्यपप्रयोग इति पाणिनीयाः। यथाह वार्तिक-
कारः "विपर्यासनिवृत्त्यर्थश्च व्यवहितनिवृत्त्यर्थंच" इति ॥६१॥

प्राय इति। नृपतिः निशितैः क्षुरप्रैः शरविशेषैः खड्गान्
खड्गाख्यान् मृगान्। "गण्डके खड्गखड्गिनौ" इत्यमरः। प्रा-
बाहुल्येन विषाणपरिमोक्षेण शृङ्गभङ्गेन लघूनि अगुरूणि उत्त-
माङ्गानि शिरांसि येषां तान् चकार नतु अवधीत् इत्यर्थः।
कुतः? दृप्तविनयाधिकृतः दुष्टनिग्रहनियुक्तः सः राजा परे-
प्रतिकूलानाम् अत्युच्छ्रितम् उन्नतं शृङ्गं विषाणं प्राधान्यं च।
"शृङ्गं प्राधान्यसान्वोश्च" इत्यमरः। न ममृषे न सेहे, दीर्घ-
आयुः जीवितकालम्। "आयुर्जीवितकालो ना" इत्यमरः।
न ममृषे इति न, किन्तु ममृषे एव इत्यर्थः ॥ ६२ ॥

व्याघ्रानिति। अभीः निर्भीकः स धन्वी गुहाभ्यः अभि-
मुखम् उत्पतितान् वायुना रुग्णान् भग्नान् फुल्लाः विक-
सिताः। "अनुपसर्गात् फुल्लक्षीवकृशोल्लाघाः" इति निष्ठात-
कारस्य लत्वनिपातः। ये असनस्य सर्जवृक्षस्य। "सर्जकासन-
बन्धूकपुष्पप्रियकजीवकाः" इत्यमरः। अग्रविटपाः तान् इव

निर्घातोग्रैः कुञ्जलीनान् जिघांसु-
र्ज्यानिर्घोषैः क्षोभयामास सिंहान् ।
नूनं तेषामभ्यसूयापरोऽभूत्
वीर्य्योदग्रे राजशब्दे मृगेषु ॥ ६४ ॥

तान् हत्वा गजकुलबद्धतीव्रवैरान्
काकुत्स्थः कुटिलनखाग्रलग्नमुक्तान् ।
आत्मानं रणकृतकर्मणां गजाना-
मानृण्यं गतमिव मार्गणैरमंस्त ॥ ६५ ॥

तान्, इषुधिभूतान् इत्यर्थः । व्याघ्राणां चित्ररूपत्वात्
माने फुल्लविशेषणम् । शरैः पूरितानि वक्त्ररन्ध्राणि येषां
न् व्याघ्रान् शिक्षाविशेषेण अभ्यासातिशयेन लघुहस्ततया
घुहस्ततया निमेषात् तूणीचकार तूर्णं शरैः पूरितवान्
र्थः ॥ ६३ ॥

निर्घातेति । कुञ्जेषु लीनान् । "निकुञ्जकुञ्जौ वा क्लीवे
तादिपिहितोदरे" इत्यमरः । सिंहान् जिघांसुः हन्तु-
च्छुः निर्घातः व्योमोत्थितः औत्पातिकः शब्दविशेषः
द्वत् उग्रैः रौद्रैः ज्यानिर्घोषैः मौर्वीशब्दैः क्षोभयामास ।
गोत्प्रेक्ष्यते, तेषां सिंहानां सम्बन्धिनि वीर्य्येण उदग्रे उन्नते
गेषु विषये यः राजशब्दः तस्मिन् अभ्यसूयापरः अभूत् नूनम्,
न्यथा कथमेतानन्विष्य हन्यात् इत्यर्थः । "मृगाणाम्" इति
ठे समासे गुणभूतत्वात् राजशब्देन सम्बन्धो दुर्घटः ।
लिनीवृत्तम् । "शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः"
ति लक्षणात् ॥ ६४ ॥

तानिति । काकुत्स्थः दशरथः गजकुलेषु बद्धं तीव्रं

चमरान् परितः प्रवर्त्तिताश्वः
क्वचिदाकर्णविक्लष्टभल्लवर्षी ।
नृपतीनिव तान् वियोज्य सद्यः
सितबालव्यजनैर्जगाम शान्तिम् ॥ ६६ ॥

अपि तुरगसमीपादुत्पतन्तं मयूरं
न स रुचिरकलापं बाणलक्ष्यीचकार ।
सपदि गतमनस्कश्चित्रमाल्यानुकीर्णे
रतिविगलितबन्धे केशपाशे प्रियायाः ॥६७॥

वरं यैः तान् कुटिलेषु नखाग्रेषु लग्नाः मुक्ताः गजकुम्भमौक्तिकानि येषां तान्, सिंहान् हत्वा आत्मानं रणेषु कृतःकर्मणां कृतोपकाराणां गजानाम् आनृण्यम् अनृणत्वं मार्गणैः शरैः । "मार्गणो याचके शरे" इति विश्वः । गतं प्राप्तवन्तम् इव अमंस्त मेने ॥ ६५ ॥

चमरानिति । क्वचित् चमरान् परितः । "अभितः परितः समया—" इत्यादिना द्वितीया । प्रवर्त्तिताश्वः प्रधावितताश्वः आकर्णविकृष्टभल्लान् इषुविशेषान् वर्षतीति तथोक्तः सः नृपः, नृपतीन् इव, तान् चमरान् सितबालव्यजनैः शुभ्रचामरैः वियोज्य विरहय्य सद्यः शान्तिं जगाम । शूराणां परकीयमैश्वर्य्यमेवासह्यं न तु जीवितम् इति भावः । औपच्छन्दसिकं वृत्तम् ॥ ६६ ॥

अपीति । सः नृपः तुरगसमीपात् उत्पतन्तम् अपि सुप्रहारमपि इत्यर्थः रुचिरकलापं भासुरबर्हं मह्याम् अतिशयेन रौतीति मयूरः बर्ही तम् । पृषोदरादित्वात् साधुः । तं चित्रेण माल्येन अनुकीर्णे रतौ विगलितबन्धे प्रियायाः

तस्य कर्कशविहारसम्भवं
स्वेदमाननविलग्नजालकम् ।
आचचाम सतुषारशीकरो-
भिन्नपल्लवपुटो वनानिलः ॥ ६८ ॥
इति विस्मृतान्यकरणीयमात्मनः
सचिवावलम्बितधुरं धराधिपम् ।
परिवृद्धरागमनुबन्धसेवया
मृगया जहार चतुरेव कामिनी ॥ ६९ ॥

केशपाशे सपदि गतमनस्कः प्रवृत्तचित्तः । "उरःप्रभृतिभ्यः कप्" इति कप्प्रत्ययः । न बाणलक्ष्यीचकार न प्रजहार इत्यर्थः ॥ ६७ ॥

तस्येति । कर्कशविहारात् अतिव्यायामात् सम्भवः यस्य तम् आनने विलग्नजालकं बद्धकदम्बकं तस्य नृपस्य स्वेदं सतुषारशीकरः शिशिराम्बुकणसहितः भिन्नाः निर्दलिताः पल्लवानां पुटाः कोशाः येन सः वनानिलः आचचाम जहार इत्यर्थः । रथोद्धतावृत्तमेतत् ॥ ६८ ॥

इतीति । इति पूर्वोक्तप्रकारेण आत्मनः विस्मृतम् अन्यत् करणीयं कार्य्यं येन तं विस्मृतात्मकार्य्यान्तरम् इत्यर्थः सचिवैः अवलम्बिता धृता धूः यस्य तम् । "ऋक्पूरब्धूः पथामानक्षे" इति समासान्तः अच्प्रत्ययः । अनुबन्धसेवया सन्ततसेवया परिवृद्धः रागः यस्य तं धराधिपं, मृग्यन्ते यस्यां मृगाः इति मृगया । "परिचर्य्या-परिसर्य्या-मृगयाटाट्यादीनामुपसंख्या-नम्" इति शप्रत्ययान्तो निपातः । चतुरा विदग्धा कामिनी इव, जहार आचकर्ष । न जातु कामः कामानामुपभोगेन

स ललितकुसुमप्रवालशय्यां
ज्वलितमहौषधिदीपिकासनाथाम् ।
नरपतिरतिवाहयाम्बभूव
क्वचिदसमेतपरिच्छदस्त्रियामाम् ॥ ७० ॥
उषसि स गजयूथकर्णतालैः
पटुपटहध्वनिभिर्विनीतनिद्रः ।
अरमत मधुराणि तत्र शृखन्
विहगविकूजितवन्दिमङ्गलानि ॥ ७१ ॥
अथ जातु रुरोर्गृहीतवर्त्मा
विपिने पार्श्वचरैरलक्ष्यमाणः ।

शाम्यति । हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥" इति
भावः ॥ ६९ ॥

स इति । सः नरपतिः ललितानि कुसुमानि प्रवालानि
पल्लवानि शय्या यस्यां तां ज्वलिताभिः महौषधिभिः ए
दीपिकाभिः सनाथां तत्प्रधानामित्यर्थः । त्रियामां रात्रिं
क्वचित् असमेतपरिच्छदः परिहृतपरिजनः सन् इत्यर्थः
अतिवाहयाम्बभूव गमयामास । पुष्पिताग्रावृत्तम् ॥ ७० ॥

उषसीति । उषसि प्रातः पटूनां पटहानाम् इव ध्वनिः
येषां तैः गजयूथानां कर्णैः एव तालैः वाद्यप्रभेदैः विनीतनिद्रः
सः नृपः तत्र वने मधुराणि विहगानां खगानां विकूजितानि
एव वन्दिनां मङ्गलानि मङ्गलगीतानि शृखन् अरमत ॥ ७१ ॥

अथेति । अथ जातु कदाचित् रुरोः मृगस्य गृहीतवर्त्मा
स्वीकृतरुरुमार्गः विपिने वने पार्श्वचरैः अलक्ष्यमाणः तुरग-

श्रमफेनमुचा तपस्विगाढ़ां
तमसां प्राप नदीं तुरङ्गमेण ॥ ७२ ॥
कुम्भपूरणभवः पटुरुच्चै-
रुच्चचार निनदोऽम्भसि तस्याः ।
तत्र स द्विरदबृंहितशङ्की
शब्दपातिनमिषुं विससर्ज ॥ ७३ ॥
नृपतेः प्रतिषिद्धमेव तत्
कृतवान् पङ्क्तिरथो विलङ्घ्य यत् ।
अपथे पदमर्पयन्ति हि
श्रुतवन्तोऽपि रजोनिमीलिताः ॥ ७४ ॥

वेगात् इत्यर्थः । श्रमेण फेनमुचा सफेनं स्विद्यता इत्यर्थः । तुरङ्गमेण तपस्विभिः गाढ़ामवगाढ़ां सेवितां तमसां नाम नदीं सरितं प्राप ॥ ७२ ॥

कुम्भेति । तस्याः तमसायाः अम्भसि कुम्भपूरणेन भवः उत्पन्नः । पचाद्यच् । पटुः मधुरः उच्चैः गम्भीरः निनदः ध्वनिः उच्चचार उदियाय, तत्र निनदे सः नृपः द्विरदबृंहितं शङ्कते इति द्विरदबृंहितशङ्की सन् शब्देन शब्दानुसारेण पततीति शब्दपातिनम् इषुं विससर्ज । स्वागतावृत्तम् ॥ ७३ ॥

नृपतेरिति । तत् कर्म नृपतेः क्षत्रियस्य प्रतिषिद्धम् एव निषिद्धम् एव यत् एतत् कर्म गजवधरूपं पङ्क्तिरथः दशरथः विलङ्घ्य, “लक्ष्मीकामो युद्धादन्यत्र करिवधं न कुर्य्यात्” इति शास्त्रम् उल्लङ्घ्य, कृतवान् । ननु विदुषस्तस्य कथमीदृग्विचेष्टितम् अत आह, अपथ इति । श्रुतवन्तः अपि विद्वांसः अपि

हा तातेति क्रन्दितमाकर्ण्य विषस-
स्तस्यान्विष्यन् वेतसगूढं प्रभवं सः।
शल्यप्रोतं प्रेक्ष्य सकुम्भं मुनिपुत्रं
तापादन्तःशल्य इवासीत् क्षितिपोऽपि ॥७५॥
तेनावतीर्य्य तुरगात् प्रथितान्वयेन
पृष्टान्वयः स जलकुम्भनिषसदेहः।
तस्मै द्विजेतरतपस्विसुतं स्खलद्भि-
रात्मानमक्षरपदैः कथयाम्बभूव ॥ ७६ ॥

रजोनिमीलिताः रजोगुणाकुलाः सन्तः न पन्था इति अपथम्। "पथो विभाषा" इति वा समासान्तः। "अपथं नपुंसकम्" इति नपुंसकत्वम्। "अपन्थास्त्वपथं तुल्यम्" इत्यमरः। तस्मिन् अपथे अमार्गे पदम् अर्पयन्ति हि निक्षिपन्ति हि, प्रवर्त्तन्ते इत्यर्थः। वैतालीयं वृत्तम् ॥ ७४ ॥

हा तातेति। हा इति आर्त्तौ। तातः जनकः। "हा विषादाशुगर्त्तिषु" इति, "तातस्तु जनकः पिता" इति च अमरः। हा तात! इति क्रन्दितं क्रोशनम् आकर्ण्य विषसः भग्नोत्साहः सन्। तस्य क्रन्दितस्य वेतसैः गूढं छन्नं प्रभवति अस्मात् इति प्रभवः कारणं तम् अन्विष्यन् शल्येन शरेण प्रोतं स्यूतम्। "शल्यं शङ्कौ शरे वंशे" इति विश्वः। सकुम्भं मुनिपुत्रं प्रेक्ष्य सः क्षितिपः अपि तापात् दुःखात् अन्तःशल्यं यस्य सः अन्तःशल्यः इव आसीत्। मत्तमयूरं वृत्तम् ॥ ७५ ॥

तेनेति। प्रथितान्वयेन प्रख्यातवंशेन। एतेन पापभीरुत्वं सूचितम्। तेन राज्ञा तुरगात् अवतीर्य्य पृष्टान्वयः ब्रह्महत्या-शङ्कया पृष्टकुलः जलकुम्भनिषसदेहः सः मुनिपुत्रः तस्मै राज्ञे

तच्चोदितश्च तमनुद्धृतशल्यमेव
पित्रोः सकाशमवसन्नदृशोर्निनाय
ताभ्यां तथागतमुपेत्य तमेकपुत्र-
मज्ञानतः स्वचरितं नृपतिः शशंस ॥ ७७ ॥

स्वलद्भिः अशक्तिवशादर्द्धोच्चारितैः इत्यर्थः। अक्षरप्रायैः पदैः अक्षरपदैः आत्मानं द्विजेतरश्चासौ तपस्विसुतश्च तं द्विजेतर-तपस्विसुतं कथयाम्बभूव। न तावत् त्रैवर्णिक एवाहमस्मि किन्तु करणः। "वैश्यात् तु करणः शूद्रायाम्" इति याज्ञ-वल्क्यः। कुतो ब्रह्महत्या इत्यर्थः। तथा च रामायणे, "ब्रह्म-हत्याकृतं पापं हृदयादपनीयताम्। न द्विजातिरहं राजन्! मा भूत् ते मनसो व्यथा। शूद्रायामस्मि वैश्येन जातो जन-पदाधिप!॥" इति ॥ ७६ ॥

तदिति। तच्चोदितः तेन पुत्रेण चोदितः पितृसमीपं प्रापय इत्युक्तः सः नृपतिः अनुद्धृतशल्यम् अनुत्पाटितशरम् एव तं मुनिपुत्रम् अवसन्नदृशोः नष्टचक्षुषोः अन्धयोः इत्यर्थः। पित्रोः मातापित्रोः। "पिता मात्रा" इत्येकशेषः। सकाशं समीपं निनाय। इदञ्च रामायणविरुद्धम्, तत्र "अथाहमेकस्तं देशं नीत्वा तौ भृशदुःखितौ। अस्पर्शयमहं पुत्रं तं मुनिं सह भार्य्यया॥" इति नदीतीर एव मृतं पुत्रं प्रति पित्रोरा-नयनाभिधानात्। तथागतं वेतसगूढ़म् एकश्चासौ पुत्रश्च एकपुत्रः तम्। एकग्रहणं पित्रोरनन्यगतिकत्वसूचनार्थम्। तं मुनिपुत्रं उपेत्य सन्निकृष्टं गत्वा अज्ञानतः करिभ्रान्त्या स्वच-रितं स्वकृतं ताभ्यां मातापितृभ्याम्। क्रियाग्रहणाच्चतुर्थी। शशंस कथितवान् ॥ ७७ ॥

तौ दम्पती बहु विलप्य शिशोः प्रहर्त्रा
शल्यं निखातमुदहारयतामुरस्तः।
सोऽभूत् परासुरथ भूमिपतिं शशाप
हस्तार्पितैर्नयनवारिभिरेव वृद्धः॥ ७८॥

दिष्टान्तमाप्स्यति भवानपि पुत्रशोकात्
अन्त्ये वयस्यहमिवेति तमुक्तवन्तम्।
आक्रान्तपूर्वमिव मुक्तविषं भुजङ्गं
प्रोवाच कोशलपतिः प्रथमापराद्धः॥ ७९॥

ताविति। तौ जाया च पतिश्च दम्पती। राजदन्तादिषु जायाशब्दस्य दम्भावो जम्भावश्च विकल्पेन निपातितः। "दम्पती जम्पती जायापती भार्य्यापती च तौ" इत्यमरः। बहु विलप्य भूरि परिदेव्य। "विलापः परिदेवनम्" इत्यमरः। शिशोः उरस्तः वक्षसः। "पञ्चम्यास्तसिल्" निखातं शल्यं शरं प्रहर्त्रा राज्ञा उदहारयताम् उद्धारयामासतुः, सः शिशुः परासुः गतप्राणः अभूत्, अथ वृद्धः हस्तार्पितैः नयनवारिभिः एव शापदानस्य जलपूर्वकत्वात् तैः एव भूमिपतिं शशाप॥७८॥

दिष्टेति। हे राजन्! भवान् अपि अन्त्ये वयसि अहम् इव पुत्रशोकात् दिष्टान्तं कालावसानं मरणम् इत्यर्थः "दिष्टः काले च दैवे स्याद्दिष्टम्" इति विश्वः। आप्स्यति प्राप्स्यति इत्युक्तवन्तम्। आक्रान्तः पादाहतः पूर्वम् आक्रान्तपूर्वः। सुप्सुपेति समासः। तं प्रथममपकृतम् इत्यर्थः। मुक्तविषम् अपकारात् पश्चादुत्सृष्टविषं भुजङ्गम् इव स्थितं तं वृद्धं प्रति प्रथमापराद्धः प्रथमापराधी। कर्त्तरि क्तः। इदं च सकृत्

शापोऽप्यदृष्टतनयाननपद्मशोभे
सानुग्रहो भगवता मयि पातितोऽयम् ।
कृष्यां दहन्नपि खलु क्षितिमिन्धनेद्धो-
बीजप्ररोहजननीं ज्वलनः करोति ॥ ८० ॥

इत्थं गते गतघृणः किमयं विधत्तां
वध्यस्तवेत्यभिहिता वसुधाधिपेन ।
एधान् हुताशनवतः स मुनिर्ययाचे
पुत्रं परासुमनुगन्तुमनाः सदारः ॥ ८१ ॥

रयमुक्तम् । कोशलपतिः दशरथः शापदानात् पश्चात् अपि
ां मुनिं प्रोवाच ॥ ७९ ॥

शाप इति । अदृष्टा तनयाननपद्मशोभा येन तस्मिन्
ुत्रके मयि भगवता पातितः । वज्रप्रायत्वात् पातित
ुक्तम् अयं पुत्रशोकात् म्रियस्व इत्येवंरूपः शापः अपि सानु-
ः इदकुमारीवरन्यायेनेष्टावाप्तेरन्तरीयकत्वात् सोपकारः एव ।
ग्राहकस्याप्यनुग्राहकत्वमर्थान्तरन्यासेनाह, कृष्यामिति ।
धनैः काष्ठैः इद्धः प्रज्वलितः ज्वलनः अग्निः कृष्यां कर्षणा-
म् "ऋदुपधाच्चाकॢपिचृतेः" इति क्यप् । क्षितिं दहन्
पि बीजप्ररोहाणां बीजाङ्कुराणां जननीम् उत्पादनक्षमां
ोति ॥ ८० ॥

इत्थमिति । इत्थं गते प्रवृत्ते सति वसुधाधिपेन राज्ञा,
गघृणः निष्करुणः हन्तृत्वान्निष्कृपः इत्यर्थः । अतएव तव
यः वधार्हः अयं जनः । अयमिति राज्ञो निर्वेदादनादरेण
ात्मनिर्देशः । किं विधत्ताम् इति अभिहितः उक्तः मया किं
धेयमिति विज्ञापितः इत्यर्थः सः मुनिः सदारः सभार्य्यः

प्राप्तानुगः सपदि शासनमस्य राजा
सम्पाद्य पातकविलुप्तधृतिर्निवृत्तः।
अन्तर्निविष्टपदमात्मविनाशहेतुं
शापं दधज्ज्वलनमौर्वमिवाम्बुराशिः॥८२॥

इति श्रीरघुवंशे महाकाव्ये कालिदासकृतौ
मृगयावर्णनं नाम नवमः सर्गः।

परासुं गतासुं पुत्रम् अनुगन्तुं मनः यस्य सः अनुगन्तुमना सन्। "तुं काममनसोरपि" इति मकारलोपः। हुताशन वतः साग्नीन् एधान् काष्ठानि ययाचे। न चात्मघातदोषः "अनुष्ठानासमर्थस्य वानप्रस्थस्य जीर्य्यतः। भृग्वग्निजलसम्पातै मरणं प्रविधीयते॥" इत्युक्तेः॥८१॥

प्राप्तेति। प्राप्तानुगः प्राप्तानुचरः राजा सपदि अस्य मुनेः शासनं काष्ठासम्भारस्वरूपं प्राक् एकोऽपि सम्पा प्राप्तानुचरत्वात् सम्पाद्य पातकेन मुनिवधरूपेण विलुप्तधृतिः नष्टोत्साहः सन् अन्तर्निविष्टपदम् अन्तर्लब्धस्थानम् आत्म विनाशहेतुं शापम् अम्बुराशिः औौर्वं ज्वलनं वड़वानलम् इव "औौर्वस्तु वाड़वो वड़वानलः" इत्यमरः। दधत् धृतवान् सन् निवृत्तः वनात् इति शेषः॥८२॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां
रघुवंशटीकायां सञ्जीवनीसमाख्यायाम् नवमः सर्गः।

---

# दशमः सर्गः ।

थिवीं शासतस्तस्य पाकशासनतेजसः ।
किञ्चिदूनमनूनर्द्धे शरदामयुतं ययौ ॥ १ ॥
चोपलेभे पूर्वेषामृणनिर्मोक्षसाधनम् ।
ाभिधानं स ज्योतिः सद्यः शोकतमोपहम् ॥२

श्रये नित्यमानन्दं रामनामकथामृतम् ।
सद्भिः स्वश्रवणैर्नित्यं पेयं पापं प्रणोदितुम् ॥

पृथिवीमिति । पृथिवीं शासतः पालयतः पाकशासन-
सः इन्द्रवर्चसः अनूनर्द्धेः महासमृद्धेः तस्य दशरथस्य
ञ्चिदूनम् ईषन्न्यूनं शरदां वत्सराणाम् । "स्याद्दृतौ वत्सरे
" इत्यमरः । अयुतं दशसहस्रं ययौ । "एकदशशत-
ाण्ययुतं लक्षं तथा प्रयुतम् । कोट्यर्बुदं च पद्मं स्थानात्
ं दशगुणं स्यात् ॥" इत्यार्य्यभट्टः । इदञ्च मुनिशापात्
वेदितव्यं न तु जननात् । "षष्टिवर्षसहस्राणि जातस्य
कौशिक ! दुःखेनोत्पादितश्चायं न रामं नेतुमर्हसि ॥"
रामायणविरोधात् । नाप्यभिषेकात् परं तस्यापि,
यश्विनीतमथ वर्महरं कुमारमादिश्य रक्षणविधौ विधिवत्
नाम्" इति कौमारानुष्ठितत्वाभिधानात् स एव विरोधः
॥ १ ॥

न चेति । सः दशरथः पूर्वेषां पितॄणाम् ऋणनिर्मोक्षसा-
। "एष वा अनृणो यः पुत्री" इति श्रुतेः । पितॄणाम्
विमुक्तिकारणं सद्यः शोकः एव तमः ; तत् अपहन्तीति

अतिष्ठत् प्रत्ययापेक्षसन्ततिः स चिरं नृपः।
प्राङ्मन्थादनभिव्यक्तरत्नोत्पत्तिरिवार्णवः॥ ३॥

ऋष्यशृङ्गादयस्तस्य सन्तः सन्तानकाङ्क्षिणः।
आरेभिरे जितात्मानः पुत्रीयामिष्टिमृत्विजः॥ ४॥

तस्मिन्नवसरे देवाः पौलस्त्योपप्लुता हरिम्।
अभिजग्मुर्निदाघार्त्ताश्छायावृक्षमिवाध्वगाः॥ ५॥

शोकतमोपहम्। अत्राभयङ्कर इतिवदुपपदेऽपि तदन्तवि-
माश्रित्य "अपल्लेशतमसोः इति डप्रत्ययः। सुताभि-
सुताख्यं ज्योतिः न उपलेभे न प्राप च॥ २॥

अतिष्ठदिति। प्रत्ययं हेतुम् अपेक्षत इति प्रत्ययापे-
सन्ततिः यस्य सः तथोक्तः। "प्रत्ययोऽधीनशपथज्ञानवि-
हेतुषु" इत्यमरः। सः नृपः, मन्थात् प्राक् अमन्थनात्
अनभिव्यक्ता अदृष्टा रत्नोत्पत्तिः यस्य सः अर्णवः इव, चि-
अतिष्ठत्। सामग्र्यभावाद्विलम्बो न तु वन्ध्यत्वात्
भावः॥ ३॥

ऋष्यशृङ्गेति। ऋष्यशृङ्गादयः ऋष्यशृङ्गो नाम
ऋषिः तदादयः ऋतुस्तौ वा यजन्तीति ऋत्विजः याज्ञि-
"ऋत्विग्दधृक्—" इत्यादिना क्विबन्तो निपातः। जिता-
जितान्तःकरणाः सन्तः सन्तानकाङ्क्षिणः पुत्रार्थिनः
दशरथस्य पुत्रीयां पुत्रनिमित्ताम्। "पुत्राच्छ च"
छप्रत्ययः। इष्टिं यागम् आरेभिरे प्रचक्रमिरे॥ ४॥

तस्मिन्निति। तस्मिन् अवसरे पुत्रकामेष्टिप्रवृत्ति-
पुलस्त्यस्य गोत्रापत्यं पुमान् पौलस्त्यः रावणः। तेन उपप्लु-
पीड़िताः सन्तः निदाघार्त्ताः घर्मातुराः अध्वानं गच्छन्ति

ते च प्रापुरुदन्वन्तं बुबुधे चादिपूरुषः ।
अव्याक्षेपो भविष्यन्त्याः कार्य्यसिद्धेर्हि लक्षणम् ॥६॥
भोगिभोगासनासीनं ददृशुस्तं दिवौकसः ।
तत्फणामण्डलोदर्च्चिर्मणिद्योतितविग्रहम् ॥७॥
श्रियः पद्मनिषण्णायाः क्षौमान्तरितमेखले ।

अध्वगाः पान्थाः । "अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु ड" इति डप्रत्ययः । छायाप्रधानं वृक्षं छायावृक्षम् इव । शाकपार्थिवादित्वात् समासः । हरिं विष्णुम् अभिजग्मुः ॥ ५ ॥

त इति । ते देवाश्च उदन्वन्तं समुद्रम् । "उदन्वानुदधौ च" इति निपातः । प्रापुः, आदिपूरुषः विष्णुश्च बुबुधे योगनिद्रां जहौ इत्यर्थः । गमनप्रतिबोधयोरविलम्बार्थौ चकारौ । तथाहि, अव्याक्षेपः गम्यस्य अव्यासङ्गः अविलम्बः इति यावत् । भविष्यन्त्याः कार्य्यसिद्धेः लक्षणं लिङ्गं हि । उक्तञ्च, "अनन्यपरता चास्य कार्य्यसिद्धेस्तु लक्षणम्" इति ॥ ६ ॥

भोगीति । द्यौः ओकः येषां ते दिवौकसः देवाः । पृषोदरादित्वात् साधुः । यद्वा दिवशब्दोऽदन्तोऽप्यस्ति । तथा च कुमारचरिते, "न शोभते तेन हि नो विना पुरं मरुत्वता वृत्रवधे यथा दिवम्" इति । तत्र "दिवु क्रीड़ादौ" इति धातोः "इगुपध—" इति कः, दिवम् ओकः येषाम् इति विग्रहः । भोगिनः शेषस्य भोगः शरीरम् । "भोगः सुखे स्त्र्यादिभृताहेश्च फणकाययोः" इत्यमरः । सः एव आसनं सिंहासनं तत्र आसीनम् उपविष्टम् । आसेः शानच्, "ईदासः" इतीकारादेशः । तस्य भोगिनः फणामण्डले ये उदर्च्चिषः उद्गतमयूखाः मणयः तैः द्योतितविग्रहं तं विष्णुं ददृशुः ॥ ७ ॥

अङ्के निक्षिप्तचरणमास्तीर्णकरपल्लवे ॥ ८ ॥
प्रबुद्धपुण्डरीकाक्षं बालातपनिभांशुकम्।
दिवसं शारदमिव प्रारम्भसुखदर्शनम् ॥ ९ ॥
प्रभानुलिप्तश्रीवत्सं लक्ष्मीविभ्रमदर्पणम्।
कौस्तुभाख्यमपां सारं बिभ्राणं बृहतोरसा ॥१०॥
बाहुभिर्विटपाकारैर्दिव्याभरणभूषितैः।
आविर्भूतमपां मध्ये पारिजातमिवापरम् ॥११॥

श्रिय इति। कीदृशं विष्णुम्? पद्मे निषण्णायाः उपविष्टायाः श्रियः क्षौमान्तरिता दुकूलव्यवहिता मेखला यस्य तस्मिन्, आस्तीर्णौ करपल्लवौ पाणिपल्लवौ यस्मिन्। विशेषणद्वयेनापि चरणयोः सौकुमार्य्यात् कटिमेखलास्पर्शासहत्वं सूच्यते। तस्मिन् अङ्के निक्षिप्तौ चरणौ येन तम् ॥ ८ ॥

प्रबुद्धेति। पुनः कीदृशम्? प्रबुद्धे विकसिते पुण्डरीके इव अक्षिणी यस्य तं दिवसे तु पुण्डरीकम् एव अक्षि यस्य इति विग्रहः, बालातपनिभम् अंशुकं यस्य तं पीताम्बरधरम् इत्यर्थः। अन्यत्र बालातपव्याजांशुकम् इत्यर्थः। "निभो व्याजसदृक्षयोः" इति विश्वः। प्रकृष्टः आरम्भः योगः येषां ते प्रारम्भाः योगिनः तेषां सुखदर्शनम्। अन्यत्र प्रारम्भ आदौ सुखदर्शनं शारदं शरत्सम्बन्धिनं दिवसमिव स्थितम् ॥ ९ ॥

प्रभेति। पुनः किंविधम्? प्रभया अनुलिप्तम् अनुरञ्जितं श्रीवत्सं नाम लाञ्छनं येन तं लक्ष्म्याः विभ्रमदर्पणं कौस्तुभः इति आख्या यस्य तम्। अपां समुद्राणां सारं स्थिरांशं अम्मयमणिम् इत्यर्थः। बृहता उरसा बिभ्राणम् ॥ १० ॥

बाहुभिरिति। विटपाकारैः शाखाकारैः दिव्याभरण-

त्यस्त्रीगण्डलेखानां मदरागविलोपिभिः ।
हेतिभिश्चेतनावद्भिरुदीरितजयस्वनम् ॥ १२ ॥
मुक्तशेषविरोधेन कुलिशव्रणलक्ष्मणा ।
उपस्थितं प्राञ्जलिना विनीतेन गरुत्मता ॥१३॥
योगनिद्रान्तविशदैः पावनैरवलोकनैः ।

षितैः बाहुभिः उपलक्षितम् । अतएव अपां सैन्धवानां मध्ये
आविर्भूतम् अपरं द्वितीयं पारिजातमिव स्थितम् ॥ ११ ॥

दैत्येति । दैत्यस्त्रीगण्डलेखानामसुराङ्गनागण्डस्थलीनां
: मदरागः तं विलुम्पन्ति हरन्तीति मदरागविलोपिनः तैः
तनावद्भिः सजीवैः हेतिभिः सुदर्शनादिभिः शस्त्रैः । "रवेरर्चिश्च
अस्त्र वह्निज्वाला च हेतयः" इत्यमरः । उदीरितजयस्वनं
जयशब्दमुद्घोषयन्तीभिः मूर्त्तिमतीभिः अस्त्रदेवताभिरुपास्य-
मानम् इत्यर्थः ॥ १२ ॥

मुक्तेति । मुक्तः भगवत्सन्निधानात् त्यक्तः शेषेण अहीश्वरेण
ह विरोधः सहजमपि वैरं येन तेन कुलिशव्रणाः अमृताहरण-
काले इन्द्रयुद्धे ये वज्रप्रहाराः त एव लक्ष्माणि यस्य सः तेन,
बद्धः अञ्जलिः येन तेन प्राञ्जलिना प्रबद्धाञ्जलिना इत्यर्थः ।
विनीतेन अनुद्धतेन गरुत्मता उपस्थितम् उपासितम् । पुरा किल
भगवता विष्णुना मातलिप्रार्थितेन तद्दुहितुर्गुणकेश्याः पत्युः
कस्यचित् सर्पस्य गरुडादभयदाने कृतं स्वविपक्षरक्षणक्षुभितं
खगराजं त्वद्वोढाहं त्वत्तो बलाढ्य इति गर्वितं स्ववामतर्जनी-
भारेणैव भङ्क्त्वा भगवान् विनिनायेति महाभारतीयां कथां
सूचयति विनीतेनेत्यनेन ॥ १३ ॥

योगेति । योगः मनसो विषयान्तरव्यावृत्तिः तद्रूपा या
निद्रा तस्याः अन्ते अवसाने विशदैः प्रसन्नैः पावनैः शोधनैः

भृग्वादीननुगृह्णन्तं सौखशायनिकानृषीन् ॥१४

प्रणिपत्य सुरास्तस्मै शमयित्रे सुरद्विषाम्।

अथैनं तुष्टुवुस्तुत्यम् अवाङ्मनसगोचरम् ॥ १५ ॥

नमो विश्वसृजे पूर्वं विश्वं तदनु बिभ्रते।

अथ विश्वस्य संहर्त्रे तुभ्यं त्रेधा स्थितात्मने॥१६

रसान्तराण्येकरसं यथा दिव्यं पयोऽश्नुते।

देशे देशे गुणेष्वेवमवस्थास्त्वमविक्रियः ॥१७॥

अवलोकनैः। सुखशयनं पृच्छन्तीति सौखशायनिकाः तान्
"पृच्छतौ सुस्नातादिभ्यः" इत्युपसंख्यानात् ठक्प्रत्ययः
भृग्वादीन् ऋषीन् अनुगृह्णन्तम् ॥ १४ ॥

प्रणिपत्येति। अथ दर्शनानन्तरं सुराः सुरद्विषाम् असुराणां
शमयित्रे विनाशकाय तस्मै विष्णवे प्रणिपत्य स्तुत्यं स्तोतार्हम्
"एतिस्तु शास्वृदृजुषः क्यप्" इति क्यप्प्रत्ययः। वाक् च मनश्च
वाङ्मनसे। "अचतुर" इत्यच्प्रत्ययान्तो निपातः। तयोः
गोचरो विषयो न भवतीति अवाङ्मनसगोचरः तम् एनं विष्णुं
तुष्टुवुः ॥ १५ ॥

नम इति। पूर्वम् आदौ विश्वसृजे विश्वस्रष्ट्रे तदनु सर्गा-
नन्तरं विश्वं बिभ्रते पुष्णते अथ विश्वस्य संहर्त्रे एवं त्रेधा
सृष्टिस्थितिसंहारकर्तृत्वेन स्थितः आत्मा स्वरूपं यस्य तस्मै
ब्रह्मविष्णुहरात्मने तुभ्यं नमः ॥ १६ ॥

ननु कूटस्थस्य कथं त्रैरूप्यमित्याशङ्क्यौपाधिकमित्याह,
रसान्तराणीति। एकरसं मधुरैकरसं दिवि भवं दिव्यं पयः
वर्षोदकं देशे देशे ऊषरादिदेशे अन्यान् रसान् रसान्तराणि
लवणादीनि यथा अश्नुते प्राप्नोति। एवम् अविक्रियः निर्विकारः

मेयो मितलोकस्त्वमनर्थी प्रार्थनावहः ।
जितो जिष्णुरत्यन्तमव्यक्तो व्यक्तकारणम् ॥१८॥
दयस्थमनासन्नमकामं त्वां तपस्विनम् ।
यालुमनघस्पृष्टं पुराणमजरं विदुः ॥ १९ ॥

रूपः इत्यर्थः । त्वं गुणेषु सत्त्वादिषु अवस्थाः स्रष्टृत्वादिरूपाः
पे ॥ १७ ॥

अमेय इति । हे देव ! त्वम् अमेयः लोकैरियत्तया न
च्छेद्यः, मितलोकः परिच्छिन्नलोकः, अनर्थी निःस्पृहः ।
वहतीति आवहः । पचाद्यच् । प्रार्थनायाम् आवहः
प्रदः, अजितः अन्यैः न जितः, जिष्णुः जयशीलः, अत्यन्तम्
क्तः अतिसूक्ष्मरूपः, व्यक्तस्य स्थूलरूपस्य कारणम् ॥ १८ ॥

हृदयेति । हे देव ! त्वां हृदयस्थं सर्वान्तर्यामितया नित्य-
हितं तथापि अनासन्नम् अगम्यरूपत्वात् विप्रकृष्टञ्च विदुः,
कृष्टस्यापि विप्रकृष्टत्वम् इति विरोधः । तथा अकामं न
मः अभिलाषः यस्य तं परिपूर्णत्वात् निःस्पृहत्वाच्च निष्कामं
पि तपस्विनं प्रशस्ततपोयुक्तं विदुः, यो निष्कामः स कथं
कुरुते इति विरोधः परिहारस्तु ऋषिरूपेण दुस्तरं तपः
ति, दयालुं परदुःखप्रहरणपरं तथापि अनघस्पृष्टं नित्यानन्द-
पत्वात् अदुःखिनं विदुः । "अघं दुरितदुःखयोः" इति
। दयालुरदुःखी चेति विरोधः । "ईर्ष्यी घृणी त्वस-
: क्रोधनो नित्यशङ्कितः । परभाग्योपजीवी च षडेते
दुःखिताः ॥" इति महाभारते । पुराणम् अनादिम्
रं निर्विकारत्वात् अजरं विदुः । चिरन्तनं न जीर्य्यते
विरोधालङ्कारः । उक्तञ्च, "आभासत्वे विरोधस्य विरोधा-
तिर्मता" इति । विरोधेन चालौकिकमहिमत्वं व्यज्यते॥१९॥

सर्वज्ञस्त्वमविज्ञातः सर्वयोनिस्त्वमात्मभूः।
सर्वप्रभुरनीशस्त्वमेकस्त्वं सर्वरूपभाक् ॥ २० ॥

सप्तसामोपगीतं त्वां सप्तार्णवजलेशयम्।
सप्तार्चिर्मुखमाचख्युः सप्तलोकैकसंश्रयम् ॥ २१ ॥

चतुर्वर्गफलं ज्ञानं कालावस्थाश्चतुर्युगाः।
चतुर्वर्णमयो लोकस्त्वत्तः सर्वं चतुर्मुखात् ॥ २२ ॥

सर्वज्ञ इति। त्वं सर्वं जानातीति सर्वज्ञः। "इगुपध-
इति कप्रत्ययः। अविज्ञातः न केनापि विज्ञातः इत्यर्थः।
सर्वस्य योनिः कारणं त्वम् आत्मन एव भवतीति आत्मभूः
ते किञ्चित् कारणमस्ति इत्यर्थः। त्वं सर्वस्य प्रभुः त्वमनी
त्वमेकः सर्वरूपभाक् त्वमेक एव सर्वात्मना वर्त्तसे इत्यर्थः ॥२०॥

सप्तेति। हे देव! त्वां सप्तभिः सामभिः रथन्तरादि
उपगीतम्। "तद्धितार्थ—" इत्युत्तरपदसमासः। सप्ता
अर्णवानां जलं सप्तार्णवजलम्। पूर्ववत् समासः। तत्र शेते
सः सप्तार्णवजलेशयः तम्। "शयवासवासिष्वकालात्
लुक्। सप्तार्चिः मुखं यस्य तम्। "अग्निमुखा वै दे
इति श्रुतेः। सप्तानां लोकानां भूर्भुवःस्वरादीनाम् एकसं
एवम्भूतम् आचख्युः ॥ २१ ॥

चतुरिति। चतुर्णां धर्मार्थकाममोक्षाणां वर्गः चतु
"त्रिवर्गो धर्मकामार्थैश्चतुर्वर्गः समोक्षकैः" इत्यमरः। तत्फ
यत् ज्ञानं, चत्वारि युगानि कृतत्रेतादीनि यासु ताः चतु
कालावस्थाः कालपरिमाणं, चत्वारः वर्णाः प्रकृताः उप
यस्मिन्निति चतुर्वर्णमयः चातुर्वर्ण्यप्रचुरः इत्यर्थः। तत्प्र
वचने मयट्। "तद्धितार्थ—" इति तद्धितार्थे विषये तत्पुरु

ाभ्यासनिगृहीतेन मनसा हृदयाश्रयम् ।
ोतिर्मयं विचिन्वन्ति योगिनस्त्वां विमुक्तये ॥२३
ाजस्य गृह्णतो जन्म निरीहस्य हतद्विषः ।
ापतो जागरूकस्य याथार्थ्यं वेद कस्तव ॥२४॥
ाब्दादीन् विषयान् भोक्तुं चरितुं दुश्चरं तपः ।
र्याप्तोऽसि प्रजाः पातुमौदासीन्येन वर्त्तितुम् ॥२५

लोकः, इत्येवरूपं सर्वं चतुर्मुखात् चतुर्मुखरूपिणः त्वत्तः तम् इति शेषः । "इदं सर्वमसृजत यदिदं किञ्चित् इति ते: ॥ २२ ॥

अभ्यासेति । अभ्यासेन निगृहीतं विषयान्तरेभ्यः निवर्त्तितं । मनसा योगिनः हृदयाश्रयं हृत्पद्मस्थं ज्योतिर्मयं त्वां मुक्तये मोक्षार्थं विचिन्वन्ति अन्विष्यन्ति ध्यायन्तीत्यर्थः ॥२३॥

अजस्येति । न जायते इति अजः । "अन्येष्वपि दृश्यते" ते डप्रत्ययः । तस्य अजस्य जन्मशून्यस्यापि जन्म गृह्णतः स्यादिरूपेण जायमानस्य निरीहस्य चेष्टारहितस्यापि ाद्विषः शत्रुघातिनः, जागरूकस्य सर्वसाक्षितया नित्यप्रबुद्ध- ापि स्वपतः योगनिद्राम् अनुभवतः । इत्थं विरुद्धचेष्टस्य याथार्थ्यं कः वेद वेत्ति । "विदो लटो वा" इति ादेशः ॥ २४ ॥

शब्दादीनिति । किञ्च कृष्णादिरूपेण शब्दादीन् विषयान् ुं नरनारायणादिरूपेण दुश्चरं तपः चरितुं तथा दैत्यमर्दनेन ाः पातुम् औदासीन्येन ताटस्थ्येन वर्त्तितुञ्च पर्य्याप्तः समर्थः से। भोगतपसोः पालनौदासीन्ययोश्च परस्परविरुद्धयोराचरणे न्यः कः समर्थः इत्यर्थः ॥ २५ ॥

बहुधाप्यागमैर्भिन्नाः पन्थानः सिद्धिहेतवः।
त्वय्येव निपतन्त्योघाः जाह्नवीया इवार्णवे॥२६॥
त्वय्यावेशितचित्तानां त्वत्समर्पितकर्मणाम्।
गतिस्त्वं वीतरागाणामभूयःसन्निवृत्तये॥ २७॥
प्रत्यक्षोऽप्यपरिच्छेद्यः मह्यादिर्महिमा तव।
आप्तवागनुमानाभ्यां साध्यं त्वां प्रति का कथा॥२८॥

बहुधेति। आगमैः त्रयीसांख्यादिभिः दर्शनैः बहुधा भिन्नाः अपि सिद्धिहेतवः पुरुषार्थसाधकाः पन्थानः उपायाः जाह्नव्याः इमे जाह्नवीयाः गाङ्गाः। वृद्धाच्छ इति छप्रत्ययः। ओघाः प्रवाहाः ते अपि आगमैः आगतिभिर्बहुधा भिन्नाः सिद्धिहेतवश्च, अर्णवे इव त्वयि एव निपतन्ति प्रविशन्ति येन केनापि रूपेण त्वामेवोपयान्ति इत्यर्थः। यथाहुराचार्याः "किं बहुना कारवोऽपि विश्वकर्मेत्युपासते" इति॥ २६॥

त्वयीति। त्वयि आवेशितं निवेशितं चित्तं यैः तेषां तुभ्यं समर्पितानि कर्माणि यैः तेषाम्, "मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु। मामेवैष्यसि कौन्तेय! प्रतिजाने प्रियोऽसि मे॥" इति भगवद्वचनात्। वीतरागाणां विरक्तानाम् अभूयःसन्निवृत्तये अपुनरावृत्तये मोक्षाय इत्यर्थः। त्वम् एव गतिः साधनम्, "तमेवं विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" इति श्रुतेः इत्यर्थः॥ २७॥

प्रत्यक्ष, इति। प्रत्यक्षः प्रत्यक्षप्रमाणगस्यः अपि तव मह्यादिः पृथिव्यादिः महिमा ऐश्वर्य्यम् अपरिच्छेद्यः इयत्तया न अवधार्य्यः, आप्तवाक् वेदः "यतो वा इमानि भूतानि जायन्ते" इत्यादिश्रुतिः। अनुमानं क्षित्यादिकं सकर्तृकं कार्य-

केवलं स्मरणेनैव पुनासि पुरुषं यतः ।
अनेन वृत्तयः शेषाः निवेदितफलास्त्वयि ॥२९॥

उदधेरिव रत्नानि तेजांसीव विवस्वतः ।
स्तुतिभ्यो व्यतिरिच्यन्ते दूराणि चरितानि ते ॥३०

अनवाप्तमवाप्तव्यं न ते किञ्चन विद्यते ।
लोकानुग्रह एवैकः हेतुस्ते जन्मकर्मणोः ॥ ३१ ॥

णात् घटवदित्यादिकम् । ताभ्यां साध्यं गम्यं त्वां प्रति का कथा । प्रत्यक्षमपि त्वत्कृतं जगदपरिच्छेद्यं तत्कारणम् त्वमस्त्वम् अपरिच्छेद्य इति किमु वक्तव्यम् इत्यर्थः ॥ २८ ॥

केवलमिति । स्मरणेन केवलं कृत्स्नम् । "केवलः कृत्स्न एकश्च" इति शाश्वतः । पुरुषं स्मर्त्तारं जनं पुनासि यतः यत् इत्यर्थः, अनेन एव स्मृतिकार्य्येण एव त्वयि त्वद्विषये याः शेषा अवशिष्टाः वृत्तयः दर्शनस्पर्शनादयो व्यापाराः ताः निवेदितफलाः विज्ञापितकार्य्याः । तव स्मरणस्यैव एतत् फलं दर्शनादीनां तु कियदिति नावधारयाम इति भावः ॥ २९ ॥

उदधेरिति । उदधेः रत्नानि इव, विवस्वतः तेजांसि इव, दूराणि अवाङ्मनसगोचराणि ते चरितानि स्तुतिभ्यः व्यतिरिच्यन्ते निःशेषं स्तोतुं न शक्यन्ते इत्यर्थः ॥ ३० ॥

अनवाप्तमिति । अनवाप्तम् अप्राप्तम् अवाप्तव्यं प्राप्तव्यं तव किञ्चन किञ्चित् अपि न विद्यते नित्यपरिपूर्णत्वात् इति भावः । तर्हि किंनिबन्धने जन्मकर्मणी तत्राह, लोकेति । एकः लोकानुग्रहः एव ते जन्मकर्मणोः हेतुः परमकारुणिकस्य परार्थैव प्रवृत्तिर्न स्वार्थेत्यर्थः ॥ ३१ ॥

महिमानं यदुत्कीर्त्य तव संह्रियते वचः।
श्रमेण तदशक्त्या वा न गुणानामियत्तया॥ ३२॥
इति प्रसादयामासुः ते सुरास्तमधोक्षजम्।
भूतार्थव्याहृतिः सा हि न स्तुतिः परमेष्ठिनः॥ ३३॥
तस्मै कुशलसंप्रश्नव्यञ्जितप्रीतये सुराः।
भयमप्रलयोद्वेलादाचख्युर्नैरृतोदधेः॥ ३४॥

महिमानमिति। तव महिमानम् उत्कीर्त्य वचः संह्रि-
यते इति यत्। तत् वचःसंहरणं श्रमेण वाग्व्यापारव्याय-
मशक्त्या कार्त्स्न्येन वक्तुमशक्यत्वाद्वा गुणानाम् इयत्तया
एतावन्मात्रतया न तेषामानन्त्यात् इति भावः॥ ३२॥

इतीति। इति ते सुराः तम् अधोभूतमक्षजम् इन्द्रियज-
ज्ञानं यस्मिन् तम् अधोक्षजं विष्णुं प्रसादयामासुः प्रसन्नं
चक्रुः। हि यस्मात् परमेष्ठिनः सर्वोत्तमस्य तस्य देवस्य सा
देवैः कृता भूतार्थव्याहृतिः भूतस्य सत्यस्य अर्थस्य व्याहृतिः
उक्तिः। युक्ते क्ष्मादावृते भूतम्" इत्यमरः। न स्तुतिः न
प्रशंसामात्रम्। महान्तो हि यथाकथञ्चिन्न सुलभाः इति
भावः। परमे स्थाने तिष्ठतीति परमेष्ठी। "परमे कित्"
इत्युणादिसूत्रेण तिष्ठतेरिनिः, "तत्पुरुषे कृति बहुलम्"
इति सप्तम्या अलुक्, "स्थास्थिन् स्थूणाम्" इति वक्तव्यात्
षत्वम्॥ ३३॥

तस्मै इति। सुराः देवाः कुशलस्य संप्रश्नेन व्यञ्जिता
प्रकटीकृता प्रीतिः यस्य तस्मै लक्षितप्रसादाय इत्यर्थः।
अन्यथा अनवसरविज्ञप्तिर्मुखरागामिव निष्फला स्यात् इति
भावः। तस्मै विष्णवे अप्रलये प्रलयाभावे अपि उद्वेलात्

अथ वेलासमासन्नशैलरन्ध्रानुनादिना ।
स्वरेणोवाच भगवान् परिभूतार्णवध्वनिः ॥३५॥
पुराणस्य कवेस्तस्य वर्णस्थानसमीरिता ।
बभूव कृतसंस्कारा चरितार्थैव भारती ॥ ३६ ॥
बभौ सदशनज्योत्स्ना सा विभोर्वदनोद्गता ।
निर्यातशेषा चरणात् गङ्गेवोर्ध्वप्रवर्त्तिनी ॥ ३७ ॥

मर्य्यादात् नैर्ऋतः राक्षसः सः एव उदधिः तस्मात् भयम् प्रापुः कथितवन्तः ॥ ३४ ॥

अथेति । अथ वेलायाम् अब्धिकूले समासन्नानां सन्निकृष्टानां शैलानां रन्ध्रेषु गह्वरेषु अनुनादिना प्रतिध्वनिमता स्वरेण परिभूतार्णवध्वनिः तिरस्कृतसमुद्रघोषः भगवान् उवाच ॥ ३५ ॥

पुराणस्येति । पुराणस्य चिरन्तनस्य कवेः तस्य भगवतः वर्णस्थानेषु उरःकण्ठादिषु समीरिता सम्यक् उच्चारिता अतएव कृतः सम्पादितः संस्कारः साधुत्वस्पष्टतादिप्रयत्नः यस्याः सा भारती वाणी चरितार्था कृतार्था बभूव एव । एवकारस्त्वसम्भावनाविपरीतभावनाव्युदासार्थः ॥ ३६ ॥

बभाविति । विभोः विष्णोः वदनात् उद्गता निःसृता सदशनज्योत्स्ना दन्तकान्तिसहिता, इदञ्च विशेषणं धावल्यातिशयार्थम्, अतएव सा भारती चरणात् अङ्घ्रेः निर्याता चासौ शेषा च निर्यातशेषा निःसृतावशिष्टा इत्यर्थः । "स्त्रियाः पुंवत्—" इत्यनुवर्त्त्य "पुंवत् कर्मधारय—" इति पुंवद्भावः । निर्यातशब्दस्य या निर्याता सावशेषा सा गङ्गेवेति सामानाधिकरण्यनिर्वाहः, निर्यातायाः शेषेति विग्रहे पुंवद्भावः दुर्घट

जाने वो रक्षसाक्रान्तौ अनुभावपराक्रमौ।
अङ्गिनां तमसेवोभौ गुणौ प्रथममध्यमौ ॥३८॥
विदितं तप्यमानञ्च तेन मे भुवनत्रयम्।
अकामोपनतेनेव साधोर्हृदयमेनसा ॥ ३९ ॥
कार्य्येषु चैककार्य्यत्वादभ्यर्थ्योऽस्मि न वज्रिणा।
स्वयमेव हि वातोऽग्नेः सारथ्यं प्रतिपद्यते॥४०॥

एव। ऊर्द्ध्वप्रवर्त्तिनी ऊर्द्ध्ववाहिनी गङ्गा इव वभौ इत्युत्प्रेक्षा ॥ ३७ ॥

यदाह भगवान् तदाह, जाने इति। हे देवाः! वः युष्माकम् अनुभावपराक्रमौ महिमपुरुषकारौ रक्षसा रावणेन, अङ्गिनां शरीरिणां प्रथममध्यमौ उभौ गुणौ सत्त्वरजसी तमसा इव तमोगुणेन इव, आक्रान्तौ जाने। वाक्यार्थः कर्म ॥ ३८ ॥

विदितमिति। किञ्च, अकामेन अनिच्छया उपनतेन प्रमादात् आगतेन एनसा पापेन साधोः सज्जनस्य हृदयम् इव तेन रक्षसा तप्यमानं सन्ताप्यमानम्। तपेर्भौवादिकात् कर्मणि शानच्। भुवनत्रयं मे विदितं मया ज्ञायते इत्यर्थः। "मति बुद्धि" इत्यादिना वर्तमाने क्तः, "क्तस्य च वर्तमाने" इति षष्ठी ॥ ३९ ॥

कार्य्येष्विति। किञ्च, एककार्य्यत्वात् आवयोः एककार्य्यत्वात् हेतोः कार्य्येषु कर्त्तव्यार्थेषु विषयेषु वज्रिणा इन्द्रेण अभ्यर्थ्यः इदं कुर्विति प्रार्थनीयः न अस्मि, तथाहि वातः स्वयमेव अग्नेः सारथ्यं साहाय्यं प्रतिपद्यते प्राप्नोति न तु वह्निप्रार्थनया इत्येवकारार्थः। प्रेक्षावतां हि स्वार्थेषु स्वत एव प्रवृत्तिः न तु परप्रार्थनया स्वार्थश्चायं ममापि इत्यर्थः ॥ ४० ॥

ासिधारापरिहृतः कामं चक्रस्य तेन मे ।
ापितो दशमो मूर्धा लभ्यांश इव रक्षसा ॥४१॥
ष्टुर्वरातिसर्गात् तु मया तस्य दुरात्मनः ।
त्यारूढं रिपोः सोढं चन्दनेनेव भोगिनः ॥४२॥
ातारं तपसा प्रीतं ययाचे स हि राक्षसः ।
ैवात् सर्गादवध्यत्वं मर्त्येष्वास्थापराङ्मुखः ॥४३॥
ोऽहं दाशरथिर्भूत्वा रणभूमेर्बलिक्षमम् ।

पुरा किल त्रिपुरारिप्रीणनाय स्वशिरांसि छिन्दता दश-
रेण यदमुं शिरोऽवशेषितं तच्चक्रार्थमित्याह, खेति ।
ासिधारया खड्गधारया परिहृतः परिच्छिन्न इत्यर्थः दशमः
र्धा मे मम चक्रस्य कामं पर्याप्तः लभ्यांशः प्राप्तव्यभागः
तेन रक्षसा स्थापितः । तत् सर्वथा तमहं हनिष्यामि
र्थः ॥ ४१ ॥

तर्हि किं प्रागुपेक्षितमत आह, स्रष्टुरिति । किन्तु स्रष्टुः
ण: वरातिसर्गात् वरदानात् हेतोः मया तस्य दुरात्मनः
ोः रावणस्य प्रत्यारूढम् प्रत्यारोहणम् अतिवृद्धिः इत्यर्थः ।
वे भावे क्तः । भोगिनः सर्पस्य प्रत्यारूढं चन्दनेन इव,
म् । चन्दनद्रुमस्यापि तथा सहनं स्रष्टुर्नियतेरिति
व्यम् ॥ ४२ ॥

सम्प्रति वरस्वरूपमाह, धातारमिति । सः राक्षसः तपसा
ं सन्तुष्टं धातारं ब्रह्माणं मर्त्येषु विषये आस्थापराङ्मुखः
रविमुखः सन् मर्त्याननादृत्य इत्यर्थः । दैवात् अष्टविधात्
त् देवसृष्टेः अवध्यत्वं ययाचे हि ॥ ४३ ॥

तर्हि का गतिरित्याशङ्क्य मनुष्यावतारेण हनिष्यामीत्याह,

करिष्यामि शरैस्तीक्ष्णैस्तच्छिरःकमलोच्चयम् ॥४
अचिरात् यज्वभिर्भागं कल्पितं विधिवत् पुनः
मायाविभिरनालीढमादास्यध्वे निशाचरैः ॥४
वैमानिकाः पुण्यकृतः त्यजन्तु मरुतां पथि।
पुष्पकालोकसंक्षोभं मेघावरणतत्पराः ॥ ४६ ॥
मोक्ष्यध्वे स्वर्गवन्दीनां वेणीबन्धानदूषितान्।
शापयन्त्रितपौलस्त्यबलात्कारकचग्रहैः ॥ ४७ ॥

सोऽहमिति। सः अहं दशरथस्य अपत्यं पुमान् दाशरथि
"अत इञ्" इति इञ्प्रत्ययः। रामः भूत्वा तीक्ष्णैः शरैः त
रावणस्य शिरांसि एव कमलानि तेषाम् उच्चयं राशिं रणभू
बलिक्षमं पूजार्हं करिष्यामि। पुष्पविशदा हि पूजा इ
भावः ॥ ४४ ॥

अचिरादिति। हे देवाः! यज्वभिः याज्ञिकैः विधि
कल्पितम् उपहृतं भागं हविर्भागं मायाविभिः मायावि
"अस्मायामेधास्रजो विनिः" इति विनिप्रत्ययः। निशाच
रक्षोभिः अनालीढम् अनास्वादितं यथा तथा अचिरात्
आदास्यध्वे ग्रहीष्यध्वे ॥ ४५ ॥

वैमानिका इति। मरुतां देवानां पथि व्योम्नि वैमानि
विमानैश्चरन्त इति। "चरति इति ठक्प्रत्ययः। मेघाव
तत्पराः रावणभयात् मेघेषु अन्तर्धानतत्पराः पुण्यकृतः
त्तिनः पुष्पकालोकेन यदृच्छया रावणविमानदर्शनेन यः संक्षो
भयचकितं तं त्यजन्तु। "संक्षोभो भयचकितम्"
शब्दार्णवः ॥ ४६ ॥

मोक्ष्यध्वे इति। हे देवाः! यूयं शापेन नलकूबरशा

...वग्रहक्लान्तमिति वागमृतेन सः ।
...भिवृष्य मरुत् सस्यं कृष्णमेघस्तिरोदधे ॥४८॥
...हूतप्रभृतयः सुरकार्य्योद्यतं सुराः ।
...रनुययुर्विष्णुं पुष्पैर्वायुमिव द्रुमाः ॥ ४९ ॥
...तस्य विशाम्पत्युः अन्ते काम्यस्य कर्मणः ।

...ताः प्रतिबद्धाः पौलस्त्यस्य रावणस्य बलात्कारेण ये कच-
...: केशाकर्षाः तैः अदूषितान् अनुपहतान् स्वर्गवन्दीनां
...नाङ्गनानां वेणीबन्धान् मोक्ष्यथ । पुरा किल नल-
...रेण आत्मानमभिसरन्त्या रम्भाया बलात्कारेण सम्भोगात्
...न दुरात्मा रावणः शप्तः । स्त्रीणां बलाद्ग्रहणे मूर्धा ते
...धा भविष्यतीति भारतीया कथानुसन्धेया ॥ ४७ ॥

...रावणेति । सः कृष्णः विष्णुः सः एव मेघः नीलमेघश्च,
...वसः अपत्यं पुमान् इति विग्रहे रावणः । विश्रवः शब्दात्
...ादित्वादणि विश्रवसो "विश्रवणरवणौ" इत्यन्तर्गणसूत्रेण
...वःशब्दस्य वृत्तिविषये रवणादेशे रावण इति सिद्धम् । सः
...अवग्रहः वर्षप्रतिबन्धः तेन क्लान्तं म्लानं मरुतः देवाः एव
...ं तत् इति एवंरूपेण वागमृतेन वाक्सलिलेन । "अमृतं
...यज्ञशेषे स्यात् पीयूषे सलिलेऽमृतम्" इति विश्वः । अभिवृष्य
...भिषिच्य तिरोदधे अन्तर्दधे ॥ ४८ ॥

...पुरुहूतेति । पुरुहूतप्रभृतयः इन्द्राद्याः सुराः सुरकार्य्ये
...णवधरूपे उद्यतं विष्णुम् अंशैः मात्राभिः, द्रुमाः पुष्पैः
...शैः वायुम् इव, अनुययुः । सुग्रीवादिरूपेण वानरयोनिषु
...ता इत्यभिप्रायः ॥ ४९ ॥

...अथेति । अथ तस्य विशाम्पत्युः दशरथस्य सम्बन्धिनः

पुरुषः प्रबभूवाग्नेः विस्मयेन सहर्त्विजाम् ॥५०॥

हेमपात्रगतं दोर्भ्यामादधानः पयश्चरुम् ।
अनुप्रवेशादाद्यस्य पुंसस्तेनापि दुर्वहम् ॥५१॥

प्राजापत्योपनीतं तत् अन्नं प्रत्यग्रहीन्नृपः ।
वृषेव पयसां सारमाविष्कृतमुदन्वता ॥ ५२ ॥

अनेन कथिता राज्ञः गुणास्तस्यान्यदुर्लभाः ।
प्रसूतिं चकमे तस्मिन् त्रैलोक्यप्रभवोऽपि यत्॥५३

काम्यस्य कर्मणः पुत्रकामेष्टेः अन्ते अवसाने अग्नेः पावकात् पुरुषः कश्चित् दिव्यः पुमान् ऋत्विजां विस्मयेन सह प्रबभूव प्रादुर्बभूव तदाविर्भावात् तेषामपि विस्मयोऽभूत् इत्यर्थः ॥५०॥

तमेव पुरुषं विशिनष्टि हेमपात्रेति । आद्यस्य पुंसः विष्णोः अनुप्रवेशात् अधिष्ठानात् हेतोः तेन दिव्यपुरुषेणापि दुर्वहं चतुर्दशभुवनोदरस्य भगवतः हरेः अतिगरीयस्त्वात् वोढुम् अशक्यं हेमपात्रगतं पयसि पक्वं चरुं पयश्चरुं पायसान्नं दोर्भ्याम् आदधानः वहन् । "अनत्याग्निभिरूष्मपक्व ओदनश्चरुः" इति याज्ञिकाः ॥ ५१ ॥

प्राजापत्येति । नृपः दशरथः प्राजापत्येन प्रजापतिसम्बन्धिना पुरुषेण उपनीतं न तु वशिष्ठेन, "प्राजापत्यं नरं विद्धि मामिहाभ्यागतं नृप" इति रामायणात् । तदन्नं पायसान्नम् उदन्वता उदधिना आविष्कृतं प्रकाशितं पयसां सारम् अमृतम् वृषा वासवः इव । "वासवो वृत्रहा वृषा" इत्यमरः । प्रत्यग्रहीत् स्वीचकार ॥ ५२ ॥

अनेनेति । तस्य राज्ञः दशरथस्य अन्यैः दुर्लभाः असाधारणाः गुणाः अनेन कथिताः व्याख्याताः । यत् यस्मात् त्रय

तेजो वैष्णवं पत्न्योः विभेजे चरुसंज्ञितम् ।
द्यावापृथिव्योः प्रत्यग्रमहर्पतिरिवातपम् ॥ ५४ ॥

अर्चिता तस्य कौसल्या प्रिया केकयवंशजा ।
अतः सम्भाविताां ताभ्यां सुमित्रामैच्छदीश्वरः॥५५॥

...: त्रैलोक्यं चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ् । तस्य प्रभवः
...षं विष्णुरपि तस्मिन् राज्ञि प्रसूतिम् उत्पत्तिं चकमे
...तवान् । त्रिभुवनकारणस्यापि कारणमिति परमाव-
...समाश्रयः इत्यर्थः ॥ ५३ ॥

... इति । सः नृपः चरुसंज्ञास्य सञ्जाता चरुसंज्ञितं
...वं तेजः पत्न्योः कौसल्याकैकेय्योः द्यौश्च पृथिवी च द्यावा-
...व्यौ । "दिवसश्च पृथिव्याम्" इति चकाराद्दिवशब्दस्य
...देशः । तयोः द्यावापृथिव्योः अह्नः पतिः अहर्पतिः ।
...रादीनां पत्यादिषु वा रेफः" इत्युपसंख्यानाद्वैकल्पिको
... रेफादेशो विसर्गापवादः । प्रत्यग्रम् आतपं बालातपम्
विभेजे विभज्य ददौ इत्यर्थः ॥ ५४॥

...पत्नीचये सति द्वयोरेव विभागे कारणमाह, अर्चितेति ।
...राज्ञः, कौ पृथिव्यां सलति गच्छतीति कोसलः । "सल-
..." पचाद्यच्, कुशब्दस्य पृषोदरादित्वाद् गुणः । कोसलस्य
...ऽपत्यं स्त्री कौसल्या । "वृद्धेत्कोसलाजादाञ्ञ्यङ्" इति
... । "यङश्चाप्" इति चाप् । अतएव सूत्रे निर्देशात्
...लशब्दो दन्त्यसकारमध्यमः । अर्चिता ज्येष्ठा मान्या,
...वंशजा कैकेयी प्रिया इष्टा अतः हेतोः ईश्वरः भर्त्ता नृपः
...तां ताभ्यां कौसल्याकैकेयीभ्यां सम्भाविताां भागदानेन
...ताम् ऐच्छत् इच्छति स्म । एवञ्च सामान्यं तिसृणाञ्च
...प्रापणमिति राज्ञि उचितज्ञता कौशलञ्च लभ्यते ॥ ५५ ॥

ते बहुज्ञस्य चित्तज्ञे पत्न्यौ पत्युर्महीक्षितः।
चरोरर्द्धार्द्धभागाभ्यां तामयोजयतामुभे॥ ५६॥
सा हि प्रणयवत्यासीत् सपत्न्योरुभयोरपि।
भ्रमरी वारणस्येव मदनिस्यन्दरेखयोः॥ ५७॥
ताभिर्गर्भः प्रजाभूत्यै दध्रे देवांशसम्भवः।

ते इति। बहुज्ञस्य सर्वज्ञस्य उचितज्ञस्य इत्यर्थः पत्युः महीक्षितः क्षितीश्वरस्य। विशेषणद्वयेन राज्ञोऽनुम... यतामाह। चित्तज्ञे अभिप्रायज्ञे ते उभे पत्न्यौ कौस... कैकेय्यौ चरोः यौ अर्द्धभागौ समभागौ तयोः यौ अर्द्धौ च तौ भागौ च इत्यर्द्धभागौ एकदेशौ ताभ्याम् अर्द्धाभा... भ्याम्। "पुंस्यर्द्धोऽर्द्धं समेऽंशके" इत्यमरः। तां सुमित्... अयोजयतां युक्तां चक्रतुः। अयञ्च विभागो न रामाय... संवादी। तत्र चरोरर्द्धं कौसल्यायै अवशिष्टार्द्धं कैकेय्यै वि... पुनः सुमित्राया इत्यभिधानात्। किन्तु पुराणान्तरसंवा... द्रष्टव्यः। उक्तञ्च नारसिंहे, "ते पिण्डप्राशने काले सुमित्र... महीपतेः। पिण्डाभ्यामल्पमल्पन्तु स्वभगिन्यै प्रयच्छतः"... इति। एवमन्यत्रापि विरोधे पुराणान्तरात् समाधातव्यम्॥ ५६॥

न चैवं सत्यपीर्ष्या स्यादित्याह, सा हीति। सा सुमि... उभयोरपि समानः एकः पतिः ययोः तयोः सपत्न्योः। "नि... सपत्न्यादिषु" इति ङीप् नकारादेशश्च। भ्रमरी भृङ्ग... वारणस्य गजस्य मदनिस्यन्दरेखयोरिव, गण्डद्वयगतयोः ... भावः। प्रणयवती प्रेमवती आसीत्। सपत्न्योरित्यत्र सम... सान्तर्गतस्य पत्युरुपमानं वारणस्येति॥ ५७॥

ताभिरिति। ताभिः कौशल्यादिभिः प्रजानां भूत्यै अभ्यु...

रीभिरिव नाडीभिरमृताख्याभिरम्मयः ॥५८॥
समापन्नसत्त्वास्ताः रेजुरापाण्डुरत्विषः ।
न्तर्गतफलारम्भाः सस्यानामिव सम्पदः ॥५९॥
ं ददृशुरात्मानं सर्वाः स्वप्नेषु वामनैः ।
लजासिगदाशार्ङ्गचक्रलाञ्छितमूर्त्तिभिः ॥६०॥

य देवस्य विष्णोः अंशः सम्भवः कारणं यस्य सः गर्भः,
स्य इमाः सौर्य्यः । ताभिः सौरीभिः । "सूर्य्यतिष्य—"
पधायकारस्य लोपः । अमृता इत्याख्या यासां ताभिः
ग्रहणसाम्यात् नाडीभिरिव । नाडीभिः वृष्टिविसर्जनीभिः
रतिभिः अपां विकारः अम्मयः जलमयः गर्भः इव दध्रे
, जातावेकवचनं गर्भा दधिरे इत्यर्थः । अत्र यादवः,
सां शतानि चत्वारि रश्मीनां वृष्टिसर्जने । शतत्रयं हिमो-
तावद्गर्भस्य सर्जने आनन्दाश्च हि मेध्याश्च नूतनाः पूतना
। चतुःशतं वृष्टिवाहाः ताः सर्वा अमृताः स्त्रियः ॥"
॥ ५८ ॥

सममिति । समं युगपत् आपन्नाः गृहीताः सत्त्वाः
न्तो याभिः ताः आपन्नसत्त्वाः गर्भिण्यः । "आपन्नसत्त्वा
द् गुर्विण्यन्तर्वत्नी च गर्भिणी" इत्यमरः । अतएव आपा-
त्विषः ईषत्पाण्डुरवर्णाः ताः राजपत्न्यः अन्तर्गताः गुप्ताः
ारम्भाः फलप्रादुर्भावाः यासां ताः, सस्यानां सम्पदः इव,
बभुः ॥ ५९ ॥

सम्प्रति तासां स्वप्नदर्शनान्याह, गुप्तमिति । सर्वाः ताः
षु जलजः शङ्खः जलजासिगदाशार्ङ्गचक्रैः लाञ्छिताः
यः येषां तैः वामनैः ह्रस्वैः पुरुषैः गुप्तं रक्षितम् आत्मानं
पं ददृशुः ॥ ६० ॥

हेमपक्षप्रभाजालं गगने च वितन्वता ।
उह्यन्ते स्म सुपर्णेन वेगाकृष्टपयोमुचा ॥ ६१ ॥
बिभ्रत्या कौस्तुभन्यासं स्तनान्तरविलम्बिनम् ।
पर्य्युपास्यन्त लक्ष्म्या च पद्मव्यजनहस्तया ॥ ६२ ॥
स्नाताभिषेकैर्दिव्यायां त्रिस्रोतसि च सप्तभिः ।
ब्रह्मर्षिभिः परं ब्रह्म गृणद्भिरुपतस्थिरे ॥ ६३ ॥
ताभ्यस्तथाविधान् स्वप्नान् श्रुत्वा प्रीतो हि पार्थिवः ।
मेने परार्द्ध्यमात्मानं गुरुत्वेन जगद्गुरोः ॥ ६४ ॥

हेमेति । किञ्चेति चार्थः हेम्नः सुवर्णस्य पक्षाणां प्रभा-जालं कान्तिपुञ्जं वितन्वता विस्तारयता वेगेन आकृष्टाः पयोमुचः मेघाः येन तेन । सुपर्णेन गरुत्मता गरुडेन गर्भि-ताः उह्यन्ते स्म ऊढाः ॥ ६१ ॥

बिभ्रत्येति । किञ्च, स्तनयोः अन्तरे मध्ये विलम्बिनं लम्बमानं न्यस्यत इति न्यासः । कौस्तुभः एव न्यासः तं पत्युः कौतुकात् न्यस्तं कौस्तुभम् इत्यर्थः बिभ्रत्या पद्ममेव व्यजनं हस्ते यस्याः तया लक्ष्म्या पर्य्युपास्यन्त उपासिताः ॥ ६२ ॥

स्नातेति । किञ्च, दिवि भवायां दिव्यायां त्रिस्रोतसि आकाशगङ्गायां स्नाताभिषेकैः स्नातावगाहैः । परं ब्रह्म वेद-रहस्यं गृणद्भिः पठद्भिः सप्तभिः ब्रह्मर्षिभिः काश्यपप्रभृतिभिः उपतस्थिरे उपासाञ्चक्रिरे ॥ ६३ ॥

ताभ्य इति । पार्थिवः दशरथः ताभ्यः पत्नीभ्यः । "आख्या-तोपयोग" इत्यपादानत्वात् पञ्चमी । तथाविधान् उक्तप्रका-रान् स्वप्नान् श्रुत्वा प्रीतः सन् आत्मानं जगद्गुरोः विष्णोः अपि गुरुत्वेन पितृत्वेन हेतुना परार्द्ध्यं सर्वोत्कृष्टं मेने हि ॥ ६४ ॥

विभक्तात्मा विभुस्तासामेकः कुक्षिष्वनेकधा ।
उवास प्रतिमाचन्द्रः प्रसन्नानामपामिव ॥ ६५ ॥
अथाग्र्यमहिषी राज्ञः प्रसूतिसमये सती ।
पुत्रं तमोपहं लेभे नक्तं ज्योतिरिवौषधिः ॥ ६६ ॥
राम इत्यभिरामेण वपुषा तस्य चोदितः ।
नामधेयं गुरुश्चक्रे जगत्प्रथममङ्गलम् ॥ ६७ ॥
रघुवंशप्रदीपेन तेनाप्रतिमतेजसा ।
रक्षागृहगता दीपाः प्रत्यादिष्टा इवाभवन् ॥ ६८ ॥

विभक्तेति । एकः एकरूपः विभुः विष्णुः तासां राज-
ञीनां कुक्षिषु गर्भेषु, प्रसन्नानां निर्मलानाम् अपां कुक्षिषु
प्रतिमाचन्द्रः प्रतिबिम्बचन्द्रः इव अनेकधा विभक्तात्मा सन्
उवास ॥ ६५ ॥

अथेति । अथ राज्ञः दशरथस्य सती पतिव्रता अग्र्या
श्रेष्ठा महिषी च अग्र्यमहिषी कौसल्या प्रसूतिसमये प्रसूति-
काले, ओषधिः नक्तं रात्रिसमये तमः अपहन्तीति तमोपहम् ।
"अपे क्लेशतमसोः" इति डप्रत्ययः । ज्योतिः इव, तमोपहं
शोकापहं पुत्रं लेभे प्राप ॥ ६६ ॥

राम इति । अभिरमते अत्र इति अभिरामं मनोहरम् ।
अधिकरणार्थे घञ् प्रत्ययः । तेन वपुषा चोदितः प्रेरितः गुरुः
पिता दशरथः तस्य पुत्रस्य जगतां प्रथमं मङ्गलं सुलक्षणं
राम इति नामधेयं चक्रे । अभिरामत्वमेव रामशब्दप्रवृत्ति-
निमित्तम् इत्यर्थः ॥ ६७ ॥

रघ्विति । रघुवंशस्य प्रदीपेन प्रकाशकेन अप्रतिमतेजसा
रामेण रक्षागृहगताः सूतिकागृहगताः दीपाः प्रत्यादिष्टाः

शय्यागतेन रामेण माता शातोदरी बभौ ।
सैकताम्भोजबलिना जाह्नवीव शरत्कृशा ॥६९

कैकेय्यास्तनयो जज्ञे भरतो नाम शीलवान् ।
जनयित्रीमलञ्चक्रे यः प्रश्रय इव श्रियम् ॥ ७०

सुतौ लक्ष्मणशत्रुघ्नौ सुमित्रा सुषुवे यमौ ।
सम्यगाराधिता विद्या प्रबोधविनयाविव ॥७१

निर्दोषमभवत् सर्वमाविष्कृतगुणं जगत् ।
अन्वगादिव हि स्वर्गः गां गतं पुरुषोत्तमम् ॥

प्रतिबद्धाः इव अभवन् । महाद्वीपसमीपे नान्याः स्…
इति भावः ॥ ६८ ॥

शय्येति । शातोदरी गर्भमोचनात् कृशोदरी म…
शय्यागतेन रामेण, सैकते पुलिने यः अम्भोजबलिः पद्मोप…
तेन शरदि कृशा जाह्नवी गङ्गा इव, बभौ ॥ ६९ ॥

कैकेय्या इति । केकयस्य राज्ञः अपत्यं स्त्री कैके…
"तस्यापत्यम्" इत्यणि कृते "केकयमित्रयुप्रलयानां यादेरि…
इतीयादेशः । तस्याः भरतः नाम शीलवान् तनयः जज्ञे जा…
यः तनयः, प्रश्रयः विनयः श्रियम् इव, जनयित्रीं मात…
अलञ्चक्रे ॥ ७० ॥

सुताविति । सुमित्रा लक्ष्मणशत्रुघ्नौ नाम यमौ सु…
जातौ सुतौ पुत्रौ, सम्यगाराधिता स्वभ्यस्ता विद्या प्रबो…
विनयौ तत्त्वज्ञानेन्द्रियजयौ इव, सुषुवे ॥ ७१ ॥

निर्दोषमिति । सर्वं जगत् भूलोकः निर्दोषं दुर्भिक्षा…
दोषरहितम् आविष्कृतगुणं प्रकटीकृतारोग्यादिगुणं च अ…
वत् । अत्रोत्प्रेक्ष्यते, गां भुवं गतम् अवतीर्णं पुरुषोत्…

तस्योदये चतुर्मूर्त्तेः पौलस्त्यचकितेश्वराः ।
विरजस्कैर्नभस्वद्भिः दिश उच्छ्वसिता इव ॥७३॥
कृशानुरपधूमत्वात् प्रसन्नत्वात् प्रभाकरः ।
रक्षोविप्रकृतावास्तामपविद्धशुचाविव ॥ ७४ ॥
दशाननकिरीटेभ्यस्तत्क्षणं राक्षसश्रियः ।
मणिव्याजेन पर्य्यस्ताः पृथिव्यामश्रुविन्दवः ॥७५॥

किन्तु सर्गः अपि अक्रमात् इव, स्वर्गो हि गुणवान् निर्दोष-श्चेत्यागमः स्वर्गतुल्यमभूत् इत्यर्थः ॥ ७२ ॥

तस्येति । चतुर्मूर्त्तेः रामादिरूपेण चतूरूपस्य सतः तस्य हरेः उदये सति पौलस्त्यात् रावणात् चकिताः भीताः ईश्वराः नाथाः इन्द्रादयः यासां ताः दिशः चतस्रः विरजस्कैः अप-धूलिभिः नभस्वद्भिः वायुभिः मिषेण उच्छ्वसिताः इव इत्युत्-प्रेक्षा । श्वसेः कर्त्तरि क्तः । स्वनाथशरणलाभसन्तुष्टानां दिशामुच्छ्वासवाता इव वाता ववुः इत्यर्थः । चतुर्दिगीशरक्षणं मूर्त्तिचतुष्टयप्रयोजनम् इति भावः ॥ ७३ ॥

कृशानुरिति । रक्षसा रावणेन विप्रकृतौ अपकृतौ पीड़ितौ इत्यर्थः कृशानुः अग्निः प्रभाकरः सूर्य्यश्च यथासंख्यम् अपधूम-त्वात् प्रसन्नत्वाच्च अपविद्धशुचौ निरस्तदुःखौ इव आस्ताम् अभवताम् ॥ ७४ ॥

दशाननेति । तत्क्षणं तस्मिन् क्षणे रामोत्पत्तिसमये राक्षसश्रियः अश्रुविन्दवः दशाननकिरीटेभ्यः मणीनां व्याजेन मिषेण पृथिव्यां पर्य्यस्ताः पतिताः रामोदये सति तद्वध्यस्य रावणस्य किरीटमणिभ्रंशलक्षणं दुर्निमित्तमभूत् इत्यर्थः ॥७५॥

पुत्रजन्मप्रवेश्यानां तूर्य्याणां तस्य पुत्रिणः।
आरम्भं प्रथमं चक्रु र्देवदुन्दुभयो दिवि॥ ७६॥
सन्तानकमयी वृष्टि र्भवने चास्य पेतुषी।
सन्मङ्गलोपचाराणां सैवादिरचनाभवत्॥ ७७॥
कुमाराः कृतसंस्काराः ते धात्रीस्तन्यपायिनः।
आनन्देनाग्रजेनेव समं ववृधिरे पितुः॥ ७८॥
स्वाभाविकं विनीतत्वं तेषां विनयकर्मणा।
मुमूर्च्छ सहजं तेजो हविषेव हविर्भुजाम्॥ ७९॥

पुत्रेति। पुत्रिणः जातपुत्रस्य तस्य दशरथस्य पुत्रजन्मनि प्रवेश्यानां प्रवेशयितव्यानां वादनीयानाम् इत्यर्थः। तूर्य्याणां वाद्यानाम् आरम्भम् उपक्रमं प्रथमं दिवि देवदुन्दुभयः चक्रुः साक्षात् पितुर्दशरथादपि देवा अधिकं प्रहृष्टाः इत्यर्थः॥ ७६॥

सन्तानकेति। अस्य राज्ञः भवने सन्तानकानां कल्पवृक्ष कुसुमानां विकारः सन्तानकमयी वृष्टिश्च पेतुषी पपात "क्वसुश्च" इति क्वसुप्रत्ययः, "उगितश्च" इति ङीप्। सा वृष्टिः एव, सन्तः पुत्रजन्मनि आवश्यकाः ये मङ्गलोपचाराः तेषाम् आदिरचना प्रथमक्रिया अभवत्॥ ७७॥

कुमारा इति। कृताः संस्काराः जातकर्मादयः येषां ते धात्री णाम् उपमातॄणां स्तन्यानि पयांसि पिबन्तीति तथोक्ताः। ते कुमाराः अग्रेजातेन अग्रजेन ज्येष्ठेन इव स्थितेन पितुः आनन्देन समं ववृधिरे कुमारवृद्ध्या पिता महान्तमानन्दमवाप इत्यर्थः। कुमारजन्मनः प्रागेव जातत्वादग्रजत्वोक्तिरानन्दस्य॥ ७८॥

स्वाभाविकमिति। तेषां कुमाराणां सम्बन्धि स्वाभाविकं सहजं विनीतत्वं विनयकर्मणा शिक्षया हविर्भुजाम् अग्नीनां

परस्पराविरुद्धास्ते तद्रघोरनघं कुलम् ।
अलमुद्योतयामासु र्देवारण्यमिवर्त्तवः ॥ ८० ॥
समानेऽपि हि सौभ्रात्रे यथोभौ रामलक्ष्मणौ ।
तथा भरतशत्रुघ्नौ प्रीत्या द्वन्द्वं बभूवतुः ॥ ८१ ॥
तेषां द्वयोर्द्वयोरैक्यं बिभिदे न कदाचन ।
यथा वायुविभावस्वो र्यथा चन्द्रसमुद्रयोः ॥८२॥

ह्यं तेजः हविषा आज्यादिकेन इव सुमूर्च्छ वत्वधे निसर्ग-
संस्काराभ्यां विनीता इत्यर्थः ॥ ७९ ॥

परस्परेति । परस्परम् अविरुद्धाः अविद्विष्टाः सौभ्रात्र-
वन्तः इत्यर्थः । ते कुमाराः तत् प्रसिद्धम् अनघं निष्पापं
घोः कुलम्, ऋतवः वसन्तादयः देवारण्यं नन्दनम् इव ।
हजविरोधिनामपि ऋतूनां सहावस्थानसम्भावनार्थं देवविशे-
षणम् । अलम् अत्यन्तम् उद्योतयामासुः प्रकाशयामासुः ।
सौभ्रात्रवन्तः कुलभूषणायन्ते इति भावः ॥ ८० ॥

समान इति । शोभनाः स्निग्धाः भ्रातरः येषां ते सुभ्रा-
रः । "नद्यृतश्च" इति कप् न भवति । वन्दिते भ्रातुरिति
निषेधात् । तेषां भावः सौभ्रात्रम् । युवादित्वादण् । तस्मिन्
समाने चतुर्णां तुल्येऽपि यथा उभौ रामलक्ष्मणौ प्रीत्या द्वन्द्वं
बभूवतुः । तथा भरतशत्रुघ्नौ प्रीत्या द्वन्द्वं द्वौ द्वौ साहचर्येण-
ाभिव्यक्तौ बभूवतुः । "द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमय-
ज्ञपात्रप्रयोगाभिव्यक्तिषु" इत्यभिव्यक्तार्थे निपातः । क्वचित्
कस्यचित् स्नेहो नातिरिच्यत इति भावः ॥ ८१ ॥

तेषामिति । तेषां चतुर्णां मध्ये द्वयोः द्वयोः रामलक्ष्म-
णयोर्भरतशत्रुघ्नयोश्च इत्यर्थः । यथा वायुविभावस्वोः वात-

ते प्रजानां प्रजानाथास्तेजसा प्रश्रयेण च ।
मनो जह्रुर्निदाघान्ते श्यामाभ्रा दिवसा इव ॥८३॥
स चतुर्धा बभौ व्यस्तः प्रसवः पृथिवीपतेः ।
धर्मार्थकाममोक्षाणामवतार इवाङ्गवान् ॥८४॥
गुणैराराधयामासुस्ते गुरुं गुरुवत्सलाः ।
तमेव चतुरन्तेशं रत्नैरिव महार्णवाः ॥ ८५ ॥

वह्न्योः इव, यथा चन्द्रसमुद्रयोः इव च ऐक्यम् ऐकमत्यं कदाचन न विभिदे। एककार्यत्वं समानसुखदुःखत्व-क्रमादुपमाद्वयाल्लभ्यते। सहजः सहकारी हि वह्नेर्वायुः, चन्द्रवृद्धौ हि वर्धते सिन्धुः तत्क्षये च क्षीयते इति ॥ ८२ ॥

त इति। प्रजानाथाः ते कुमाराः तेजसा प्रभावेण प्रश्रयेण विनयेन च, निदाघान्ते ग्रीष्मान्ते श्यामानि अभ्राणि मेघा येषां ते श्यामाभ्राः। नातिशीतोष्णाः इत्यर्थः। दिवसाः इव, प्रजानां मनः जह्रुः ॥ ८३ ॥

स इति। सः चतुर्धा। "संख्याया विधार्थे धा" इत्यनेन धाप्रत्ययः। व्यस्तः विभक्तः पृथिवीपतेः दशरथस्य प्रसवः सन्तानः। चतुर्धा अङ्गवान् मूर्त्तिमान् धर्मार्थकाममोक्षाणाम् अवतारः इव, बभौ ॥ ८४ ॥

गुणैरिति। गुरुवत्सलाः पितृभक्ताः ते कुमाराः गुणैः विनयादिभिः गुरुं पितरं, चतुर्णामन्तानां दिगन्तानामीशं चतुरन्तेशम्। तद्धितार्थेत्यादिना" उत्तरपदसमासः। तं दशरथमेव, महार्णवाः चत्वारः रत्नैरिव, आराधयामासुः आनन्दयामासुः ॥ ८५ ॥

सुरगज इव दन्तैर्भग्नदैत्यासिधारै-
र्नय इव पणबन्धव्यक्तयोगैरुपायैः ।
हरिरिव युगदीर्घैर्दोर्भिरंशैस्तदीयैः
पतिरवनिपतीनां तैश्चकाशे चतुर्भिः ॥८६॥

इति श्रीरघुवंशे महाकाव्ये कालिदासकृतौ
रामावतारो नाम दशमः सर्गः ।

सुरगज इति । भग्नाः दैत्यानाम् असिधाराः यैः तैः चतुर्भिः दन्तैः सुरगजः ऐरावतः इव, पणबन्धेन फलसिद्धा व्यक्तयोगैः अनुमितप्रयोगैः उपायैः चतुर्भिः सामादिभिः नयः नीतिः इव युगवत् दीर्घैः चतुर्भिः दोर्भिः भुजैः हरिः विष्णुः इव, तदीयैः हरिसम्बन्धिभिः अंशैः अंशभूतैः चतुर्भिः तैः पुत्रैः अवनिपतीतिनां पतिः राजराजः दशरथः चकाशे विदिद्युते ॥ ८६ ॥

इति श्रीमहामहोपाध्याय कोलाचलमल्लिनाथ-सूरि विरचितायां रघुवंशटीकायां सञ्जीवनीसमाख्यायां दशमः सर्गः ।

---

## एकादश: सर्ग: ।

कौशिकेन स किल क्षितीश्वरो-
राममध्वरविघातशान्तये ।
काकपक्षधरमेत्य याचित-
स्तेजसां हि न वय: समीक्ष्यते ॥ १ ॥
कृच्छ्रलब्धमपि लब्धवर्णभाक
तं दिदेश मुनये सलक्ष्मणम् ।

रामचन्द्रचरणारविन्दयो: अन्तरङ्गचरभृङ्गलीलया ।
तत्र सन्ति हि रसाश्चतुर्विधास्तान् यथारुचि सदैव निर्विश ॥

कौशिकेनेति । कौशिकेन कुशिकापत्येन विश्वामित्रेण एत्य अभ्यागत्य स: क्षितीश्वर: दशरथ: अध्वरविघातशान्तये यज्ञविघ्नविध्वंसाय काकपक्षधरं बालकोचितशिखाधरम् । "बालानान्तु शिखा प्रोक्ता काकपक्ष: शिखण्डक:" इति हलायुध: । रामं याचित: किल प्रार्थित: खलु । याचेर्द्वि-कर्मकादप्रधाने कर्मणि क्त: । अप्रधाने दुहादीनामिति वचनात् । नायं बालाधिकार इत्याशङ्क्याह, तेजसां तेजस्विनां वय: बाल्यादि न समीक्ष्यते हि, अप्रयोजकम् इत्यर्थ: । अत्र सर्गे रथोद्धता वृत्तम् । उक्तञ्च, "रान्नराविह रथोद्धता लगौ" इति ॥ १ ॥

कृच्छ्रलब्धमिति । लब्धा: वर्णा: प्रसिद्धय: यै: ते लब्धवर्णा: विचक्षणा: । "लब्धवर्णो विचक्षण:" इत्यमर: । तान् भजते इति लब्धवर्णभाक् । विद्वत्सेवी इत्यर्थ: स: राजा कृच्छ्रलब्धम्

अप्यसुप्रणयिनां रघोः कुले
न व्यहन्यत कदाचिदर्थिता ॥ २ ॥
यावदादिशति पार्थिवस्तयो-
र्निर्गमाय पुरमार्गसंस्क्रियाम् ।
तावदाशु विदधे मरुत्सखैः
सा सपुष्पजलवर्षिभिर्घनैः ॥ ३ ॥
तौ निदेशकरणोद्यतौ पितु-
र्धन्विनौ चरणयोर्निपेततुः ।
भूपतेरपि तयोः प्रवत्स्यतो-
र्नम्रयोरुपरि वाष्पविन्दवः ॥ ४ ॥

पि सलक्ष्मणं तं रामं मुनये दिदेश अतिसृष्टवान् । तथाहि, सुप्रणयिणां प्राणार्थिनाम् अपि अर्थिता याच्ञा रघोः कुले कदाचित् अपि न व्यहन्यत न विहता न विफलीकृता त्यर्थः । येरर्थिभ्यः प्राणा अपि समर्प्यन्ते तेषां पुत्रादित्यागो विस्मयावह इति भावः ॥ २ ॥

यावदिति । पार्थिवः पृथिवीश्वरः तयोः रामलक्ष्मणयोः निर्गमाय निष्क्रमणाय पुरमार्गसंस्क्रियां धूलिसंमार्जनगन्धोदकसेचनपुष्पोपहाररूपसंस्कारं यावत् आदिशति आज्ञापयति तावत् मरुत्सखैः वायुसखैः अनेन धूलिसंमार्जनं उच्यते, सपुष्पजलवर्षिभिः पुष्पसहितजलवर्षिभिः घनैः सा मार्गसंस्क्रिया आशु विदधे विहिता । एतेन देवकार्य्यसाधकयोर्देवानुकूल्यं सूचितम् ॥ ३ ॥

ताविति । निदेशकरणोद्यतौ पित्राज्ञाकरणोद्युक्तौ

तौ पितुर्नयनजेन वारिणा
किञ्चिदुक्षितशिखण्डकावुभौ।
धन्विनौ तमृषिमन्वगच्छतां
पौरदृष्टिकृतमार्गतोरणौ ॥ ५ ॥

लक्ष्मणानुचरमेव राघवं
नेतुमैच्छदृषिरित्यसौ नृपः।
आशिषं प्रयुयुजे न वाहिनीं
सा हि रक्षणविधौ तयोः क्षमा ॥ ६ ॥

धन्विनौ धनुष्मन्तौ तौ कुमारौ पितुः चरणयोः निपेत[...] प्रणतौ इत्यर्थः। भूपतेः अपि वाष्पविन्दवः प्रवत्स्यतोः प्रवा[...] करिष्यतोः अतएव नम्रयोः प्रणतयोः। "नमिकम्पि इति[...] रप्रत्ययः। तयोः उपरि निपेतुः पतिताः ॥ ४ ॥

ताविति। पितुः नयनजेन वारिणा किञ्चिदुक्षि[...] शिखण्डकौ ईषत्सिक्तचूडौ। "शिखा चूडा शिखण्डः स्यात्[...] इत्यमरः। "शेषाद्विभाषा इति कप्प्रत्ययः। धन्विनौ तौ उभौ[...] पौरदृष्टिभिः कृतानि मार्गतोरणानि सम्पाद्यानि कुवलयानि[...] ययोः तौ तथोक्तौ। संघशो निरीक्ष्यमाणौ इत्यर्थः त[...] ऋषिम् अन्वगच्छताम् ॥ ५ ॥

लक्ष्मणेति। ऋषिः लक्ष्मणानुचरम् एव लक्ष्मणमात्रा[...]नुचरं तं राघवं नेतुम् ऐच्छत् इति हेतोः असौ नृपः आशिषं[...] प्रयुयुजे प्रयुक्तवान्। वाहिनीं सेनां न प्रयुयुजे न प्रेषितवान्[...] हि यस्मात् सा आशीः एव तयोः कुमारयोः रक्षणविधौ क्षमा[...] शक्ता ॥ ६ ॥

मातृवर्गचरणस्पृशौ मुने-
स्तौ प्रपद्य पदवीं महौजसः ।
रेजतुर्गतिवशात् प्रवर्त्तिनौ
भास्करस्य मधुमाधवाविव ॥ ७ ॥

वीचिलोलभुजयोस्तयोर्गतं
शैशवाच्चपलमप्यशोभत ।
तोयदागम इवोद्ध्यभिद्ययो-
र्नामधेयसदृशं विचेष्टितम् ॥ ८ ॥

मातृवर्गेति। मातृवर्गस्य चरणान् स्पृशत इति मातृवर्गचरणस्पृशौ कृतमातृवर्गनमस्कारौ इत्यर्थः। "स्पृशोऽनुदके क्विन्" इति क्विन्प्रत्ययः। तौ महौजसः मुनेः पदवीं प्रपद्य। महौजसः भास्करस्य गतिवशात् मेषादिराशिसंक्रान्त्यनुसारात् प्रवर्त्तिनौ मधुमाधवौ इव चैत्रवैशाखौ इव, रेजतुः। "फणाञ्च सप्तानाम्" इति वैकल्पिकावेत्वाभ्यासलोपौ। "स्याच्चैत्रे चैत्रिको मधुः" इति, "वैशाखे माधवो राधः" इति च अमरः॥ ७॥

वीचीति। वीचिलोलभुजयोः तरङ्गचञ्चलबाह्वोः। इदं विशेषणं नदोपमानसिद्ध्यर्थं वेदितव्यम्। तयोः चपलं चञ्चलम् अपि गतं गतिः शैशवात् हेतोः अशोभत। किमिव? तोयदागमे वर्षासमये उज्झति उदकम् इति उद्ध्यः, भिनत्ति कूलम् इति भिद्यः। "भिद्योद्ध्यौ नदे" इति क्यबन्तौ निपातितौ। उद्ध्यभिद्ययोः नदविशेषयोः नामधेयसदृशं नामानुरूपं विचेष्टितम् इव उदकोज्झनकूलभेदनरूपव्यापारः इव। समयोत्पन्नं चापलमपि शोभते इति भावः॥ ८॥

तौ बलातिबलयोः प्रभावतो-
विद्ययोः पथि मुनिप्रदिष्टयोः ।
मम्लतुर्न मणिकुट्टिमोचितौ
मातृपार्श्वपरिवर्त्तिनाविव ॥ ९ ॥
पूर्ववृत्तकथितैः पुराविदः
सानुजः पितृसखस्य राघवः ।
उह्यमान इव वाहनोचितः
पादचारमपि न व्यभावयत् ॥ १० ॥
तौ सरांसि रसवद्भिरम्बुभिः
कूजितैः श्रुतिसुखैः पतत्रिणः ।

ताविति । मणिकुट्टिमोचितौ मणिबद्धभूमिसञ्चारोचितौ तौ मुनिप्रदिष्टयोः कौशिकेन उपदिष्टयोः बलातिबलयोः विद्ययोः बलातिबलाख्ययोः मन्त्रयोः प्रभावतः सामर्थ्यात् मातृपार्श्वपरिवर्त्तिनौ मातृसमीपवर्त्तिनौ इव पथि न मम्लतुः न म्लानौ इत्यर्थः । अत्र रामायणश्लोकः, "क्षुत्पिपासे न ते राम ! भविष्येते नरोत्तम ! बलामतिबलाञ्चैव पठतः पथि राघव !" इति ॥ ९ ॥

पूर्वेति । वाहनोचितः सानुजः राघवः पुराविदः पूर्ववृत्ताभिज्ञस्य पितृसखस्य मुनेः पूर्ववृत्तकथितैः पुरावृत्तकथाभिः उह्यमानः इव वाहनेन प्राप्यमाणः इव । वहेर्धातोः कर्म्मणि शानच् । "उह्यमानः" इत्यत्र दीर्घादिरपपाठः । दीर्घप्राप्त्यभावात् । पादचारमपि न व्यभावयत् न ज्ञातवान् ॥ १० ॥

वायवः सुरभिपुष्परेणुभि-
श्छायया च जलदाः सिषेविरे ॥ ११ ॥
नाम्भसां कमलशोभिनां तथा
शाखिनाञ्च न परिश्रमच्छिदाम् ।
दर्शनेन लघुना यथा तयोः
प्रीतिमापु रुभयोस्तपस्विनः ॥ १२ ॥
स्थाणुदग्धवपुषस्तपोवनं
प्राप्य दाशरथिरात्तकार्मुकः ।
विग्रहेण मदनस्य चारुणा
सोऽभवत् प्रतिनिधिर्न कर्मणा ॥ १३ ॥

ताविति। तौ राघवौ कर्मभूतौ सरांसि कर्त्तॄणि रसवद्भिः मधुरैः अम्बुभिः सिषेविरे, पतत्त्रिणः पक्षिणः सुखयन्तीति सुखानि। पचाद्यच्। श्रुतीनां सुखानि तैः कूजितैः, वायवः सुरभिपुष्परेणुभिः, जलदाः छायया च सिषेविरे इति सर्वत्र सम्बध्यते ॥ ११ ॥

नेति। तपः एषामस्तीति तपस्विनः। "तपःसहस्राभ्यां विनीनी:" इति विनिप्रत्ययः। लघुना इष्टेन। "त्रिष्विष्टेऽल्पे लघुः" इत्यमरः। तयोः उभयोः कर्मभूतयोः दर्शनेन यथा प्रीतिम् आपुः, तथा कमलशोभिनाम् अम्भसां दर्शनेन न आपुः, परिश्रमच्छिदां शाखिनां दर्शनेन च न आपुः ॥ १२ ॥

स्थाणुेति। सः आत्तकार्मुकः दशरथस्यापत्यं पुमान् दाशरथी रामः। "अत इञ् इति इञ्प्रत्ययः। स्थाणुः हरः।" "स्थाणुः कीले हरे स्थिरे" इति विश्वः। तेन दग्धवपुषः

तौ सुकेतुसुतया खिलीकृते
कौशिकाद्विदितशापया पथि।
निन्यतुः स्थलनिवेशिताटनी
लीलयैव धनुषी अधिज्यताम्॥ १४॥

ज्यानिनादमथ गृह्णती तयोः
प्रादुरास बहुलक्षपाच्छविः।
ताड़का चलकपालकुण्डला
कालिकेव निविड़ा बलाकिनी॥ १५॥

मदनस्य तपोवनं प्राप्य चारुणा विग्रहेण कायेन। "विग्रहः समरे काये" इति विश्वः। प्रतिनिधिः प्रतिकृतिः सदृशः अभवत् कर्मणा न पुनः। देहेन मदनसुन्दरः इति भावः॥ १३॥

ताविति। अत्र रामायणवचनम्, "अगस्त्यः परमः क्रुद्धः ताड़कामभिशप्तवान्। पुरुषादी महायक्षी विकृता विकृतानना। इदं रूपमपाहाय दारुणं रूपमस्तु ते॥" इति तदेतदाह, विदितशापयेति। कौशिकात् आख्यातुः। "आख्यातोपयोग" इत्यपादानात्। पञ्चमी विदितशापया सुकेतुसुतया ताड़कया खिलीकृते पथि। "खिलमप्रहतं स्थानम्" इति हलायुधः। "तौ रामलक्ष्मणौ स्थले निवेशिते अटनी धनुःकोटी याभ्यां तौ" तथोक्तौ। "कोटिरस्याटनिः" इत्यमरः। लीलया एव धनुषी अधिकृते ज्ये मौर्व्यौ ययोः ते अधिज्ये। "ज्या मौर्वी मातृभूमिषु" इति विश्वः। तयोर्भावः तत्ताम् अधिज्यतां निन्यतुः नीतवन्तौ। नय-तिर्द्विकर्मकः॥ १४॥

ज्येति। अथ तयोः ज्यानिनादं गृह्णती जानती शृण्वती

तीव्रवेगधुतमार्गवृक्षया
प्रेतचीवरवसा स्वनोग्रया ।
अभ्यभावि भरताग्रजस्तया
वात्ययेव पितृकाननोत्थया ॥ १६ ॥
उद्यतैकभुजयष्टिमायतीं
श्रोणिलम्बिपुरुषान्त्रमेखलाम् ।

इत्यर्थः, बहुलचपाच्छविः कृष्णपक्षरात्रिवर्णा । "बहुलः कृष्णपक्षे च" इति विश्वः । चले कपाले एव कुण्डले यस्याः सा तथोक्ता ताड़का, निविड़ा सान्द्रा बलाकिनी बलाकावती । "ब्रीह्यादिभ्यश्च" इतीनिः । कालिका इव घनावली इव । "कालिका योगिनीभेदे कार्ष्ण्ये गौर्य्यां घनावली" इति विश्वः । प्रादुरास प्रादुर्बभूव ॥ १५ ॥

तीव्रेति । तीव्रवेगेण धुताः कम्पिताः मार्गवृक्षाः यया तथोक्तया, प्रेतचीवराणि वस्ते इति प्रेतचीवरवाः तया प्रेतचीवरवसा, वसतेराच्छादनार्थात् क्विप् । स्वनेन सिंहनादेन उग्रया तया ताड़कया पितृकानने श्मशाने उत्था उत्थिता । "आतश्चोपसर्गे" इति उत्पूर्वात् तिष्ठतेः कर्त्तरि कप्रत्ययः । तया वात्यया इव वातसमूहेन इव । "पाशादिभ्यो यः" इति यः । भरताग्रजः रामः अभ्यभावि अभिभूतः । कर्मणि लुङ् । तीव्रवेगेत्यादिविशेषणानि वात्यायामपि योज्यानि ॥ १६ ॥

उद्यतेति । उद्यता उन्नमिता एकः भुजः एव यष्टिः यस्याः ताम् आयतीम् आयान्तीम् । इणो धातोः शतरि "उगितश्च" इति ङीप् । श्रोणिलम्बिनी पुरुषाणाम् अन्त्राणि एव मेखला

तां विलोक्य वनितावधे घृणां
पत्रिणा सह मुमोच राघवः॥ १७॥
यच्चकार विवरं शिलाघने
ताड़कोरसि स रामसायकः।
अप्रविष्टविषयस्य रक्षसां
द्वारतामगमदन्तकस्य तत्॥ १८॥
वाणभिन्नहृदया निपेतुषी
सा स्वकाननभुवं न केवलाम्।

यस्याः ताम्। इति विशेषणद्वयेनापि आततायित्वं सूचि-
तम्। अतएव तां विलोक्य राघवः वनितावधे स्त्रीवधनिमित्तं
घृणां जुगुप्सां करुणां वा। "जुगुप्साकरुणे घृणे" इत्यमरः।
पत्रिणा इषुणा सह। "पत्री रोप इषुर्द्वयोः" इत्यमरः।
मुमोच मुक्तवान्। आततायिवधे मनुः, "आततायिनमायान्तं
हन्यादेवाविचारयन्। जिघांसन्तं जिघांसीयान्न तेन ब्रह्महा
भवेत्। नाततायिवधे दोषः हन्तुर्भवति कश्चन॥" इति॥१७॥
यदिति। सः रामसायकः शिलावत् घने सान्द्रे ताड़को-
रसि यत् विवरं रन्ध्रं चकार तत् विवरं रक्षसाम् अप्रविष्टविष-
यस्य अप्रविष्टरक्षोदेशस्य इत्यर्थः। सापेक्षत्वेऽपि गमकत्वात्
समासः। "विषयः स्यादिन्द्रियार्थे देशे जनपदेऽपि च" इति
विश्वः। अन्तकस्य यमस्य द्वारताम् अगमत्। इयं प्रथमा
रक्षोहतिः इति भावः॥ १८॥
वाणेति। वाणभिन्नहृदया निपेतुषी निपतिता सती।
"क्वसुश्च" इति क्वसुप्रत्ययः, "उगितश्च" इति ङीप्। सा केव-
लाम् एकाम्। "निर्णीते केवलमिति त्रिलिङ्गं त्वेककृत्स्नयोः"

विष्टपत्रयपराजयस्थिरां
रावणश्रियमपि व्यकम्पयत् ॥ १९ ॥
राममन्मथशरेण ताड़िता
दुःसहेन हृदये निशाचरी ।
गन्धवद्रुधिरचन्दनोक्षिता
जीवितेशवसतिं जगाम सा ॥ २० ॥
नैर्ऋतघ्नमथ मन्त्रवन्मुनेः
प्रापदस्त्रमवदानतोषितात् ।

मरः । स्वकाननभुवं न व्यकम्पयत्, किन्तु विष्टपत्रयस्य
जित्रयस्य पराजयेन स्थिरां रावणश्रियम्, अपि व्यकम्पयत्
ड़कावधश्रवणेन रावणस्यापि भयमुत्पन्नमिति भावः ॥ १९ ॥

अथ ताड़काया अभिसारिकायाः समाधिरभिधीयते,
मेति । सा निशासु चरतीति निशाचरी राक्षसी अभि-
रिका च दुःसहेन सोढुमशक्येन रामः एव मन्मथः अन्यत्र
भिरामः मन्मथः तस्य शरेण हृदये उरसि मनसि च ।
हृदयं मनः उरसोः" इति विश्वः । ताड़िता विद्धाङ्गा
गवत् दुर्गन्धि यत् रुधिरम् असृक् तत् एव चन्दनं तेन
क्षिता लिप्ता अपरत्र गन्धवती सुगन्धिनी ये रुधिरचन्दने
कुमचन्दने ताभ्याम् उक्षिता । "रुधिरं कुङ्कुमासृजोः"
भयत्रापि विश्वः । जीवितेशस्य अन्तकस्य प्राणेश्वरस्य च
तिं जगाम ॥ २० ॥

नैर्ऋतेति । अथ अनन्तरं ताड़कान्तकः रामः अवदानं
क्रमः । "पराक्रमोऽवदानं स्यात्" इति भागुरिः । तेन
षितात् मुनेः, नैर्ऋतान् राक्षसान् हन्तीति नैर्ऋतघ्नम् ।

ज्योतिरिन्धननिपाति भास्करात्
सूर्य्यकान्त इव ताडकान्तकः ॥ २१ ॥

वामनाश्रमपदं ततः परं
पावनं श्रुतमृषेरुपेयिवान् ।
उन्मनाः प्रथमजन्मचेष्टिता-
न्यस्मरन्नपि बभूव राघवः ॥ २२ ॥

आससाद मुनिरात्मनस्ततः
शिष्यवर्गपरिकल्पितार्हणम् ।
बद्धपल्लवपुटाञ्जलिद्रुमं
दर्शनोन्मुखमृगं तपोवनम् ॥ २३ ॥

“अमनुष्यकर्तृके च” इति ठक् । मन्त्रवत् मन्त्रयुक्तम्
सूर्य्यकान्तः मणिविशेषः भास्करात् इन्धनानि निपातयति
इन्धननिपाति काष्ठदाहकं ज्योतिः इव, प्रापत् प्राप्तवान्

वामनेति । ततः परं राघवः ऋषेः कौशिकात्
श्रुतं पावनं शोधनं वामनस्य स्वपूर्वावतारविशेषस्य आश्रम
उपेयिवान् उपगतः सन् । “उपेयिवाननाश्वाननूचानश्च”
निपातः । प्रथमजन्मचेष्टितानि वामनजन्मयोरैक्यात्
योग्यान्यपि रामस्याज्ञानावतारत्वेन संस्कारदौर्बल्यादस्म
उन्मनाः उत्सुकः बभूव ॥ २२ ॥

आससादेति । ततः मुनिः शिष्यवर्गेण परिकल्पि
सज्जिता अर्हणा पूजासामग्री यस्मिन् तत् तथोक्तं बद्धाः
पुटाः एव अञ्जलयः यैः ते तथाभूताः द्रुमाः यस्मिन् तत् त
दर्शनेन मुनिदर्शनेन उन्मुखाः मृगाः यस्मिन् तत् आ

तत्र दीक्षितमृषिं ररक्षतु-
र्विघ्नतो दशरथात्मजौ शरैः ।
लोकमन्धतमसात् क्रमोदितौ
रश्मिभिः शशिदिवाकराविव ॥ २४ ॥

वीक्ष्य वेदिमथ रक्तबिन्दुभि-
र्बन्धुजीवपृथुभिः प्रदूषिताम् ।
सम्भ्रमोऽभवदपोढकर्मणाम्
ऋत्विजां च्युतविकङ्कतस्रुचाम् ॥ २५ ॥

नम् आससाद । एतेन विशेषणत्रयेणातिथिसत्कार-
शीलविनयशान्तयः सूचिताः ॥ २३ ॥

तत्रेति । तत्र तपोवने दशरथात्मजौ दीक्षितं दीक्षा-
तम् ऋषिं शरैः विघ्नतः विघ्नेभ्यः, क्रमेण पर्यायेण रात्रि-
सयोः उदितौ शशिदिवाकरौ रश्मिभिः अन्धतमसात्
ध्वान्तात् । "ध्वान्ते गाढेऽन्धतमसम्" इत्यमरः । "अव-
न्धेभ्यस्तमसः" इति समासान्तोऽच्प्रत्ययः । लोकम् इव,
तुः रक्षणप्रवृत्तावभूताम् इत्यर्थः ॥ २४ ॥

वीक्ष्येति । अथ बन्धुजीवपृथुभिः बन्धुजीवकुसुमस्थूलैः ।
कस्तु बन्धुको बन्धुजीवकः" इत्यमरः । रक्तबिन्दुभिः
षिताम् उपहतां वेदिं वीक्ष्य अपोढकर्मणां त्यक्तव्यापाराणां
ः विकङ्कतस्रुचः येभ्यः तेषाम् ऋत्विजां याजकानां
मः अभवत् । विकङ्कतग्रहणं खदिराद्युपलक्षणं स्रुगा-
ां खदिरादिप्रकृतिकत्वात् स्रुगादिपात्रस्यैव विकङ्कत-
तिकत्वात् । "विकङ्कतः स्रुवा वृक्षः" इत्यमरः । यद्वा

उन्मुखः सपदि लक्ष्मणाग्रजो-
बाणमाश्रयमुखात् समुद्धरन् ।
रक्षसां बलमपश्यदम्बरे
गृध्रपक्षपवनेरितध्वजम् ॥ २६ ॥

तत्र यावधिपती मखद्विषां
तौ शरव्यमकरोत् स नेतरान् ।
किं महोरगविसर्पिविक्रमो
राजिलेषु गरुड़ः प्रवर्त्तते ॥ २७ ॥

स्रुच्यासस्य विकङ्कतप्रकृतिकत्वमस्तु उभयत्रापि शास्त्रसद्भावात्
यथाह भगवानापस्तम्बः, "खादिरस्रुचः पर्णमयीर्जुहुया
वैकङ्कतीः स्रुचो वा" इति ॥ २५ ॥

उन्मुख इति । सपदि लक्ष्मणाग्रजः रामः बाणम् आश्र
मुखात् तूणीरमुखात् समुद्धरन् उन्मुखः ऊर्ध्वमुखः, अम्ब
गृध्रपक्षपवनैः ईरिताः कम्पिताः ध्वजाः यस्य तत् तथोक्तम्
रक्षसां दुर्निमित्तसूचनमेतत् । तदुक्तं शकुनार्णवे, "यास
मृत्योर्निकटे चरन्ति गृध्रादयो मूर्ध्नि गृहोर्ध्वभागे ।" इ
रक्षसां बलम् अपश्यत् ॥ २६ ॥

तत्रेति । सः रामः तत्र रक्षसां बले यौ मखद्विषा
अधिपती तौ सुबाहुमारीचौ शरव्यं लक्ष्यम् अकरोत् । "वेध्य
लक्ष्यं शरव्यं च" इति हलायुधः । इतरान् न अकरोत्
तथाहि, महोरगविसर्पिविक्रमः गरुड़ः गरुत्मान् राजिले
जलव्यालेषु प्रवर्त्तते किं ? न प्रवर्त्तते इत्यर्थः । "अलगर्द
जलव्यालः समौ राजिलडुण्डुभौ" इत्यमरः ॥ २७ ॥

सोऽस्त्रमुग्रजवमस्त्रकोविदः
सन्दधे धनुषि वायुदैवतम् ।
तेन शैलगुरुमप्यपातयत्
पाण्डुपत्रमिव ताड़कासुतम् ॥ २८ ॥

यः सुबाहुरिति राक्षसोऽपर-
स्तत्र तत्र विससर्प मायया ।
तं क्षुरप्रशकलीकृतं कृती
पत्रिणां व्यभजदाश्रमाद्वहिः ॥ २९ ॥

इत्यपास्तमखविघ्नयोस्तयोः
सांयुगीनमभिनन्द्य विक्रमम् ।

स इति । अस्त्रकोविदः अस्त्रज्ञः सः रामः उग्रजवम्
...टजवं वायुदैवतं वायुः दैवतं यस्य तत् वायव्यम् अस्त्रं
...षि सन्दधे संहितवान् । कर्त्तरि लिट् । तेन अस्त्रेण
...वत् गुरुम् अपि ताड़कासुतं मारीचं, पाण्डुपत्रम् इव परि-
...पर्णमिव इत्यर्थः, अपातयत् पातितवान् ॥ २८ ॥

य इति । सुबाहुः इति यः अपरः राक्षसः तत्र तत्र
...यया शम्बरविद्यया विससर्प सञ्चचार, क्षुरप्रैः शकलीकृतं
...लीकृतं तं सुबाहुं कृती कुशलः रामः । "कृती च कुशलः
...मौ" इत्यमरः । आश्रमात् वहिः पत्रिणां पक्षिणाम् ।
...क्षिणौ शरपक्षिणौ" इत्यमरः । व्यभजत् विभज्य दत्तवान्
...र्थः ॥ २९ ॥

इतीति । इति अपास्तमखविघ्नयोः तयोः राघवयोः
...युगे रणे साधुः सांयुगीनः तम् । "प्रतिजनादिभ्यः खञ्"

ऋत्विजः कुलपतेर्यथाक्रमं
वाग्यतस्य निरवर्त्तयन् क्रियाः॥ ३०॥

तौ प्रणामचलकाकपक्षकौ
भ्रातरावबभृथाप्लुतो मुनिः।
आशिषामनुपदं समस्पृशत्
दर्भपाटिततलेन पाणिना॥ ३१॥

तं न्यमन्त्रयत सम्भृतक्रतु-
मैंथिलः स मिथिलां व्रजन् वशी।
राघवावपि निनाय बिभ्रतौ
तद्धनुःश्रवणजं कुतूहलम्॥ ३२॥

इति खञ्प्रत्ययः। "सांयुगीनः रणे साधुः" इत्यमरः। वि[illegible]मम् अभिनन्द्य ऋत्विजः याज्ञिकाः वाचि यतः वाग्यतः मौ[illegible] तस्य कुलपतेः मुनिकुलेश्वरस्य क्रियाः क्रतुक्रियाः यथाक्र[illegible] निरवर्त्तयन् निष्पादितवन्तः॥ ३०॥

ताविति। अवभृथे दीक्षान्ते आप्लुतः स्नातः मुनि[illegible] "दीक्षान्तोऽवभृथो यज्ञः" इत्यमरः। प्रणामेन चलकाक[illegible] पक्षकौ चञ्चलचूड़ौ तौ भ्रातरौ आशिषाम् अनुपदम् अन्व[illegible] दर्भपाटिततलेन कुशक्षतान्तःप्रदेशेन पवित्रेण इत्यर्थः पाणिना समस्पृशत् संस्पृष्टवान् सन्तोषादिति भावः॥ ३१॥

तमिति। सम्भृतक्रतुः सङ्कल्पितसम्भारः मिथिलायां भ[illegible] मैथिलः जनकः तं विश्वामित्रं न्यमन्त्रयत आह्वतवान्, व[illegible] सः मुनिः मिथिलां जनकनगरीं व्रजन् तस्य जनकस्य यत् ध[illegible] तच्छ्रवणजं कुतूहलं बिभ्रतौ राघवौ अपि निनाय नीतवान्॥ ३[illegible]

तैः शिवेषु वसतिर्गताध्वभिः
सायमाश्रमतरुष्वगृह्यत ।
येषु दीर्घतपसः परिग्रहो-
वासवक्षणकलत्रतां ययौ ॥ ३३ ॥

प्रत्यपद्यत चिराय यत् पुन-
श्चारु गौतमवधूः शिलामयी ।
स्वं वपुः स किल किल्बिषच्छिदां
रामपादरजसामनुग्रहः ॥ ३४ ॥

राघवान्वितमुपस्थितं मुनिं
तं निशम्य जनको जनेश्वरः ।
अर्थकामसहितं सपर्य्यया
देहबद्धमिव धर्ममभ्यगात् ॥ ३५ ॥

तैरिति। गताध्वभिः तैः त्रिभिः सायं शिवेषु रम्येषु [आ]श्रमतरुषु वसतिः स्थानम् अगृह्यत, येषु आश्रमतरुषु दीर्घ[त]पसः गौतमस्य परिग्रहः पत्नी। "पत्नीपरिजनादानमूलशापाः [प]रिग्रहाः" इत्यमरः। अहल्या इति यावत् वासवस्य इन्द्रस्य [क्ष]णकलत्रतां ययौ ॥ ३३ ॥

प्रत्यपद्यतेति। शिलामयी भर्त्तृशापात् शिलात्वं प्राप्ता [गौ]तमवधूः अहल्या चारु स्वं वपुः चिराय पुनः प्रत्यपद्यत [प्राप्त]वती यत्, सः किल्बिषच्छिदां पापहारिणाम्। "पापं [कि]ल्बिषकल्मषम्" इत्यमरः। रामपादरजसाम् अनुग्रहः [फ]ल प्रसादः। किल इति श्रूयते ॥ ३४ ॥

राघवेति। राघवाभ्याम् अन्वितं युक्ताम् उपस्थितमागतं

तौ विदेहनगरीनिवासिनां
गां गताविव दिवः पुनर्वसू ।
मन्यते स्म पिबतां विलोचनैः
पक्ष्मपातमपि वञ्चनां मनः ॥ ३६ ॥

यूपवत्यवसिते क्रियाविधौ
कालवित् कुशिकवंशवर्द्धनः ।
राममिष्वसनदर्शनोत्सुकं
मैथिलाय कथयाम्बभूव सः ॥ ३७ ॥

तं मुनिं जनकः जनेश्वरः निशम्य, अर्घ्यकामाभ्यां सहितं देहवन्तं बद्धदेहं मूर्त्तिमन्तम् इत्यर्थः । वाहिताग्न्यादित्वात् साधुः । धर्मम् इव, सपर्य्यया अभ्यगात् प्रत्युद्गतवान् ॥ ३५ ॥

ताविति । दिवः सुरवर्त्मनः आकाशात् । "द्यौः स्वर्गसुरवर्त्मनोः" इति विश्वः । गां भुवं गतौ । "स्वर्गेषु पशुवाग्वज्रदिङ्नेत्रघृणिभूजले । लक्ष्यदृष्ट्या स्त्रियां पुंसि गौः" इत्यमरः । पुनर्वसू इव तन्नामकनक्षत्राधिदेवते इव स्थितौ तौ राघवौ विलोचनैः पिबताम् अत्यास्थया पश्यताम् विदेहनगरी मिथिला तन्निवासिनां मनः कर्त्तृ पक्ष्मपातं निमेषम् अपि तद्दर्शनप्रतिबन्धकत्वात् वञ्चनां विप्रलम्भं मन्यते स्म मेने । "लट् स्मे" इति भूतार्थे लट् ॥ ३६ ॥

यूपेति । यूपवति क्रियाविधौ कर्मानुष्ठाने क्रतौ यज्ञे अवसिते समाप्ते सति कालवित् अवसरज्ञः कुशिकवंशवर्द्धनः सः मुनिः रामम्, अस्यते अनेनेति असनम् इषूणाम् असनम् इष्वसनं चापं तस्य दर्शने उत्सुकम्, मैथिलाय जनकाय कथयाम्बभूव कथितवान् ॥ ३७ ॥

तस्य वीक्ष्य ललितं वपुः शिशोः
पार्थिवः प्रथितवंशजन्मनः ।
स्वं विचिन्त्य च धनुर्दुरानमं
पीड़ितो दुहितृशुल्कसंस्थया ॥ ३८ ॥

अब्रवीच्च भगवन् ! मतङ्गजै-
र्यद् बृहद्भिरपि कर्म दुष्करम् ।
तत्र नाहमनुमन्तुमुत्सहे
मोघवृत्ति कलभस्य चेष्टितम् ॥ ३९ ॥

ह्रेपिता हि बहवो नरेश्वरा
स्तेन तात ! धनुषा धनुर्भृतः ।

तस्येति । पार्थिवः जनकः प्रथितवंशे जन्म यस्य तस्य तयो-स्य, एतेन वरसम्पत्तिरुक्ता । शिशोः तस्य रामस्य ललितं ोमलं वपुः वीक्ष्य, स्वं स्वकीयं दुरानमम् आनमयितुमश-म्। नमेर्ण्यन्तात् खल्। धनुः विचिन्त्य च दुहितृशुल्कं यामूल्यं जामातृदेयम्। "शुल्कं घट्टादिदेये स्यात् जामा-दिदेयकेऽपि च" इति विश्वः। तस्य धनुर्भङ्गरूपस्य संस्थया रत्या। "संस्था स्थितौ मृतौ मार्गे" इति विश्वः। पीड़ितः थितः शिशुना रामेण दुष्करमिति दुःखितः इति भावः ॥३८॥

अब्रवीदिति। अब्रवीच्च मुनिम् इति शेषः। किमिति ? भगवन् ! मुने ! बृहद्भिः मतङ्गजैः महागजैः अपि दुष्करं [ कर्म तत्र कर्मणि कलभस्य बालगजस्य। "कलभः रिशावकः" इत्यमरः। मोघवृत्ति व्यर्थव्यापारं चेष्टितं रयम् अनुमन्तुम् अहं न उत्सहे ॥ ३९ ॥

ज्यानिघातकठिनत्वचो भुजान्
स्वान् विधूय धिगिति प्रतस्थिरे ॥ ४० ॥
प्रत्युवाच तमृषिर्निशम्यतां
सारतोऽयमथवा गिरा कृतम्।
चाप एव भवतो भविष्यति
व्यक्तशक्तिरशनिर्गिराविव ॥ ४१ ॥
एवमाप्तवचनात् स पौरुषं
काकपक्षकधरेऽपि राघवे।
श्रद्दधे त्रिदशगोपमात्रके
दाहशक्तिमिव कृष्णवर्त्मनि ॥ ४२ ॥

कोपिता इति। हे तात! तेन धनुषा बहवः धनुर्भृतः नरेश्वराः कोपिताः क्रियं प्रापिताः हि। जिक्रतेर्धातोर्ण्यन्तात् कर्मणि क्तः। "अर्त्तिक्री—" इत्यादिना पुगागमः। ते नरेश्वराः ज्यानिघातैः कठिनत्वचः स्वान् भुजान् धिक् इति विधूय अवमत्य प्रतस्थिरे प्रस्थिताः ॥ ४० ॥

प्रतीति। ऋषिः तं प्रत्युवाच। किमिति? अयं रामः सारतः बलेन निशम्यतां श्रूयताम्, अथवा गिरा सारवर्णनया कृतम् अलं गौर्न वक्तव्या इत्यर्थः। "युगपर्य्याप्तयोः कृतम्" इत्यमरः। अव्ययं चैतत्। "कृतं निवारणनिषेधयोः" इति गणव्याख्याने। गिरेति करणे तृतीया, निषेधक्रियां प्रति करणत्वात्। किन्तु, अशनिः वज्रः गिरौ इव, चापे धनुषि एव भवतः तव व्यक्तशक्तिः दृष्टसारः भविष्यति ॥ ४१ ॥

एवमिति। एवम् आप्तस्य मुनेः वचनात् सः जनकः

व्यादिदेश गणशोऽथ पार्श्वगान्
कार्मुकाभिहरणाय मैथिलः ।
तैजसस्य धनुषः प्रवृत्तये
तोयदानिव सहस्रलोचनः ॥ ४३ ॥

तत् प्रसुप्तभुजगेन्द्रभीषणं
वीक्ष्य दाशरथिराददे धनुः ।
विद्रुतक्रतुमृगानुसारिणं
येन बाणमसृजत् वृषध्वजः ॥ ४४ ॥

कपक्षकधरे बाले अपि राघवे पुरुषस्य कर्म पौरुषं परा-
म् । "हायनान्तयुवादिभ्योऽण्" इति युवादित्वादण् ।
रुषं पुरुषस्योक्तं भावे कर्मणि तेजसि" इति विश्वः ।
द्रगोपः इन्द्रगोपकीटः प्रमाणमस्य चिद्रगोपमात्रः ।
णे "द्वयसच्—" इत्यादिना मात्रच्प्रत्ययः, ततः स्वार्थे
त्ययः । तस्मिन् कृष्णवर्त्मनि वह्नौ दाहशक्तिम् इव, अदृधं
बलवान् ॥ ४२ ॥

व्यादिदेशेति । अथ मैथिलः पार्श्वगान् पुरुषान् कार्मु-
भिहरणाय कार्मुकमानेतुम् । "तुमर्थाच्च—" इति चतुर्थी ।
स्रलोचनः इन्द्रः तैजसस्य तेजोमयस्य धनुषः प्रवृत्तये आवि-
ाय तोयदान् मेघान् इव, गणान् गणशः । "सङ्ख्यैकवच-
। वीप्सायाम्" इति शस्प्रत्ययः । व्यादिदेश प्रजिघाय ॥४३॥

तदिति । दाशरथिः रामः प्रसुप्तभुजगेन्द्रः इव भीषणं
रं तत् धनुः वीक्ष्य आददे जग्राह । वृषः ध्वजः चिह्नं
' सः शिवः येन धनुषा, क्रतुरेव मृगः विद्रुतं पलायितं

आततज्यमकरोत् स संसदा
विस्मयस्तिमितनेत्रमीक्षितः।
शैलसारमपि नातियत्नतः
पुष्पचापमिव पेशलं स्मरः॥ ४५॥
भज्यमानमतिमात्रकर्षणात्
तेन वज्रपरुषस्वनं धनुः।
भार्गवाय दृढमन्यवे पुनः
क्षत्रमुद्यतमिव न्यवेदयत्॥ ४६॥
दृष्टसारमथ रुद्रकार्मुके
वीर्य्यशुल्कमभिनन्द्य मैथिलः।

क्रतुमृगम् अनुसरति। ताभ्यामीक्षे ईक्षितः। तं विद्रुतक्रतु-मृगानुसारिणं बाणम् अस्रजत् मुमोच॥ ४४॥

आततेति। सः रामः संसदा सभया विस्मयेन स्तिमिते नेत्रे यस्मिन् कर्मणि तत् यथा स्यात् तथा ईक्षितः सन् शैल-स्येव सारः यस्य तत् शैलसारम् अपि धनुः, स्मरः पेशलं कोमलं पुष्पचापम् इव, नातियत्नतः नातियत्नात्। नञर्थस्य नशब्दस्य सुप्सुपेति समासः। आततज्यम् अधिज्यम् अक-रोत्॥ ४५॥

भज्यमानमिति। तेन रामेण अतिमात्रकर्षणात् भज्य-मानम् अतएव वज्रपरुषस्वनं वज्रमिव परुषः स्वनः यस्य तत् धनुः कर्त्तृ दृढमन्यवे दृढक्रोधाय। "मन्युः क्रोधे क्रतौ दैन्ये" इति विश्वः। भार्गवाय क्षत्रं क्षत्रकुलं पुनः उद्यतं न्यवेदयत् इव ज्ञापयामास इव॥ ४६॥

राघवाय तनयामयोनिजां
रूपिणीं श्रियमिव न्यवेदयत् ॥ ४७ ॥
मैथिलः सपदि सत्यसङ्गरो-
राघवाय तनयामयोनिजाम् ।
सन्निधौ द्युतिमतस्तपोनिधे-
रग्निसाक्षिक इवातिसृष्टवान् ॥ ४८ ॥
प्राहिणोच्च महितं महाद्युतिः
कोसलाधिपतये पुरोधसम् ।
भृत्यभावि दुहितुः परिग्रहात्
दिश्यतां कुलमिदं निमेरिति ॥ ४९ ॥

दृष्टेति । अथ मैथिलः जनकः रुद्रकार्मुके दृष्टः सारः
सारांशः यस्य तत् दृष्टसारम् । "सारो बले स्थिरांशे च"
इति विश्वः । वीर्य्यमेव शुल्कं धनुर्भङ्गरूपम् इत्यर्थः । अभि-
नन्द्य राघवाय रामाय अयोनिजां देवयजनसम्भवां तनयां
सुतां रूपिणीं श्रियमिव साक्षाल्लक्ष्मीमिव न्यवेदयत् अर्पित-
वान् वाचा इति शेषः ॥ ४७ ॥

उक्तमेवार्थं सोपस्कारमाह, मैथिल इति । सत्यसङ्गरः
सत्यप्रतिज्ञः । "अथ प्रतिज्ञाजिसंविदापत्सु सङ्गरः" इत्य-
मरः । मैथिलः राघवाय अयोनिजां तनयां द्युतिमतः तेज-
स्विनः तपोनिधेः कौशिकस्य सन्निधौ अग्निः साक्षी यस्य सः
अग्निसाक्षिकः "शेषाद्विभाषा" इति कप्प्रत्ययः । सः इव
सपदि अतिसृष्टवान् दत्तवान् ॥ ४८ ॥

प्राहिणोदिति । महाद्युतिः जनकः महितं पूजितं

अन्विवेष सदृशीं स च स्नुषां
प्राप चैनमनुकूलवाक् द्विजः ।
सद्य एव सुकृतां हि पच्यते
कल्पवृक्षफलधर्मि काङ्क्षितम् ॥ ५० ॥
तस्य कल्पितपुरस्क्रियाविधेः
शुश्रुवान् वचनमग्रजन्मनः ।
उच्चचाल बलभित्सखो वशी
सैन्यरेणुमुषितार्कदीधितिः ॥ ५१ ॥

पुरोधसं पुरोहितं कोसलाधिपतये दशरथाय प्राहिणोत् प्रहित-
वान् च । किमिति । निमिर्नाम जनकानां पूर्वजः कश्चित्
इदं निमेः कुलं दुहितुः सीतायाः परिग्रहात् स्नुषात्वे
स्वीकारात् हेतोः भृत्यस्य भावः भृत्यत्वं सोऽस्यास्तीति भृत्य-
भावि दिश्यताम् अनुमन्यताम् इति ॥ ४८ ॥

अन्विवेषेति । सः दशरथश्च सदृशीम् अनुरूपां स्नुषाम्
अन्विवेष रामविवाहमाचकाङ्क्ष इत्यर्थः । अनुकूलवाक् स्नुषा-
सिद्धिरूपानुकूलार्थवादी द्विजः जनकपुरोधाश्च एनं दशरथं
प्राप । तथाहि, कल्पवृक्षफलस्य यः धर्मः सद्यःपाकत्वं
सोऽस्यास्तीति कल्पवृक्षफलधर्मि अतः सुकृतां पुण्यकारिणां
काङ्क्षितं मनोरथः सद्यः एव पच्यते हि । कर्मकर्त्तरि लट् ।
स्वयमेव पक्वं भवति इत्यर्थः । "कर्मवत् कर्मणा तुल्यक्रियः"
इति कर्मवद्भावात् "भावकर्मणोः इत्यात्मनेपदम् ॥ ५० ॥

तस्येति । बलभित्सखः इन्द्रसहचरः वशी स्वाधीनत्व-
वान् । "वश आयत्ततायां च" इति विश्वः । कल्पितपुरस्क्रिया-
विधेः कृतपूजाविधेः तस्य अग्रजन्मनः द्विजस्य वचनं जनकेन

आससाद मिथिलां स वेष्टयन्
पीड़ितोपवनपादपां बलैः।
प्रीतिरोधमसहिष्ट सा पुरी
स्त्रीव कान्तपरिभोगमायतम् ॥ ५२ ॥

तौ समेत्य समये स्थितावुभौ
भूपती वरुणवासवोपमौ।
कन्यकातनयकौतुकक्रियां
स्वप्रभावसदृशीं वितेनतुः ॥ ५३ ॥

पार्थिवीमुदवहद्रघूद्वहः
लक्ष्मणस्तदनुजामथोर्मिलाम्।

...दृष्टं शुश्रुवान् श्रुतवान्। शृणोतेः क्वसुः। सैन्यरेणु-
...पितार्कदीधितिः सन् उच्चचाल प्रतस्थे ॥ ५१ ॥

आससादेति। सः दशरथः बलैः सैन्यैः पीड़ितोपवन-
...दपां मिथिलां वेष्टयन् परिधीकुर्वन् आससाद। सा पुरी
...युवतिः आयतम् अतिप्रसक्तं कान्तपरिभोगं प्रियसम्भोग-
...व, प्रीत्या रोधं प्रीतिरोधम् असहिष्ट सोढ़वती। द्वेषरोधन्तु
...सहते इति भावः ॥ ५२ ॥

ताविति। समये स्थितौ आचारनिष्ठौ। "समयाः शपथा-
...रकालसिद्धान्तसंविदः" इत्यमरः। वरुणवासवौ उपमा
...मानं ययोः तौ तथोक्तौ तौ उभौ भूपती जनकदशरथौ
...मेत्य स्वप्रभावसदृशीम् आत्ममहिमानुरूपां कन्यकानां
...तादीनां तनयानां रामादीनाञ्च कौतुकक्रियां विवाहो-
...ं वितेनतुः विस्तृतवन्तौ। तनोतेर्लिट् ॥ ५३ ॥

यौ तयोरवरजौ वरौजसौ
तौ कुशध्वजसुते सुमध्यमे ॥ ५४ ॥
ते चतुर्थसहितास्त्रयो बभुः
सूनवो नववधूपरिग्रहात् ।
सामदानविधिभेदनिग्रहाः
सिद्धिमन्त इव तस्य भूपतेः ॥ ५५ ॥
ता नराधिपसुता नृपात्मजै-
स्ते च ताभिरगमन् कृतार्थताम् ।

पार्थिवीमिति । उद्वहतीत्युद्वहः । पचाद्यच् । रघूणाम् उद्वहः रघूद्वहः रामः पृथिव्याः अपत्यं स्त्री पार्थिवी । "तस्या-पत्यम् इत्यणि "टिड्ढे"ति ङीप् । तां सीताम् उदवहत् परि-णीतवान् । अथ लक्ष्मणः तस्याः सीतायाः अनुजां जनक-स्यौरसीम् ऊर्मिलाम् उदवहत् । यौ वरौजसौ तयोः राम-लक्ष्मणयोः अवरजौ अनुजातौ भरतशत्रुघ्नौ तौ सुमध्यमे कुशध्वजस्य जनकानुजस्य सुते कन्यके माण्डवीं श्रुतकीर्तिं उदवहताम् । नात्र व्युत्क्रमविवाहदोषः भिन्नोदरत्वात् । तदुक्तम्, "पितृव्यपुत्रे सापत्ने परनारीसुतेषु च । विवाह-धानयज्ञादौ परिवेत्ताद्यदूषणम् ॥" इति ॥ ५४ ॥

त इति । ते चतुर्थसहिताः त्रयः चत्वारः इत्यर्थः । वृत्तानुसारादेवमुक्तम् सूनवः नववधूपरिग्रहाः, सिद्धिमन्तः फलसिद्धियुक्ताः तस्य भूपतेः दशरथस्य सामदानविधिभेद-निग्रहाः चत्वारः उपायाः इव बभुः । विधीयते इति विधिः दानम् एव विधिः, निग्रहो दण्डः । सूनूनामुपायैः सह सिद्धिभिश्चौपम्यमित्यनुसन्धेयम् ॥ ५५ ॥

सोऽभवद्वरवधूसमागमः
प्रत्ययप्रकृतियोगसन्निभः ॥ ५६ ॥

एवमात्तरतिरात्मसम्भवान्
तान् निवेश्य चतुरोऽपि तत्र सः ।
अध्वसु त्रिषु विसृष्टमैथिलः
स्वां पुरीं दशरथो न्यवर्त्तत ॥ ५७ ॥

तस्य जातु मरुतः प्रतीपगाः
वर्त्मसु ध्वजतरुप्रमाथिनः ।

ता इति । ताः नराधिपसुताः जनकजन्याः नृपात्मजैः रथपुत्रैः कृतार्थतां कुलशीलवयोरूपादिसाफल्यम् अगमन्, ते च ताभिः तथा । किञ्च, स वराणां वधूनाञ्च समागमः, यानां प्रकृतीनाञ्च योगः इव, सन्निभातीति सन्निभः भवत् । पचाद्यच् । प्रत्ययाः सनादयः येभ्यः विधीयन्ते ः प्रकृतयः । यथा प्रकृतिप्रत्यययोः सहैकार्थसाधनत्वं त्रापि इति भावः ॥ ५६ ॥

एवमिति । एवम् आत्तरतिः अनुरागवान् सः दशरथः न् चतुरः अपि आत्मसम्भवान् पुत्रान् तत्र मिथिलायां वेश्य विन्यस्य । "निवेशः शिबिरोद्वाहविन्यासेषु प्रकीर्त्तितः" इति विश्वः । त्रिषु अध्वसु प्रयाणेषु सत्सु विसृष्टमैथिलः सन् स्वां पुरीं न्यवर्त्तत । उद्देश्यगमिक्रियापेक्षया कर्मत्वं र्थः ॥ ५७ ॥

तस्येति । जातु कदाचित् वर्त्मसु ध्वजाः एव तरवः तान् प्रमथ्नन्ति ये ते ध्वजतरुप्रमाथिनः प्रतीपगाः प्रतिकूलगामिनः मरुतः, उत्कटाः नदीरयाः वेलाम् "आकालिकभूमिम्

त्रिक्षिशुभ्रं शतया वरूथिनीम्
उत्तटा इव नदीरयाः स्थलीम् ॥ ५८ ॥
लक्ष्यते स्म तदनन्तरं रवि-
र्बद्धभीमपरिवेशमण्डलः ।
वैनतेयशमितस्य भोगिनो-
भोगवेष्टित इव च्युतो मणिः ॥ ५९ ॥
श्येनपक्षपरिधूसरालकाः
सान्ध्यमेघरुधिरार्द्रवाससः ।
अङ्गना इव रजस्वला दिशो-
नो बभूवुरवलोकनक्षमाः ॥ ६० ॥

इव। "जानपदकुण्ड" इत्यादिना ङीप्। तस्य वरूथि-
सेनां भृशतया भृशं त्रिक्षिप्यः क्षिपयन्ति स्म ॥ ५८ ॥

लक्ष्यत इति। तदनन्तरं प्रतीपपवनानन्तरं बद्धं भीम-
परिवेशस्य परिधेः मण्डलं यस्य सः। "परिवेशस्तु परिधि-
रुपसूर्य्यकमण्डले" इत्यमरः। रविः, वैनतेयशमितस्य गरुड़-
हतस्य भोगिनः सर्पस्य भोगेन कायेन। "भोगः सुखे स्त्र्यादि-
भृतावहेश्च फणकाययोः" इत्यमरः। वेष्टितः च्युतः शिरोभ्रष्ट
मणिः इव, लक्ष्यते स्म ॥ ५९ ॥

श्येनेति। श्येनपक्षाः एव परिधूसराः अलकाः यासां
ताः तथोक्ताः। सान्ध्यमेघाः एव रुधिरार्द्राणि वासांसि यासां
ताः तथोक्ताः रजः धूलिरासामस्तीति रजस्वलाः। "रजःकृषा-
सुतिपरिषदो वलच्" इति वलच् प्रत्ययः। दिशः रजस्वला
ऋतुमत्यः अङ्गनाः इव। "स्याद्रजः पुष्पमार्त्तवम्" इत्यमरः।

भास्करश्च दिशमध्युवास यां
तां श्रिताः प्रतिभयं ववासिरे ।
क्षत्रशोणितपितृक्रियोचितं
चोदयन्त्य इव भार्गवं शिवाः ॥ ६१ ॥
तत् प्रतीपपवनादि वैकृतं
प्रेक्ष्य शान्तिमधिकृत्य कृत्यवित् ।
अन्वयुङ्क्त गुरुमीश्वरः क्षितेः
स्वन्तमित्यलघयत् स तद्व्यथाम् ॥ ६२ ॥

वलोकनक्षमाः दर्शनार्हाः नो बभूवुः । एकत्राहष्टदोषा-
त्र शास्त्रदोषादिति विज्ञेयम् । अत्र रजोदृष्टिवत्-
त उक्तः ॥ ६० ॥

भास्कर इति । भास्करः यां दिशम् अध्युवास च यस्यां
शि उषितः । "उपान्वध्याङ् वसः" इति कर्मत्वम् । तां
शं श्रिताः शिवाः गोमायवः । "स्त्रियां शिवा भूरिमायगो-
ायुमृगधूर्त्तकाः" इत्यमरः । क्षत्रशोणितेन या पितृक्रिया
तर्पणं तत्र उचितं परिचितं भार्गवं चोदयन्त्यः इव
तिभयं भयङ्करं ववासिरे रुरुवुः । "वाशृ शब्दे" इति धातो-
दि । "तिरश्चां वासितं रुतम्" इत्यमरः ॥ ६१ ॥

तदिति । तत् प्रतीपपवनादि वैकृतं दुर्निमित्तं प्रेक्ष्य
त्यवित् कार्य्यज्ञः क्षितेः ईश्वरः शान्तिम् अनर्थनिवृत्तिम्
धिकृत्य उद्दिश्य गुरुं वशिष्ठम् अन्वयुङ्क्त अपृच्छत् ।
श्नोऽनुयोगः पृच्छा च" इत्यमरः । सः गुरुः स्वन्तं शुभो-
र्कं भावीति तस्य राज्ञः व्यथाम् अलघयत् लघूकृतवान् ॥ ६२ ॥

तेजसः सपदि राशिरुत्थितः
प्रादुरास किल वाहिनीमुखे।
यः प्रमृज्य नयनानि सैनिकै-
र्लक्षणीयपुरुषाकृतिश्चिरात्॥ ६३॥

पित्र्यमंशमुपवीतलक्षणं
मातृकञ्च धनुरूर्जितं दधत्।
यः ससोम इव घर्मदीधितिः
सद्विजिह्व इव चन्दनद्रुमः॥ ६४॥

येन रोषपरुषात्मनः पितुः
शासने स्थितिभिदोऽपि तस्थुषा।

तेजस इति। सपदि उत्थितः तेजसः राशिः वाहिनी-मुखे सेनाग्रे प्रादुरास किल खलु। यः सैनिकैः नयनानि प्रमृज्य चिरात् लक्षणीया भावनीया पुरुषाकृतिः यस्य सः तथोक्तः। अभूत् इति शेषः॥ ६३॥

पित्र्यमिति। उपवीतं लक्षणं चिह्नं यस्य तं पितुरयं पित्र्यः। "वाय्वृतुपित्रुषसो यत्" इति यत्प्रत्ययः। तम् अंशम् धनुषा ऊर्जितं धनुरूर्जितम्। मातुरयं मातृकः। "ऋतष्ठञ्" इति ठञ्प्रत्ययः। तम् अंशञ्च दधत् यः भार्गवः, ससोमः चन्द्रयुक्तः घर्मदीधितिः सूर्यः इव, सद्विजिह्वः ससर्पः चन्दनद्रुमः इव, स्थितः॥ ६४॥

येनेति। रोषपरुषः आत्मा बुद्धिः यस्य सः। "आत्मा जीवो धृतिर्बुद्धिः" इत्यमरः। तस्य रोषपरुषात्मनः स्थिति-भिदः आर्य्य मर्य्यादालङ्घिनः अपि पितुः शासने तस्थुषा स्थितेन

वेपमानजननीशिरश्छिदा
प्रागजीयत घृणा ततो मही ॥ ६५ ॥
अक्षबीजवलयेन निर्बभौ
दक्षिणश्रवणसंस्थितेन यः ।
क्षत्रियान्तकरणैकविंशते-
र्व्याजपूर्वगणनामिवोद्वहन् ॥ ६६ ॥
तं पितुर्वधभवेन मन्युना
राजवंशनिधनाय दीक्षितम् ।
बालसूनुरवलोक्य भार्गवं
स्वां दशाञ्च विषसाद पार्थिवः ॥ ६७ ॥

पमानजननीशिरश्छिदा येन प्राक् घृणा अजीयत । ततः
नन्तरं मही अजीयत । मातृहन्तुः क्षत्रवधात् कुतो जुगुप्सा
ति भावः ॥ ६५ ॥

अक्षेति । यः भार्गवः दक्षिणश्रवणे संस्थितेन अक्षबीज-
लयेन अक्षमालया क्षत्रियान्तकरणानां क्षत्रियवधानाम्
कविंशतेः एकविंशतिसंख्यायाः व्याजः अक्षमालारूपः पूर्वः
स्याः तां गणनाम् उद्वहन् इव निर्बभौ ॥ ६६ ॥

तमिति । पितुः जमदग्नेः वधभवेन क्षत्रियकर्तृकवधो-
त्थेन मन्युना कोपेन राजवंश्यानां निधनाय नाशार्थम् ।
निधनं स्यात् कुले नाशे" इति विश्वः । दीक्षितं प्रवृत्तम्
त्यर्थः । तं भार्गवं स्वां दशाम् च अवलोक्य बालाः सूनवः यस्य
: पार्थिवः विषसाद । स्वस्यातिदौर्बल्यात् शत्रोरति-
लत्वात् चान्दिग्धोकोऽभवत् इत्यर्थः ॥ ६७ ॥

नाम राम इति तुल्यमात्मजे
वर्त्तमानमहिते च दारुणे ।
हृद्यमस्य भयदायि चाभवत्
रत्नजातमिव हारसर्पयोः ॥ ६८ ॥

अर्घ्यमर्घ्यमिति वादिनं नृपं
सोऽनवेक्ष्य भरताग्रजो यतः ।
क्षत्रकोपदहनार्चिषं ततः
सन्दधे दृशमुदग्रतारकाम् ॥ ६९ ॥

तेन कार्मुकनिषक्तमुष्टिना
राघवो विगतभीः पुरोगतः ।

नामेति । आत्मजे पुत्रे दारुणे घोरे अहिते शत्रौ च तुल्यम् अविशेषेण वर्त्तमानं राम इति नाम हारसर्पयोः वर्त्तमानं रत्नजातम् इव, अस्य दशरथस्य हृद्यं हृदयङ्गमं भयदायि भयङ्करं च अभवत् ॥ ६८ ॥

अर्घ्यमिति । सः भार्गवः अर्घ्यम् अर्घ्यम् इति वादिनं नृपम् अनवेक्ष्य यतः यत्र भरताग्रजः ततः तत्र । "इतराभ्योऽपि दृश्यन्ते" इति सार्वविभक्तिकस्तसिः । क्षत्रे क्षत्रकुले विषये यः कोपदहनः रोषाग्निः तस्य अर्चिषं ज्वालाम् इव स्थिताम् । "ज्वालाभासोर्नपुंस्यर्चिः" इत्यमरः । उदग्रा तारका कनीनिका यस्याः ताम् । "तारकाक्ष्णः कनीनिका" इत्यमरः । दृशं सन्दधे ॥ ६९ ॥

तेनेति । कार्मुकनिषक्तमुष्टिना शरम् अङ्गुलीविवरचारिणं कुर्वता योद्धुमिच्छता युयुत्सुना तेन भार्गवेण कर्मा

अङ्गुलीविवरचारिणं शरं
कुर्वता निजगदे युयुत्सुना ॥ ७० ॥
क्षत्त्रजातमपकारवैरि मे
तन्निहत्य बहुशः शमं गतः ।
सुप्तसर्प इव दण्डघट्टना-
द्रोषितोऽस्मि तव विक्रमश्रवात् ॥ ७१ ॥
मैथिलस्य धनुरन्यपार्थिवै-
स्त्वं किलानमितपूर्वमक्षणोः ।
तन्निशम्य भवता समर्थये
वीर्य्यशृङ्गमिव भग्नमात्मनः ॥ ७२ ॥

विगतभीः निर्भीकः सन् पुरोगतः अग्रगतः राघवः निजगदे उक्तः । कर्म्मणि लिट् ॥ ७० ॥

क्षत्त्रेति । क्षत्त्रजातं क्षत्त्रजातिः मे अपकारेण पितृवध-रूपेण वैरि द्वेषि तत् क्षत्त्रजातं बहुशः एकविंशतिवारान् निहत्य शमं गतोऽस्मि, तथापि सुप्तसर्पः दण्डघट्टनादिव तव विक्रमस्य श्रवणात् आकर्णनात् रोषितः रोषं प्रापितः अस्मि ॥ ७१ ॥

मैथिलस्येति । अन्यैः पार्थिवैः अनमितपूर्वं पूर्वमन-मितम् । सुप्सुपेति समासः । अस्य मैथिलस्य धनुः त्वम् अक्षणोः क्षतवान् किलेति वार्त्तायाम् । "वार्त्ता सम्भाव्ययोः किल" इत्यमरः । तत् धनुर्भङ्गं निशम्य आकर्ण्य भवता आत्मनः मम वीर्य्यमेव शृङ्गं भग्नमिव समर्थये मन्ये ॥ ७२ ॥

अन्यदा जगति राम इत्ययं
शब्द उच्चरित एव मामगात्।
व्रीड़मावहति मे स सम्प्रति
व्यस्तवृत्तिरुदयोन्मुखे त्वयि॥ ७३॥

बिभ्रतोऽस्त्रमचलेऽप्यकुण्ठितं
द्वौ रिपू मम मतौ समागसौ।
धेनुवत्सहरणाच्च हैहय-
स्त्वञ्च कीर्त्तिमपहर्त्तुमुद्यतः॥ ७४॥

सन्नियान्तकरणोऽपि विक्रम-
स्तेन मामवति नाजिते त्वयि।

अन्यदेति। अन्यदा अन्यस्मिन् काले जगति रामः इत्ययं शब्दः उच्चरितः सन् माम् एव अगात्, सम्प्रति त्वयि उदयोन्मुखे सति व्यस्तवृत्तिः विपरीतवृत्तिः अन्यगामी इति यावत्। सः शब्दः मे व्रीड़म् आवहति लज्जां करोति॥ ७३॥

बिभ्रत इति। अचले क्रौञ्चादावपि अकुण्ठितम् अस्त्रं बिभ्रतः मम द्वौ समागसौ तुल्यापराधौ रिपू मतौ, धेनोः पितृहोमधेनोः वत्सस्य हरणात् हेतोः हैहयः कार्त्तवीर्य्यश्च, कीर्त्तिम् अपहर्त्तुम् उद्यतः उद्युक्तः त्वञ्च। वत्सहरणे भारत-श्लोकः, "प्रमत्तश्चाश्रमात् तस्य होमधेन्वास्ततो बलात्। जहार वत्सं क्रोशन्त्या बभञ्ज च महाद्रुमान्॥" इति॥ ७४॥

सन्नियेति। तेन कारणेन, क्रियते येनासौ करणः क्षत्रि-यान्तस्य करणः अपि विक्रमः त्वयि अजिते मां न अवति न प्रीणाति। तथाहि, पावकस्य अग्नेः महिमा सः गण्यते यः

पावकस्य महिमा स गण्यते
कक्षवज्ज्वलति सागरेऽपि यः ॥ ७५ ॥
विद्धि चात्तबलमोजसा हरे-
रैश्वरं धनुरभाजि यत्त्वया ।
खातमूलमनिलो नदीरयैः
पातयत्यपि मृदुस्तटद्रुमम् ॥ ७६ ॥
तन्मदीयमिदमायुधं ज्यया
सङ्गमय्य सशरं विकृष्यताम् ।
तिष्ठतु प्रधनमेवमप्यहं
तुल्यबाहुतरसा जितस्त्वया ॥ ७७ ॥

वत् कक्षे इव । "तत्र तस्येव" इति सप्तम्यर्थे वतिः ।
रे अपि ज्वलति ॥ ७५ ॥

विद्धीति । किञ्च, ऐश्वरं धनुः हरेः विष्णोः ओजसा
न आत्तबलं हृतसारञ्च विद्धि यत् धनुः त्वया अभाजि
ञ्जि । "भञ्जेश्च चिणि" इति विभाषया न लोपः । तथाहि,
रयैः खातमूलम् अवदारितपादं तटद्रुमं मृदुरपि अनिलः
तयति । ततः शिशुरपि रौद्रं धनुरभाङ्क्षमिति मा गर्वीः
त भावः ॥ ७६ ॥

तदिति । तत् तस्मात् मदीयम् इदम् आयुधं कार्मुकं
या संगमय्य संयोज्य । "ल्यपि लघुपूर्वात्" इति णेरयादेशः ।
रं यथा तथा त्वया विकृष्यतां, प्रधनं रणः तिष्ठतु प्रधनं
दास्ताम् इत्यर्थः, "प्रधनं मारणे रणे" इति विश्वः । एवमपि
नुःकर्षणेऽपि अहं तुल्यबाहुतरसा समबाहुबलेन । "तरसी
रंहसी" इत्यमरः । त्वया जितः ॥ ७७ ॥

कातरोऽसि यदि वोद्गतार्चिषा
तर्जितः परशुधारया मम ।
ज्यानिघातकठिनाङ्गुलिर्वृथा
बध्यतामभययाचनाञ्जलिः ॥ ७८ ॥

एवमुक्तवति भीमदर्शने
भार्गवे स्मितविकम्पिताधरः ।
तद्धनुर्ग्रहणमेव राघवः
प्रत्यपद्यत समर्थमुत्तरम् ॥ ७९ ॥

पूर्वजन्मधनुषा समागतः
सोऽतिमात्रलघुदर्शनोऽभवत् ।
केवलोऽपि सुभगो नवाम्बुदः
किं पुनस्त्रिदशचापलाञ्छितः ॥ ८० ॥

कातर इति । यदि वा, उद्गतार्चिषा उद्गतज्वालया मम परशुधारया तर्जितः कातरः असि भीतः असि, तथा ज्यानिघातेन कठिनाः अङ्गुलयः यस्य सः तथोक्तः अभययाचनाञ्जलिः अभयप्रार्थनाञ्जलिः बध्यताम् । "तौ युतावञ्जलिः पुमान्" इत्यमरः ॥ ७८ ॥

एवमिति । भीमदर्शने भार्गवे एवम् उक्तवति सति, राघवः स्मितेन हासेन विकम्पिताधरः सन् तद्धनुर्ग्रहणमेव समर्थम् उचितम् उत्तरं प्रत्यपद्यत अङ्गीचकार ॥ ७९ ॥

पूर्वेति । पूर्वजन्मनि नारायणावतारे यत् धनुः तेन समागतः सङ्गतः सः रामः अतिमात्रम् अत्यन्तं लघुदर्शनः प्रियदर्शनः अभवत् । तथाहि, नवाम्बुदः केवलः रिक्तोऽपि सुभगः

तेन भूमिनिहितैककोटि तत्
कार्मुकञ्च बलिनाधिरोपितम् ।
निष्प्रभश्च रिपुरास भूभृतां
धूमशेष इव धूमकेतनः ॥ ८१ ॥

तावुभावपि परस्परस्थितौ
वर्द्धमानपरिहीनतेजसौ ।
पश्यति स्म जनता दिनात्यये
पार्वणौ शशिदिवाकराविव ॥ ८२ ॥

विद्युच्चापेन इन्द्रधनुषा लाञ्छितः चिह्नितः किं पुनः, सुभग एव इति भावः ॥ ८० ॥

तेनेति। बलिना तेन रामेण, भूमिनिहिता एका कोटिः यस्य तत्। कर्मणे प्रभवतीति कार्मुकं धनुश्च। "कर्मण उकञ्" इत्युकञ्प्रत्ययः। अधिरोपितं भूभृतां रिपुः भार्गवश्च, धूमशेषः धूमकेतनः अग्निः इव, निष्प्रभः निस्तेजस्कः आस बभूव। आसेति तिङन्तप्रतिरूपकमव्ययम्, दीप्त्यर्थकस्यास्ते रूपं वा ॥ ८१ ॥

तावेिति। परस्परस्थितौ अन्योन्याभिमुखौ। वर्द्धमानञ्च परिहीनञ्च इति द्वन्द्वः, वर्द्धमानपरिहीने तेजसी ययोः तौ उभौ राघवभार्गवावपि, दिनात्यये सायंकाले पर्वणि भवौ पार्वणौ शशिदिवाकरौ इव, जनता जनसमूहः। "ग्रामजनबन्धुसहायेभ्यस्तल्" इति तल्प्रत्ययः। पश्यति स्म अपश्यत्। अत्र राघवस्य शशिना भार्गवस्य भानुना औपम्यं द्रष्टव्यम् ॥ ८२ ॥

तं कृपामृदुरवेक्ष्य भार्गवं
राघवः स्खलितवीर्य्यमात्मनि।
स्वञ्च संहितममोघमाशुगं
व्याजहार हरसूनुसन्निभः॥ ८३ ॥

न प्रहर्तुमलमस्मि निर्दयं
विप्र इत्यभिभवत्यपि त्वयि।
शंस किं गतिमनेन पत्रिणा
हन्मि लोकमुत ते मखार्जितम्॥ ८४ ॥

प्रत्युवाच तमृषिर्न तत्त्वत-
स्त्वां न वेद्मि पुरुषं पुरातनम्।
गां गतस्य तव धाम वैष्णवं
कोपितो ह्यसि मया दिदृक्षुणा॥ ८५ ॥

तमिति। हरसूनुसन्निभः स्कन्दसमः कृपामृदुः राघवः आत्मनि विषये स्खलितवीर्य्यं कुण्ठितशक्तिं तं भार्गवं स्वं स्वकीयं संहितम् अमोघम् आशुगं बाणं च अवेक्ष्य व्याजहार बभाषे॥ ८३ ॥

नेति। अभिभवति अपि त्वयि विप्र इति हेतोः निर्दयं प्रहर्तुम् अलं शक्तः न अस्मि किन्तु अनेन पत्रिणा शरेण ते गतिं गमनं हन्मि, उत मखार्जितं लोकं स्वर्गं हन्मि, शंस ब्रूहि॥ ८४ ॥

प्रतीति। ऋषिः भार्गवः तं रामं प्रत्युवाच। किमिति? तत्त्वतः स्वरूपतः त्वां पुरातनं पुरुषं न वेद्मि इति न किन्तु वेद्मि एव इत्यर्थः, किन्तु गां गतस्य भुवमवतीर्णस्य तव वैष्णवं

भस्मसात् कृतवतः पितृद्विषः
पात्रसाच्च वसुधांससागराम् ।
आहितो जयविपर्य्ययोऽपि मे
श्लाघ्य एव परमेष्ठिना त्वया ॥ ८६ ॥
तद्गतिं मतिमतां वरेप्सितां
पुण्यतीर्थगमनाय रक्ष मे ।
पीड़यिष्यति न मां खिलीकृता
स्वर्गपद्धतिरभोगलोलुपम् ॥ ८७ ॥
प्रत्यपद्यत तथेति राघवः
प्राङ्मुखश्च विससर्ज सायकम् ।

म तेजः दिदृक्षुणा द्रष्टुमिच्छता मया कोपितः इ
सि ॥ ८५ ॥

भस्मसादिति । पितृद्विषः पितृवैरिणः भस्मसात् कृतवतः
पेन भस्मीकुर्वतः । "विभाषा साति: कार्त्स्न्ये" इति
तिप्रत्ययः । ससागरां वसुधाञ्च पात्रसात् पात्राधीनं देयं
तवतः । "देये त्रा च" इति चकारात् सातिः । कृत-
त्वस्य मे परमेष्ठिना परमपुरुषेण त्वया आहितः कृतः जय-
पर्य्ययः पराजयोऽपि श्लाघ्यः आघास्य एव ॥ ८६ ॥

तद्दिति । तत् तस्मात् कारणात्, हे मतिमतां वर !
तीर्थगमनाय आप्तुमिष्टाम् ईप्सितां मे गतिं रक्ष पालय ।
न्तु खिलीकृता दुर्गमीकृतापि स्वर्गपद्धतिः अभोगलोलुपं
गनिःस्पृहं मां न पीड़यिष्यति, अतस्तामेव जहीत्यर्थः ॥८७॥

प्रत्यपद्यतेति । राघवः तथेति प्रत्यपद्यत अङ्गीकृतवान्,

भार्गवस्य सुकृतोऽपि सोऽभवत्
स्वर्गमार्गपरिघो दुरत्ययः ॥ ८८ ॥
राघवोऽपि चरणौ तपोनिधेः
क्षम्यतामिति वदन् समस्पृशत्।
निर्जितेषु तरसा तरस्विनां
शत्रुषु प्रणतिरेव कीर्तये ॥ ८९ ॥
राजसत्वमवधूय मातृकं
पित्र्यमस्मि गमितः शमं यदा।
नन्वनिन्दितफलो मम त्वया
निग्रहोऽप्ययमनुग्रहीकृतः ॥ ९० ॥

प्राङ्मुखः इन्द्रदिङ्मुखः सायकं विससर्ज च। सः सायकः सुकृतोऽपि साधुकारिणोऽपि। करोतेः क्विप्। भार्गवस्य दुरत्ययः दुरतिक्रमः स्वर्गमार्गस्य परिघः प्रतिबन्धः अभवत् ॥ ८८ ॥

राघव इति। राघवः अपि क्षम्यतामिति वदन् तपोनिधेः भार्गवस्य चरणौ समस्पृशत् प्रणनाम। तथाहि, तरस्विनां बलवतां तरसा बलेन निर्जितेषु शत्रुषु प्रणतिः एव कीर्त्तये भवति इति शेषः ॥ ८९ ॥

राजसत्वमिति। मातुरागतं मातृकं राजसत्वं रजोगुणप्रधानत्वम् अवधूय पितुरागतं पित्र्यं शमं यदा गमितः अस्मि तदा त्वया मम अपेक्षितत्वात् अनिन्दितम् अगर्हितं फलं स्वर्गहानिलक्षणं यस्य सः अयं निग्रहः अपकारः अपि अनुग्रहीकृतः ननु उपकारीकृतः खलु ॥ ९० ॥

साधयाम्यहमविघ्नमस्तु ते
देवकार्य्यमुपपादयिष्यतः ।
ऊचिवानिति वचः सलक्ष्मणं
लक्ष्मणाग्रजमृषिस्तिरोदधे ॥ ९१ ॥

तस्मिन् गते विजयिनं परिरभ्य रामं
स्नेहादमन्यत पिता पुनरेव जातम् ।
तस्याभवत् क्षणशुचः परितोषलाभः
कक्षाग्निलङ्घिततरोरिव वृष्टिपातः ॥ ९२ ॥

अथ पथि गमयित्वा क्लृप्तरम्योपकार्य्ये

साधयामीति । अहं साधयामि गच्छामि, देवकार्य्यम् उपपादयिष्यतः सम्पादयिष्यतः ते अविघ्नम् अस्तु विघ्नाभावः अस्तु । "अव्ययं विभक्ति—" इत्यादिना अर्थाभावेऽव्ययीभावः । सह लक्ष्मणेन सलक्ष्मणः तम् । "तेन सहेति तुल्ययोगे" इति बहुव्रीहिः । लक्ष्मणाग्रजं रामम् इति वचः ऊचिवान् उक्तवान् । ब्रूञः क्वसुः । ऋषिः तिरोदधे अन्तर्दधे ॥ ९१ ॥

तस्मिन्निति । तस्मिन् भार्गवे गते सति विजयिनं रामं पिता स्नेहात् परिरभ्य आलिङ्ग्य पुनर्जातमेव अमन्यत । क्षणं शुक् यस्येति विग्रहः, क्षणशुचः तस्य दशरथस्य परितोषलाभः सन्तोषप्राप्तिः, कक्षाग्निना दावानलेन । "कक्षः कक्षानवीरुधोः" इति विश्वः । लङ्घितस्य अभिहतस्य तरोः वृष्टिपातः इव, अभवत् ॥ ९२ ॥

अथेति । अथ ईषदसमाप्तः शर्वः शर्वकल्पः । "ईषदस-

कतिचिदवनिपालः शर्वरीः शर्वकल्पः।
पुरमविशदयोध्यां मैथिलीदर्शनीनां
कुवलयितगवाक्षां लोचनैरङ्गनानाम् ॥९३॥

इति श्रीरघुवंशे महाकाव्ये कालिदासकृतौ
सीताविवाहवर्णनं नाम एकादशः सर्गः।

मासौ" इति कल्पप्प्रत्ययः। अवनिपालः कृमा रम्या नव उपकार्या यस्मिन् सः तस्मिन् पथि कतिचित् शर्वरीः रात्री गमयित्वा यापयित्वा मैथिलीदर्शनीनाम् अङ्गनानां लोचनैः कुवलयानि येषां सञ्जातानि कुवलयिताः। "तदस्य सञ्जातं तारकादिभ्यः इतच्" इति इतच् प्रत्ययः। कुवलयिता गवाक्षाः यस्याः तां पुरम् अयोध्याम् अविशत् प्रविष्टवान्॥ ९३ ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां रघुवंशटीकायां सञ्जीवनीसमाख्यायाम् एकादशः सर्गः।

## द्वादशः सर्गः ।

निर्विष्टविषयस्नेहः स दशान्तमुपेयिवान् ।
आसीदासन्ननिर्वाणः प्रदीपार्चिरिवोषसि ॥१॥
कर्णमूलमागत्य रामे श्रीर्न्यस्यतामिति ।

वन्दामहे महोद्दण्डदोर्दण्डौ रघुनन्दनौ ।
तेजोनिर्जितमार्त्तण्डमण्डलौ लोकनन्दनौ ॥

निर्विष्टेति । स्नेहयन्ति प्रीणयन्ति पुरुषमिति स्नेहाः । ...याधघ् । स्निह्यन्ति पुरुषा येषु इति वा स्नेहाः । अधि...रणार्थे घञ् । विषयाः शब्दादयः ते एव स्नेहाः निर्विष्टाः ...ताः विषयस्नेहाः येन सः तथोक्तः । "निर्वेशो भृति...भोगयोः" इति विश्वः । दशा जीवनावस्था तस्याः अन्तं ...न्तिकम् उपेयिवान् सः दशरथः, उषसि प्रदीपार्चिः इव ...दीपज्वाला इव, आसन्नं निर्वाणं मोक्षः यस्य सः तथोक्तः ...आसीत् । अर्चिःपक्षे तु विषयः देशः आश्रयः भाजनम् ...इति यावत् । "विषयः स्यादिन्द्रियार्थे देशे जनपदेऽपि च" ...इति विश्वः । स्नेहस्तैलादिः । "स्नेहस्तैलादिकरसे द्रवे ...गात् सौहृदेऽपि च" इति विश्वः । दशा वर्त्तिका । "दशा ...वर्त्ताववस्थायाम्" इति विश्वः । निर्वाणं विनाशः । "निर्वाणं ...अस्तङ्गतौ मोक्षे विनाशे गजमज्जने" इति यादवः ॥ १ ॥

...तामिति । जरा कैकेयीशङ्कया इव पलितस्य केशादि...शौक्लस्य छद्मना मिषेण । "पलितं जरसा शौक्ल्यं केशादौ" ...इत्यमरः । कर्णमूलं कर्णोपकण्ठम् आगत्य रामे श्रीः

कैकेयीशङ्कयेवाह पलितच्छद्मना जरा ॥ २ ॥
सा पौरान् पौरकान्तस्य रामस्याभ्युदयश्रुतिः।
प्रत्येकं ह्लादयाञ्चक्रे कुल्येवोद्यानपादपान् ॥३॥
तस्याभिषेकसम्भारं कल्पितं क्रूरनिश्चया।
दूषयामास कैकेयी शोकोष्णैः पार्थिवाश्रुभिः॥४॥
सा किलाश्वासिता चण्डी भर्त्रा तत्संश्रुतौ वरौ।
उद्ववामेन्द्रसिक्ता भूर्विलमग्नाविवोरगौ ॥५॥
तयोश्चतुर्दशैकेन रामं प्राव्राजयत् समाः।

राजलक्ष्मीः न्यस्यतां निधीयताम् इति तम् आह। दशरथ वृद्धोऽहमिति विचार्य्य रामस्य यौवराज्याभिषेकं चकार इत्यर्थः ॥ २ ॥

सेति। सा पौरकान्तस्य रामस्य अभ्युदयश्रुतिः अभिषेकवार्त्ता, कुल्या कृत्रिमा सरित्। "कुल्याल्पा कृत्रिमा सरित्" इत्यमरः। उद्यानपादपानिव, पौरान् प्रत्येकं ह्लादयाञ्चक्रे ॥ ३ ॥

तस्येति। क्रूरनिश्चया कैकेयी तस्य रामस्य कल्पितं सम्भृतमभिषेकस्य सम्भारमुपकरणं शोकोष्णैः पार्थिवाश्रुभिः दूषयामास। स्वदुःखमूलेन राजशोकेन प्रतिबबन्धेत्यर्थः ॥ ४ ॥

सेति। चण्डी अतिकोपना। "चण्डस्त्वत्यन्तकोपनः" इत्यमरः। सा किल भर्त्रा आश्वासिता अनुनीता सती तेन भर्त्रा संश्रुतौ प्रतिज्ञातौ वरौ, इन्द्रेण सिक्ता अभिवृष्टा भूः विले वल्मीकादौ मग्नौ उरगौ इव, उद्ववाम उज्जगार ॥ ५ ॥

तयोरिति। सा तयोर्वरयोर्मध्ये एकेन वरेण रामं चतुर्दश समाः संवत्सरान्। अत्यन्तसंयोगे द्वितीया। प्राव्राजयत्

द्वितीयेन सुतस्यैच्छद्वैधव्यैकफलां श्रियम् ॥६॥
पित्रा दत्तां रुदन् रामः प्राङ्महीं प्रत्यपद्यत ।
पश्चाद्वनाय गच्छेति तदाज्ञां मुदितोऽग्रहीत् ॥७॥
दधतो मङ्गलक्षौमे वसानस्य च वल्कले ।
ददृशुर्विस्मितास्तस्य मुखरागं समं जनाः ॥८॥
स सीतालक्ष्मणसखः सत्याद् गुरुमलोपयन् ।
विवेश दण्डकारण्यं प्रत्येकञ्च सतां मनः ॥ ९ ॥
राजापि तद्वियोगार्त्तः स्मृत्वा शापं स्वकर्मजम् ।

प्रावासयत्, द्वितीयेन वरेण सुतस्य भरतस्य वैधव्यैकफलां स्ववैधव्यमात्रफलां न तूपभोगफलामिति भावः। श्रियम् ऐच्छत् इयेष ॥ ६ ॥

पित्रेति। रामः प्राक् पित्रा दत्तां महीं रुदन् प्रत्यपद्यत अङ्गीचकार। स्वत्यागदुःखात् इति भावः। पश्चात् वनाय गच्छ इति एवंरूपां तदाज्ञां पित्राज्ञां मुदितः अग्रहीत् पित्राज्ञाकरणलाभात् इति भावः ॥ ७ ॥

दधत इति। मङ्गलक्षौमे दधतः वल्कले वसानस्य आच्छादयतश्च तस्य रामस्य समम् एकविधं मुखरागं मुखवर्णं जनाः विस्मिताः ददृशुः। सुखदुःखयोरविकृत इति भावः ॥ ८ ॥

स इति। सः रामः गुरुं पितरं सत्यात् वरदानरूपात् अलोपयन् अभ्रंशयन् सीतालक्ष्मणयोः सखेति विग्रहः। ताभ्यां सहितः सन् दण्डकारण्यं विवेश सतां मनश्च प्रत्येकं विवेश। तद्भक्त्या सर्वे सन्तः सन्तुष्टा इति भावः ॥ ९ ॥

राजेति। तद्वियोगार्त्तः पुत्रवियोगदुःखितः राजापि

शरीरत्यागमात्रेण शुद्धिलाभममन्यत ॥ १० ॥
विप्रोषितकुमारं तद्राज्यमस्तमितेश्वरम्।
रन्ध्रान्वेषणदक्षाणां द्विषामामिषतां ययौ ॥११॥
अथानाथाः प्रकृतयो मातृबन्धुनिवासिनम्।
मौलैरानाययामासुर्भरतं स्तम्भिताश्रुभिः ॥१२॥
श्रुत्वा तथाविधं मृत्युं कैकेयीतनयः पितुः।
मातुर्न केवलं स्वस्याः श्रियोऽप्यासीत्पराङ्मुखः॥१३
ससैन्यश्चान्वगाद्रामं दर्शितानाश्रमालयैः।

स्वकर्मणा मुनिपुत्रवधरूपेण जातः स्वकर्मजः तं शापं पुन-शोकजं मरणात्मकं स्मृत्वा शरीरत्यागमात्रेण देहत्यागेनैव शुद्धिलाभं प्रायश्चित्तम् अमन्यत मृत इत्यर्थः ॥ १० ॥

विप्रोषितेति। विप्रोषिताः गताः कुमाराः यस्मिन् तत् तथोक्तम्। अस्तमितः मृतः ईश्वरः राजा यस्य तत् तथोक्तं तत् राज्यं रन्ध्रान्वेषणदक्षाणां द्विषाम् आमिषतां भोग्यवस्तुतां ययौ। "आमिषं भोग्यवस्तुनि" इति केशवः ॥ ११ ॥

अथेति। अथ अनाथाः प्रकृतयः अमात्याः। "प्रकृतिः सहजे योनावमात्ये परमात्मनि" इति विश्वः। मातृबन्धु-निवासिनं भरतं स्तम्भिताश्रुभिः पितृमरणागुप्त्यर्थम् इति भाव मौलैः आप्तैः सचिवैः आनाययामासुः आगमयाञ्चक्रुः ॥ १२ ॥

श्रुत्वेति। कैकेयीतनयः भरतः पितुः तथाविधं स्वमा मूलं मृत्युं मरणं श्रुत्वा स्वस्याः मातुः केवलं मातुरेव परा मुखः न किन्तु श्रियः अपि पराङ्मुखः आसीत् ॥ १३ ॥

ससैन्य इति। ससैन्यः भरतः रामम् अन्वगाच। कुर्वन्? आश्रमालयैः वनवासिभिः दर्शितान् एते रा

स पश्यन् ससौमित्रेरुदश्रुर्वसतिद्रुमान् ॥१४॥
चित्रकूटवनस्थञ्च कथितस्वर्गतिर्गुरोः ।
लक्ष्म्या निमन्त्रयाञ्चक्रे तमनुच्छिष्टसम्पदा ॥१५॥
स हि प्रथमजे तस्मिन् अकृतश्रीपरिग्रहे ।
परिवेत्तारमात्मानं मेने स्वीकरणाद्भुवः ॥ १६ ॥
तमशक्यमपाक्रष्टुं निदेशात् स्वर्गिणः पितुः ।
ययाचे पादुके पश्चात् कर्त्तुं राज्याधिदेवते ॥१७॥
स विसृष्टस्तथेत्युक्त्वा भ्रात्रा नैवाविशत् पुरीम् ।

निवासा इति कथितान्, ससौमित्रेः लक्ष्मणसहितस्य तस्य रामस्य वसतिद्रुमान् निवासवृक्षान् पश्यन् उदश्रुः रुदन् ॥१४॥

चित्रेति । चित्रकूटवनस्थं तं रामस्य गुरोः पितुः कथितस्वर्गतिः कथितपितृमरणः सन् इत्यर्थः, अनुच्छिष्टा अननुभूता उच्छिष्टा सम्पत् गुणोत्कर्षः यस्याः सा । "सम्पद्भूतौ गुणोत्कर्षे" इति केशवः । तया लक्ष्म्या कारणेन निमन्त्रयाञ्चक्रे आहूतवान् ॥ १५ ॥

स इति । सः हि भरतः प्रथमजे अग्रजे तस्मिन् रामे अकृतश्रीपरिग्रहे सति स्वयं भुवः स्वीकरणादात्मानं परिवेत्तारं मेने । "परिवेत्तानुजोऽनूढ़े ज्येष्ठे दारपरिग्रहात्" इत्यमरः । भूपरिग्रहोऽपि दारपरिग्रहसमः इति भावः ॥ १६ ॥

तमिति । स्वर्गिणः पितुः निदेशात् अपाक्रष्टुं निवर्तयितुम् अशक्यं तं रामं पश्चात् राज्याधिदेवते स्वामिन्यौ कर्त्तुं पादुके ययाचे ॥ १७ ॥

स इति । सः भरतः भ्रात्रा रामेण तथेत्युक्त्वा विसृष्टः सन् पुरीम् अयोध्यां नाविशदेव, किन्तु नन्दिग्रामगतः सन्

नन्दिग्रामगतस्तस्य राज्यं न्यासमिवाभुनक् ॥१८॥

दृढ़भक्तिरिति ज्येष्ठे राज्यतृष्णापराङ्मुखः।

मातुः पापस्य भरतः प्रायश्चित्तमिवाकरोत् ॥१९॥

रामोऽपि सह वैदेह्या वने वन्येन वर्त्तयन्।

चचार सानुजः शान्तः वृद्धेक्ष्वाकुव्रतं युवा ॥२०॥

तस्य रामस्य राज्यं न्यासम् इव निक्षेपम् इव अभुनक् अपालयत् न तूपभुक्तवान् इत्यर्थः, अन्यथा "भुजोऽनवने" इत्यात्मनेपदप्रसङ्गात्। भुजेर्लङ् ॥ १८ ॥

दृढ़ेति। ज्येष्ठे दृढ़भक्तिः राज्यतृष्णापराङ्मुखः भरतः इति पूर्वोक्तानुष्ठानेन मातुः पापस्य प्रायश्चित्तं तदपनोदकं कर्म्म अकरोत् इव, इत्युत्प्रेक्षा। दृढ़भक्तिरित्यत्र दृढ़शब्दस्य "स्त्रियाः पुंवत्—" इत्यादिना पुंवद्भावो दुर्घटः "अप्रियादिषु" इति निषेधात् भक्तिशब्दस्य प्रियादिषु पाठात्, अतो दृढ़ं भक्तिरस्येति नपुंसकपूर्वपदो बहुव्रीहिरिति गणव्याख्याने दृढ़-भक्तिरित्येवमादिषु पूर्वपदस्य नपुंसकस्य विवक्षितत्वात् सिद्धमिति समाधेयम्। वृत्तिकारस्य दीर्घनिवृत्तिमात्रपरो दृढ़भक्तिशब्दो लिङ्गविशेषस्यानुपकारत्वात् स्त्रीत्वमविवक्षित-मेव। तस्मादस्त्रीलिङ्गत्वात् दृढ़भक्तिशब्दस्यायं प्रयोग इत्यभि-प्रायः। न्यासकारोऽप्येवम्। भोजराजस्तु "कर्म्मसाधनस्यैव भक्तिशब्दस्य प्रियादिपाठात् भवानीभक्तिरित्यादौ कर्म्मसाधन-त्वात् पुंवद्भावप्रतिषेधः, दृढ़भक्तिरित्यादौ भावसाधनत्वात् पुंवद्भावसिद्धिः पूर्वपदस्य" इत्याह ॥ १९ ॥

राम इति। सानुजः शान्तः रामः अपि वैदेह्या सह वने वन्येन वनभवेन कन्दमूलादिना वर्त्तयन् वृत्तिं कुर्वन् जीवन् वृद्धेक्ष्वाकूणां व्रतं वनवासात्मकं युवा यौवनस्थ एव चचार ॥२०॥

प्रभावस्तम्भितच्छायमाश्रित: स वनस्पतिम् ।
कदाचिदङ्के सीताया: शिश्ये किञ्चिदिव श्रमात् २१
ऐन्द्रि: किल नखैस्तस्या विददार स्तनौ द्विज: ।
प्रियोपभोगचिह्नेषु पौरोभाग्यमिवाचरन् ॥२२॥
तस्मिन्नास्थदिषीकास्त्रं रामो रामावबोधित: ।
आत्मानं मुमुचे तस्मादेकनेत्रव्ययेन स: ॥२३॥
रामस्त्वासन्नदेशत्वाद्भरतागमनं पुन: ।

प्रभावेति । स: राम: कदाचित् प्रभावेण स्वमहिम्ना स्तम्भिता स्थिरीकृता छाया यस्य तं वनस्पतिमाश्रित: सन् किञ्चिदीषत् श्रमादिव सीताया: अङ्के शिश्ये सुष्वाप ॥ २१ ॥

ऐन्द्रिरिति । ऐन्द्रि: इन्द्रस्य पुत्र: द्विज: पक्षी काक: तस्या: सीताया: स्तनौ प्रियस्य रामस्य उपभोगचिह्नेषु तत्-कृतनखक्षतेषु इत्यर्थ: पुरोभागिन: दोषैकदर्शिन: कर्म पौरोभाग्यम् । "दोषैकदृक् पुरोभागी" इत्यमर: । दु:श्लिष्टदोष-ख्यातम् आचरन् कुर्वन्निव नखै: विददार विलिलेख । किलेत्यै-तिह्ये ॥ २२ ॥

तस्मिन्निति । रामया सीतया अवबोधित: राम: तस्मिन् काके इषीकास्त्रं काशास्त्रम् । "इषीका काशमुच्यते" इति हलायुध: । आस्थत् अस्यति स्म । "असु क्षेपणे" इति धातो-र्लुङ्, "अस्यतिवक्तिख्यातिभ्योऽङ्" इत्यङ्प्रत्यय:, "अस्यतेस्थुक्" इति थुगागम: । स: काक: एकनेत्रस्य व्ययेन दानेन तस्मात् अस्त्रात् आत्मानं मुमुचे मुक्तवान् । मुचे: कर्त्तरि लिट् । "धेनुं मोच" इतिवत् प्रयोग: ॥ २३ ॥

राम इति । रामस्तु आसन्नदेशत्वात् हेतो: पुन: भरता-

प्रावृड्योत्सुकसारङ्गां चित्रकूटस्थलीं जहौ ॥२४

प्रययावातिथेयेषु वसन्नृषिकुलेषु सः ।
दक्षिणां दिशमृक्षेषु वार्षिकेष्विव भास्करः ॥२५

बभौ तमनुगच्छन्ती विदेहाधिपतेः सुता ।
प्रतिषिद्धापि कैकेय्या लक्ष्मीरिव गुणोन्मुखी ॥२

अनुसूयातिसृष्टेन पुण्यगन्धेन काननम् ।
सा चकाराङ्गरागेण पुष्पोच्चलितषट्पदम् ॥२७

सन्ध्याभ्रकपिशस्तस्य विराधो नाम राक्षसः ।

गमनम् प्रावृड्य उत्सुकसारङ्गाम् उत्कण्ठितहरिणां चित्र-
कूटस्थलीं जहौ तत्याज । प्रासन्नप्रासौ देशश्चेति विग्रहः ॥२४

प्रययाविति । सः रामः अतिथिषु साधूनि आतिथेयानि
"पथ्यतिथिवसतिस्वपतेर्ढञ्" इति ढञ्प्रत्ययः । तेषु ऋषिकुलेषु
ऋष्याश्रमेषु । "कुलं कुल्ये गणे देहे गेहे जनपदेऽन्वये" इति
हैमः । वर्षासु भवानि वार्षिकाणि । "वर्षाभ्यष्ठक्" इति
ठक्प्रत्ययः । तेषु ऋक्षेषु नक्षत्रेषु राशिषु वा भास्कर इव,
वसन् दक्षिणां दिशं प्रययौ ॥ २५ ॥

बभाविति । तं रामम् अनुगच्छन्ती विदेहाधिपतेः सुता
सीता कैकेय्या प्रतिषिद्धा निवारितापि गुणोन्मुखी गुणोत्सुका
लक्ष्मीः राजलक्ष्मीः इव बभौ ॥ २६ ॥

अनुसूयेति । सा सीता अनुसूयया अत्रिभार्यया अति-
सृष्टेन दत्तेन पुण्यगन्धेन अङ्गरागेण काननं वनं पुष्पेभ्यः उच्च-
लिताः निर्गताः षट्पदाः यस्मिन् तत् तथाभूतं चकार ॥ २७ ॥

सन्ध्येति । सन्ध्याभ्रकपिशः विराधो नाम राक्षसः, सः

प्रतिष्ठन्मार्गमावव्रे रामस्येन्दोरिव ग्रहः ॥२८॥
स जहार तयोर्मध्ये मैथिलीं लोकशोषणः ।
नभोनभस्ययोर्वृष्टिमवग्रह इवान्तरे ॥ २९ ॥
तं विनिष्पिष्य काकुत्स्थौ पुरा दूषयति स्थलीम् ।
गन्धेनाशुचिना चेति वसुधायां निचख्नतुः ॥३०॥
पञ्चवट्यां ततो रामः शासनात् कुम्भजन्मनः ।
अनपोढस्थितिस्तस्थौ विन्ध्याद्रिः प्रकृताविव॥३१

ग्रहः केतुः इव तस्य रामस्य मार्गम् अध्वानम् आवव्रे अव-रुध्य प्रतिष्ठत् ॥ २८ ॥

स इति । लोकस्य शोषणः शोषकः सः राक्षसः तयोः रामलक्ष्मणयोः मध्ये मैथिलीं, नभोनभस्ययोः श्रावणभाद्र-पदयोः अन्तरे मध्ये वृष्टिम् अवग्रहः वर्षप्रतिबन्धः इव, जहार । "वृष्टिर्वर्षं तद्विघातेऽवग्राहावग्रहौ समौ" इत्यमरः ॥ २९ ॥

तमिति । ककुत्स्थस्य गोत्रापत्ये पुमांसौ काकुत्स्थौ राम-लक्ष्मणौ तं विराधं विनिष्पिष्य हत्वा, अशुचिना अपवित्रेण गन्धेन स्थलीम् आश्रमभुवं पुरा दूषयति दूषयिष्यति इति हेतोः । "यावत् पुरानिपातयोर्लट्" इति भविष्यदर्थे लट् । वसुधायां निचख्नतुः भूमौ खनित्वा निक्षिप्तवन्तौ च ॥ ३० ॥

पञ्चवट्यामिति । ततः रामः कुम्भजन्मनः अगस्त्यस्य शास-नात्, पञ्चानां वटानां समाहारः पञ्चवटी । "तद्धितार्थ—" इति तत्पुरुषः, "संख्यापूर्वो द्विगुः" इति द्विगुसंज्ञायां "द्विगोः" इति ङीप्, "द्विगुरेकवचनम्" इति एकवचनम् । तस्यां पञ्चवट्यां विन्ध्याद्रिः प्रकृतौ स्वभावे: पूर्वावस्थायाम् इव अनपोढस्थितिः अनतिक्रान्तमर्यादः तस्थौ ॥ ३१ ॥

रावणावरजा तत्र राघवं मदनातुरा ।
अभिपेदे निदाघार्त्ता व्यालीव मलयद्रुमम् ॥३२॥
सा सीतासन्निधावेव तं वव्रे कथितान्वया ।
अत्यारूढ़ो हि नारीणामकालज्ञो मनोभवः ॥३३॥
कलत्रवानहं बाले ! कनीयांसं भजस्व मे ।
इति रामो वृषस्यन्तीं वृषस्कन्धः शशास ताम् ॥३४

रावणावरजेति । तत्र पञ्चवट्यां मदनातुरा रावणावरजा शूर्पणखा । "पूर्वपदात् संज्ञायामगः" इति णत्वम् । राघवम्, निदाघार्त्ता घर्मतप्ता व्याकुला व्याली भुजङ्गी मलयद्रुमं चन्दनद्रुमम् इव, अभिपेदे प्राप ॥ ३२ ॥

सेति । सा शूर्पणखा सीतासन्निधौ एव कथितान्वया कथितवंशा सती तं रामं वव्रे वृतवती । तथाहि, अत्यारूढ़ः अतिप्रवृद्धः नारीणां मनोभवः कामः कालज्ञः अवसरज्ञः न भवतीति अकालज्ञः हि ॥ ३३ ॥

कलत्रवानिति । वृषः पुमान् । "वृषः स्याद् वासवे धर्मे सौरभेये च शुक्रले । पुंराशिभेदयोः शृङ्ग्यां मूषकश्रेष्ठयोरपि" इति विश्वः । वृषं पुरुषम् आत्मार्थम् इच्छतीति वृषस्यन्ती कामुकी । "वृषस्यन्ती च कामुकी" इत्यमरः । "सुप आत्मनः क्यच्" इति क्यच्प्रत्ययः, "अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि" इति असुगागमः, ततः लटः शत्रादेशः, "उगितश्च" इति ङीप् । श्लोकार्थस्तु, वृषस्कन्धो रामः वृषस्यन्तीं तां राक्षसीं 'हे बाले ! अहं कलत्रवान्, मे कनीयांसं कनिष्ठं भजस्व' इति शशास आज्ञापितवान् ॥ ३४ ॥

ज्येष्ठाभिगमनात् पूर्वं तेनाप्यनभिनन्दिता ।
साभूद्रामाश्रया भूयः नदीवोभयकूलभाक् ॥३५॥
संरम्भं मैथिलीहासः क्षणसौम्यां निनाय ताम् ।
निवातस्तिमितां वेलां चन्द्रोदय इवोदधेः ॥३६॥
फलमस्योपहासस्य सद्यः प्राप्स्यसि पश्य माम् ।
मृग्याः परिभवो व्याघ्र्यामित्यवेहि त्वया कृतम् ३७
इत्युक्त्वा मैथिलीं भर्तुरङ्के निविशतीं भयात् ।
रूपं शूर्पणखा नाम्नः सदृशं प्रत्यपद्यत ॥ ३८ ॥

ज्येष्ठाभिगमनादिति । पूर्वं ज्येष्ठाभिगमनात् तेन लक्ष्मणेन अपि अनभिनन्दिता नाङ्गीकृता भूयः रामाश्रया सा राक्षसी उभे कूले भजतीति उभयकूलभाक् नदी इव अभूत् । सा हि यातायाताभ्यां पर्यायेण कूलद्वयगामिनी नदीसदृशी अभूत् इत्यर्थः ॥ ३५ ॥

संरम्भमिति । मैथिलीहासः क्षणं सौम्यां सौम्याकारां तां राक्षसीं, निवातेन स्तिमितां निश्चलाम् उदधेः वेलाम् अम्बुविकृतिम् अम्बुपूरम् इत्यर्थः । "अब्ध्यम्बुविकृती वेला", इत्यमरः । चन्द्रोदयः इव, संरम्भं संक्षोभं निनाय ॥ ३६ ॥

फलमिति । श्लोकद्वयेनान्वयः, अस्य उपहासस्य फलं सद्यः सम्प्रत्येव प्राप्स्यसि, मां पश्य, त्वया कर्त्र्या कृतम् उपहासरूपं कर्म व्याघ्र्यां विषये मृग्याः कर्त्र्याः परिभवः इति अवेहि ॥ ३७ ॥

इतीति । भयात् भर्तुः अङ्के निविशतीम् आलिङ्गन्तीं मैथिलीम् इत्युक्त्वा शूर्पणखा नाम्नः सदृशं शूर्पाकारनखयुक्त-

लक्ष्मणः प्रथमं श्रुत्वा कोकिलामञ्जुवादिनीम्।
शिवाघोरस्वनां पश्चात् बुबुधे विकृतेति ताम्॥३९॥
पर्णशालामथ क्षिप्रं विकृष्टासिः प्रविश्य सः।
वैरूप्यपौनरुक्त्येन भीषणां तामयोजयत् ॥४०॥
सा वक्रनखधारिण्या वेणुकर्कशपर्वया।
अङ्कुशाकारयाङ्गुल्या तावतर्जयदम्बरे॥ ४१॥

मित्यर्थः। रूपम् आकारं प्रत्यपद्यत लेभिरे पश्यन्ति इत्यर्थः॥ ३८॥

लक्ष्मण इति। लक्ष्मणः प्रथमं कोकिलावत् मञ्जुवादिनीं पश्चात् शिवावत् घोरस्वनां तां शूर्पणखां श्रुत्वा तस्याः स्वनं श्रुत्वा इत्यर्थः, सुस्वनः शङ्खः श्रूयत इति वत्प्रयोगः। विकृता मायाविनी इति बुबुधे बुद्धवान्। कर्त्तरि लिट्॥ ३९॥

पर्णशालामिति। अथ सः लक्ष्मणः विकृष्टासिः कोषोद्धृतखड्गः सन् क्षिप्रं पर्णशालां प्रविश्य भीषयतीति इति भीषणाम्। नन्द्यादित्वात् ल्युट् कर्त्तरि। तां राक्षसीं वैरूप्यस्य पौनरुक्त्यं द्विगुणत्वं लक्षणया, तेन अयोजयत् योजितवान्। स्वभावत एव विकृतां तां कर्णादिच्छेदेन पुनरतिविकृतामकरोदित्यर्थः॥४०॥

सेति। सा वक्रनखं धारयतीति वक्रनखधारिणी तया वेणुवत् कर्कशपर्वया। अतएव अङ्कुशस्य आकार इव आकारः यस्याः सा तया अङ्गुल्या तौ राघवौ अम्बरे व्योम्नि स्थिता। "अम्बरं व्योम्नि वाससि" इत्यमरः। अतर्जयत् अभर्त्सयत्। "तर्जभर्त्सने" इति धातोश्चौरादिकादनुदात्तेत्त्वादात्मनेपदेन भाव्यं तथापि चक्षिङो ङित्करणात् ज्ञापकादनुदात्तेत्त्वनिमित्तस्यानित्यत्वात् परस्मैपदमूह्यमित्युक्तम्

प्राप्य चाशु जनस्थानं खरादिभ्यस्तथाविधम् ।
रामोपक्रममाचख्यौ रक्षःपरिभवं नवम् ॥४२॥
मुखावयवलूनां तां नैर्ऋता यत् पुरो दधुः ।
रामाभियायिनां तेषां तदेवाभूदमङ्गलम् ॥४३॥
उदायुधानापतत स्तान् दृप्तान् प्रेक्ष्य राघवः ।
निदधे विजयाशंसां चापे सीताञ्च लक्ष्मणे ॥४४॥
एको दाशरथिः कामं यातुधानाः सहस्रशः ।

ख्यातचन्द्रिकायां तर्जयते भर्त्सयते। तर्जयतीत्यपि दृश्यते
विष्विति ॥ ४१ ॥

प्राप्येति। सा आशु जनस्थानं प्राप्य खरादिभ्यः राक्षसेभ्यः
तथाविधं स्वाङ्गच्छेदात्मकम् उपक्रम्यते इति उपक्रमः।
कर्मणि घञ्प्रत्ययः। रामस्य कर्त्तुः उपक्रमः रामोपक्रमं
रामेणादावुपक्रान्तम् इत्यर्थः, "उपज्ञोपक्रमं तदाद्याचिख्या-
सायाम्" इति क्लीवत्वम्। तत् नवं रक्षसां कर्मभूतानां परि-
भवम् आचख्यौ च ॥ ४२ ॥

मुखेति। नैर्ऋताः राक्षसाः। "नैर्ऋतो यातुरक्षसी"
इत्यमरः। मुखावयवेषु कर्णादिषु लूनां छिन्नां तां पुरः दधुः
अग्रे चक्रुः इति यत् तत् एव रामाभियायिनां रामम् अभि-
यतां तेषाम् अमङ्गलम् अभूत् ॥ ४३ ॥

उदिति। उदायुधान् उद्यतायुधान् आपततः आगच्छतः
दृप्तान् तान् खरादीन् प्रेक्ष्य राघवः चापे विजयस्य आशंसाम्
आशां लक्ष्मणे सीतां च निदधे। सीतारक्षणे लक्ष्मणं नियुज्य
स्वयं युद्धाय सन्नद्धः इति भावः ॥ ४४ ॥

एक इति। दाशरथिः रामः एकः अद्वितीयः यातुधानाः

ते तु यावन्त एवाजौ तावांश्च ददृशे स तैः॥४५

असज्जनेन काकुत्स्थः प्रयुक्तमथ दूषणम्।
न चक्षमे शुभाचारः स दूषणमिवात्मनः॥४६॥

तं शरैः प्रतिजग्राह खरत्रिशिरसौ च सः।
क्रमशस्ते पुनस्तस्य चापात् सममिवोद्ययुः॥४७

तैस्त्रयाणां शितैर्बाणैः यथापूर्वविशुद्धिभिः।
आयुर्देहातिगैः पीतं रुधिरन्तु पतत्त्रिभिः॥४८॥

तस्मिन् रामशरोत्कृत्ते बले महति रक्षसाम्।

कामं सहस्रशः सन्ति इति शेषः, तैः यातुधानैस्तु सः राम आजौ ते यातुधानाः यावन्तः यावत्संख्यकाः एव तावान् तावत्संख्यकश्च ददृशे॥४५॥

असदिति। अथ शुभाचारः रणे साधुचारी सदृत्तश्च स काकुत्स्थः असज्जनेन दुर्जनेन रक्षोजनेन च प्रयुक्तं प्रेषितम् उद्धारितं च दूषणं दूषणाख्यं राक्षसम् आत्मनः दूषणं दोषमिव न चक्षमे न सेहे प्रतिकर्त्तुं प्रवृत्त इत्यर्थः॥४६॥

तमिति। सः रामः तं दूषणं खरत्रिशिरसौ च शरैः प्रतिजग्राह प्रतिजहार इत्यर्थः। क्रमशः यथाक्रमं प्रयुक्ताः अपि इति शेषः। तस्य ते शराः पुनः चापात् समं युगपदिव उद्ययुः अतिलघुहस्त इति भावः॥४७॥

तैरिति। देहमतीत्य भित्त्वा गच्छन्तीति देहातिगाः तैः यथास्थिता पूर्वविशुद्धिः येषां तैः अतिवेगत्वेन देहभेदात् प्रागिव रुधिरलेपरहितैरित्यर्थः शितैस्तीक्ष्णैः बाणैः त्रयाणां खरादीनामायुः पीतं रुधिरं तु पतत्त्रिभिः पीतम्॥४८॥

तस्मिन्निति। तस्मिन् रामशरैः उत्कृत्ते छिन्ने महति

उत्थितं ददृशेऽन्यच्च कबन्धेभ्यो न किञ्चन ॥४९॥
सा बाणवर्षिणं रामं योधयित्वा सुरद्विषाम् ।
अप्रबोधाय सुष्वाप गृध्रच्छाये वरूथिनी ॥५०॥
राघवास्त्रविदीर्णानां रावणं प्रति रक्षसाम् ।
तेषां शूर्पणखैवैका दुष्प्रवृत्तिहराभवत् ॥५१॥
निग्रहात् स्वसुराप्तानां बधाच्च धनदानुजः ।
रामेण निहितं मेने पदं दशसु मूर्द्धसु ॥ ५२ ॥

रक्षसां बले उत्थितमुत्थानक्रियाविशिष्टं प्राणिनां कबन्धेभ्यः शिरोहीनशरीरेभ्यः। "कबन्धोऽस्त्री क्रियायुक्तमपमूर्द्धकलेवरम्" इत्यमरः। अन्यच्च अन्यत् किञ्चन न ददृशे। कबन्धेभ्यः इत्यत्र "अन्यारात्" इति पञ्चमी। निःशेषं हतमित्यर्थः ॥४९॥

सेति। सा सुरद्विषां वरूथिनी सेना बाणवर्षिणं रामं योधयित्वा युद्धं कारयित्वा गृध्राणां छाया गृध्रच्छायम्। "छायाबाहुल्ये" इति क्लीवत्वम्। तस्मिन् अप्रबोधाय अपुनर्बोधाय सुष्वाप ममार इत्यर्थः। अत्र सुरतश्रान्तकान्तासमाधिर्ध्वन्यते ॥ ५० ॥

राघवेति। एका शूर्पवत् नखानि यस्याः सा शूर्पणखा। "पूर्वपदात् संज्ञायाम्" इति णत्वम्, "नखमुखात् संज्ञायाम्" इति ङीप्प्रतिषेधः। सा एव रावणं प्रति राघवास्त्रैः विदीर्णानां हतानां तेषां रक्षसां खरादीनां दुष्प्रवृत्तिः वार्त्ता तां हरति प्रापयति इति दुष्प्रवृत्तिहरा अभवत्। "हरतेरनुद्यमनेऽच्" इत्यच्प्रत्ययः ॥ ५१ ॥

निग्रहादिति। स्वसुः शूर्पणखायाः निग्रहात् अङ्गच्छेदात्

रक्षसा मृगरूपेण वञ्चयित्वा स राघवौ।
जहार सीतां पक्षीन्द्रप्रयासक्षणविघ्नितः ॥५३॥
तौ सीतान्वेषिणौ गृध्रं लूनपक्षमपश्यताम्।
प्राणैर्दशरथप्रीतेरनृणं कण्ठवर्त्तिभिः ॥ ५४ ॥
स रावणहृतां ताभ्यां वचसाचष्ट मैथिलीम्।
आत्मनः सुमहत् कर्म व्रणैरावेद्य संस्थितः ॥५५॥
तयोस्तस्मिन् नवीभूत-पितृव्यापत्तिशोकयोः।
पितरीवाग्निसंस्कारात् परा ववृतिरे क्रियाः ॥५

आप्तानां बन्धूनां खरादीनां बधाच्च कारणात् धनदानुज
रावणः रामेण दशस्य मूर्द्धसु पदं पादं निहितं मेने ॥ ५२ ॥

रक्षसेति। स रावणः मृगरूपेण रक्षसा मारीचेन राघवौ
वञ्चयित्वा प्रतार्य्य पक्षीन्द्रस्य जटायुषः प्रयासेन युद्धरूपेण
क्षणं विघ्नितः सञ्जातविघ्नः सन् सीतां जहार ॥ ५३ ॥

ताविति। सीतान्वेषिणौ तौ राघवौ लूनपक्षं रावणेन
छिन्नपक्षं कण्ठवर्त्तिभिः प्राणैः दशरथप्रीतेः दशरथसख्यस्य
अनृणम् ऋणैः विमुक्तं गृध्रं जटायुषम् अपश्यतां दृष्टवन्तौ
दृशेर्लङि रूपम् ॥ ५४ ॥

स इति। सः जटायुः रावणहृतां मैथिलीं ताभ्यां राम-
लक्ष्मणाभ्याम्। "क्रियाग्रहणमपि कर्त्तव्यम्" इति सम्प्रदान-
त्वाच्चतुर्थी। वचसा वाग्वृत्त्या आचष्ट, आत्मनः सुमहत् कर्म
युद्धरूपं व्रणैः आवेद्य संस्थितः मृतः ॥ ५५ ॥

तयोरिति। व्यापत्तिः मरणं नवीभूतः पितृव्यापत्तिशोकः
ययोः तौ तयोः राघवयोः तस्मिन् गृध्रे पितरीव अग्नि-

वधनिर्धूतशापस्य कबन्धस्योपदेशतः ।
मुमूर्च्छ सख्यं रामस्य समानव्यसने हरौ ॥५७॥
स हत्वा बालिनं वीरः तत्पदे चिरकाङ्क्षिते ।
धातोः स्थान इवादेशं सुग्रीवं संन्यवेशयत् ॥५८॥
इतस्ततश्च वैदेहीमन्वेष्टुं भर्तृचोदिताः ।
कपयश्चेरुरार्त्तस्य रामस्येव मनोरथाः ॥ ५९ ॥

संस्कारात् अग्निसंस्कारम् आरभ्य पराः उत्तराः क्रियाः
अतिरे अवर्त्तन्त तस्य पितृवदौर्ध्वदेहिकं चक्रतुरित्यर्थः ॥५६॥

वधेति। वधेन रामकृतेन निर्धूतशापस्य देवभुवं गतस्य
कबन्धस्य रक्षोविशेषस्य उपदेशतः रामस्य समानव्यसने
समानापदि सख्यार्थिनि इत्यर्थः हरौ कपौ सुग्रीवे।
"यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु। शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु" इत्यमरः। सख्यं
मूर्च्छ ववृधे ॥ ५७ ॥

स इति। वीरः सः रामः बालिनं सुग्रीवाग्रजं हत्वा चिर-
काङ्क्षिते तत्पदे बालिस्थाने, धातोः स्थाने आदेशम् इव
आदेशभूतं धात्वन्तरमिव इत्यर्थः सुग्रीवं संन्यवेशयत्
स्थापितवान्। यथा "अस्तेर्भूः" इति अस्तिधातोः स्थाने
आदेशो भूधातुरस्तिकार्य्यमशेषं समभिधत्ते तद्वत् इति
भावः। आदेशो नाम शब्दान्तरस्य स्थाने विधीयमानं
शब्दान्तरमभिधीयते ॥ ५८ ॥

इतस्ततश्चेति। वैदेहीम् अन्वेष्टुं मार्गितुं भर्त्रा सुग्रीवेण
चोदिताः प्रयुक्ताः कपयः हनुमत्प्रमुखाः आर्त्तस्य विरहातुरस्य
रामस्य मनोरथाः कामा इव, इतस्ततः चेरुः नानादेशेषु
भ्रेमुश्च ॥ ५९ ॥

प्रवृत्तावुपलब्धायां तस्याः सम्पातिदर्शनात्।
मारुतिः सागरं तीर्णः संसारमिव निर्ममः ॥६०॥
दृष्टा विचिन्वता तेन लङ्कायां राक्षसीवृता।
जानकी विषवल्लीभिः परीतेव महौषधिः ॥६१॥
तस्यै भर्त्तुरभिज्ञानमङ्गुलीयं ददौ कपिः।
प्रत्युद्गतमिवानुष्णैस्तदानन्दाश्रुबिन्दुभिः ॥ ६२॥
निर्वाप्य प्रियसन्देशैः सीतामक्षवधोद्धतः।

प्रवृत्ताविति। सम्पातिर्नाम जटायुषः ज्यायान् भ्रा
तस्य दर्शनात् तन्मुखात् इति भावः, तस्याः सीतायाः प्रवृ
वार्त्तायाम्। "वार्त्ता प्रवृत्तिर्वृत्तान्तः" इत्यमरः। उप
लब्धायां ज्ञातायां सत्यां मारुतस्यापत्यं पुमान् मारुतिः ह
मान् सागरम्, ममेत्येतदव्ययम्, ममतावाचि तद्रहितः निर्म
निःस्पृहः संसारम् अविद्याबन्धनमिव, तीर्णः ततार। तर
कर्त्तरि क्तः ॥ ६० ॥

दृष्टेति। लङ्कायां रावणराजधान्यां विचिन्वता म
माणेन तेन मारुतिना राक्षसीभिः वृता जानकी, विषवल्ली
परीता परिवृता महौषधिः सञ्जीवनी लतेव, दृष्टा ॥ ६१ ॥

तस्या इति। कपिः हनुमान् भर्त्तुः रामस्य सम
अभिज्ञानं प्रत्यभिज्ञानसाधकम् अङ्गुलीयम् ऊर्मिका
"अङ्गुलीयकमूर्मिका" इत्यमरः। "जिह्वामूलाङ्गुले
इति छप्रत्ययः। तस्यै जानक्यै ददौ। किंविधमङ्गुलीय
अनुष्णैः शीतलैः तस्याः आनन्दाश्रुबिन्दुभिः प्रत्युद्गत
स्थितम्। भर्त्रभिज्ञानदर्शनादानन्दबाष्पो जातः इत्यर्थः ॥
निर्वाप्येति। सः कपिः प्रियस्य रामस्य सन्देशैः वाचि

ददाह पुरीं लङ्कां चणसोढ़ारिनिग्रहः ॥६३॥
ाभिज्ञानरत्नञ्च रामायादर्शयत् कृती ।
ःयं स्वयमायातं वैदेह्या इव मूर्त्तिमत् ॥६४॥
प्राप हृदयन्यस्तमणिस्पर्शनिमीलितः ।
ायोधरसंसर्गां प्रियालिङ्गननिर्वृतिम् ॥६५॥
त्वा रामः प्रियोदन्तं मेने तत्सङ्गमोत्सुकः ।
ार्णवपरिक्षेपं लङ्कायाः परिखालघुम् ॥६६॥
प्रतस्थेऽरिनाशाय हरिसैन्यैरनुद्रुतः ।

ां निर्वाप्य सुखयित्वा अचस्य रावणकुमारस्य वधेन उद्धतः
सन् । चणं सोढः अरेः इन्द्रजितः कर्त्तुः निग्रहः बाधो
ास्त्रबन्धनरूपो येन सः तथोक्तः सन् लङ्कां पुरीं ददाह
ोचकार ॥ ६३ ॥

प्रत्यभीति । कृती कृतकृत्यः कपिः स्वयमायातं मूर्त्ति-
वैदेह्याः हृदयमिव स्थितं तस्याः एव प्रत्यभिज्ञानरत्नञ्च
ाय अदर्शयत् ॥ ६४ ॥

स इति । हृदये वक्षसि न्यस्तस्य धृतस्य मणेः अभिज्ञान-
व स्पर्शेन निमीलितः मोहितः सः रामः अविद्यमानः
धरसंसर्गः स्तनस्पर्शः यस्याः तां तथाभूतां प्रियायाः
ालिङ्गनेन या निर्वृतिः आनन्दः तां प्राप ॥ ६५ ॥

श्रुत्वेति । प्रियायाः उदन्तं वार्त्ताम् । "उदन्तः साधु-
योः" इति विश्वः । श्रुत्वा तस्याः सीतायाः सङ्गमे उत्-
रामः लङ्कायाः सम्बन्धी यः महार्णवः एव परिक्षेपः परि-
तं परिखालघुं दुर्गवेष्टनवत् सुतरं मेने ॥ ६६ ॥

स इति । केवलम् एकं भुवः पृष्ठे भूतले न किन्तु व्योम्नि च

न केवलं भुवःपृष्ठे व्योम्नि सम्बाधवर्त्तिभिः ॥६

निविष्टमुदधेः कूले तं प्रपेदे विभीषणः।

स्नेहाद्राक्षसलक्ष्मीव बुद्धिमाविश्य चोदिता॥६

तस्मै निशाचरैश्वर्य्यं प्रतिशुश्राव राघवः।

काले खलु समारब्धाः फलं बध्नन्ति नीतयः॥६

स सेतुं बन्धयामास प्लवगैर्लवणाम्भसि।

रसातलादिवोन्मग्नं शेषं स्वप्नाय शार्ङ्गिणः॥७०

तेनोत्तीर्य्य पथा लङ्कां रोधयामास पिङ्गलैः।

सम्बाधवर्त्तिभिः सङ्कटगामिभिः हरिसैन्यैः कपिबलैः अनुग-
अन्वितः सन् सः रामः अरिनाशाय प्रतस्थे चचाल॥ ६७॥

निविष्टमिति। उदधेः कूले निविष्टं तं रामं विभी-
भीषयते शत्रून् इति विभीषणः रावणानुजः राक्षसलक्ष्मी-
स्नेहात् बुद्धिं कर्त्तव्यताज्ञानम् आविश्य चोदितः प्रचोदि-
इव प्रपेदे प्राप्तः॥ ६८॥

तस्मा इति। राघवः तस्मै विभीषणाय। "प्रत्याङ्भ्यां
श्रुवः पूर्वस्य कर्त्ता" इति सम्प्रदानत्वाच्चतुर्थी। निशाचरैश्वर्य-
राक्षसाधिपत्यं प्रतिशुश्राव प्रतिज्ञातवान्। तथाहि काले
अवसरे समारब्धाः प्रक्रान्ताः नीतयः फलं बध्नन्ति ग्रथ्नन्ति
जनयन्तीत्यर्थः खलु॥ ६९॥

स इति। सः रामः लवणं क्षारम् अम्भः यस्य असौ लव-
णाम्भाः तस्मिन् लवणाम्भौ प्लवगैः प्रयोज्यैः शार्ङ्गिणः विष्णोः
स्वप्नाय शयनाय रसातलात् पातालात् उन्मग्नम् उत्थितं
शेषमिव स्थितं सेतुं बन्धयामास॥ ७०॥

तेनेति। रामः तेन पथा सेतुमार्गेण उत्तीर्य्य वानरैः

तीयं हेमप्राकारं कुर्वद्भिरिव वानरैः ॥७१॥

णः प्रववृते तत्र भीमः प्लवगरक्षसाम् ।
दिग्विजृम्भितकाकुत्स्थपौलस्त्यजयघोषणः ॥७२॥

पादपाविद्धपरिघः शिलानिष्पिष्टमुद्गरः ।
अतिशस्त्रनखन्यासः शैलरुग्णमतङ्गजः ॥ ७३ ॥

थ रामशिरश्छेददर्शनोद्भ्रान्तचेतनाम् ।
सीतां मायेति शंसन्ती त्रिजटा समजीवयत् ॥७४

ते शेषः, पिङ्गलैः सुवर्णवर्णैः अतएव द्वितीयं हेमप्राकारं द्भिरिव स्थितैः वानरैः लङ्कां रोधयामास ॥ ७१ ॥

रण इति। तत्र लङ्कायां प्लवगानां रक्षसाञ्च भीमः भय- दिग्विजृम्भितं काकुत्स्थपौलस्त्ययोः रामरावणयोः जय- णं जयशब्दः यस्मिन् सः तथोक्तः रणः प्रववृते प्रवृत्तः स्त्रियां समरानीकरणाः कलहविग्रहौ” इत्यमरः ॥ ७२ ॥

पादपेति। किंविधो रणः। पादपैः वृक्षैः आविद्धाः ताः परिघाः लोहबद्धकाष्ठानि यस्मिन् सः तथोक्तः। रिघः परिघातनः” इत्यमरः। शिलाभिः निष्पिष्टाः र्णिताः मुद्गराः अयोघनाः यस्मिन् सः तथोक्तः। “द्रुघणो रघनौ” इत्यमरः। अतिशस्त्राः शस्त्राण्यतिक्रान्ताः नख- साः यस्मिन् सः तथोक्तः। शैलैः रुग्णाः भग्नाः मतङ्गजाः न् सः तथोक्तः ॥ ७३ ॥

अथेति। अथ अनन्तरं छिद्यते इति छेदः खण्डः शिरः छेदः इति विग्रहः। रामशिरश्छेदस्य विद्युज्जिह्वाख्य- समायानिर्मितस्य दर्शनेन उद्भ्रान्तचेतनां गतसंज्ञां सीतां टा नाम काचित् सीतापक्षपातिनी राक्षसी मायाकल्पितं

कामं जीवति मे नाथः इति सा विजहौ शुचम्
प्राग्मत्वा सत्यमस्यान्तं जीवितास्मीति लज्जिता
गरुडापातविश्लिष्टमेघनादास्त्रबन्धनः।
दाशरथ्योः क्षणक्लेशः स्वप्नवृत्त इवाभवत् ॥७६॥
ततो बिभेद पौलस्त्यः शक्त्या वक्षसि लक्ष्मणम्
रामस्त्वनाहतोऽप्यासीत् विदीर्णहृदयः शुचा ॥
स मारुतिसमानीतमहौषधिहृतव्यथः।

न त्वेतत् सत्यमिति शंसन्ती ब्रुवाणा। "शप्श्यनोर्नित्यम्" इति नित्यं नुमागमः। समजीवयत् ॥ ७४ ॥

काममिति। सा सीता मे नाथः जीवतीति हेतोः शु शोकं कामं विजहौ। किन्तु प्राक्पूर्वम् अस्य नाथस्य अन् नाशं सत्यं यथार्थं मत्वा जीविता जीवितवत्यस्मीति हेतो लज्जिता लज्जावती। कर्त्तरि क्तः। दुःखादपि दुःसह लज्जाभरः इति भावः ॥ ७५ ॥

गरुडेति। गरुडः तार्क्ष्यः तस्य आपातेन आगमने विश्लिष्टं मेघनादस्य इन्द्रजितः अस्त्रेण नागपाशेन बन्ध यस्मिन् सः तथोक्तः क्षणक्लेशः दाशरथ्योः रामलक्ष्मणयोः स्व वृत्तः स्वप्नावस्थायां भूतः इव अभवत् ॥ ७६ ॥

तत इति। ततः पौलस्त्यः रावणः शक्त्या कासूनाम केनायुधेन। "कासूसामर्थ्ययोः शक्तिः" इत्यमरः। लक्ष्म वक्षसि बिभेद विदारयामास। रामस्तु अनाहतोऽपि तोऽपि शुचा शोकेन विदीर्णहृदयः आसीत् ॥ ७७ ॥

स इति। सः लक्ष्मणः मारुतिना मरुत्सुतेन हनु समानीतया महौषध्या सञ्जीविन्या हृतव्यथः सन् पुनः

...हास्त्रीणां पुनश्चक्रे विलापाचार्य्यकं शरैः ॥७८॥
...नादं मेघनादस्य धनुश्चेन्द्रायुधप्रभम् ।
...घस्येव शरत्कालो न किञ्चित् पर्य्यशेषयत् ॥७९॥
...म्भकर्णः कपीन्द्रेण तुल्यावस्थः स्वसुः कृतः ।
...रोध रामं शृङ्गीव टङ्कच्छिन्नमनःशिलः ॥८०॥
...काले बोधितो भ्रात्रा प्रियस्वप्नो वृथा भवान् ।
...मेषुभिरितीवासौ दीर्घनिद्रां प्रवेशितः ॥८१॥

...हास्त्रीणां विलापे परिदेवने । "विलापः परिदेवनम्" इत्य-
...ः । आचार्य्यकम् आचार्य्यकर्म्म । "योपधाद्गुरूपोत्तमाद्वुञ्"
...इति वुञ् । चक्रे पुनरपि राक्षसान् अघानीति व्यज्यते ॥७८॥
स नादमिति । स लक्ष्मणः, शरत्कालः मेघस्य इव, मेघ-
...दस्य इन्द्रजितः नादं सिंहनादम् अन्यत्र गर्जितं च इन्द्रायुध-
...ं शक्रधनुःप्रभं धनुश्च किञ्चित् अल्पमपि न पर्य्यशेषयत्
...वशेषितवान् तमवधीत् इत्यर्थः ॥ ७९ ॥
कुम्भकर्ण इति । कपीन्द्रेण सुग्रीवेण स्वसुः शूर्पणखायाः
...ल्यावस्थः नासाकर्णच्छेदेन सदृशः कृतः कुम्भकर्णः टङ्केन
...लाभेदकशस्त्रेण छिन्ना मनःशिला रक्तवर्णधातुविशेषः यस्य
... तथोक्तः "टङ्कः पाषाणभेदनः" इति । "धातुर्मनःशिला-
...दिः" इति च अमरः । शृङ्गी शिखरी इव, रामं रुरोध ॥८०॥
अकाल इति । प्रियस्वप्नः इष्टनिद्रः अनुजः भवान् वृथा
...ता रावणेन अकाले बोधितः इतीव असौ कुम्भकर्णः रामे-
...भिः रामबाणैः दीर्घनिद्रां मरणं प्रवेशितः गमितः । यथा
...केषु इष्टवस्तुविनाशदुःखितस्य ततोऽपि भूयिष्ठमुपपाद्यते
...त् इति भावः ॥ ८१ ॥

इतराण्यपि रक्षांसि पेतुर्वानरकोटिषु ।
रजांसि समरोत्थानि तच्छोणितनदीष्विव ॥८२
निर्ययावथ पौलस्त्यः पुनर्युद्धाय मन्दिरात् ।
अरावणमरामं वा जगदद्येति निश्चितः ॥ ८३ ॥
रामं पदातिमालोक्य लङ्केशञ्च वरूथिनम् ।
हरियुग्यं रथं तस्मै प्रजिघाय पुरन्दरः ॥ ८४ ॥
तमाधूतध्वजपटं व्योमगङ्गोर्मिवायुभिः ।
देवसूतभुजालम्बी जैत्रमध्यास्त राघवः ॥ ८५ ॥

इतराणीति । इतराणि रक्षांसि अपि वानरकोटिषु समरोत्थानि रजांसि तेषां रक्षसां शोणितनदीषु रक्तप्रवाहे इव, पेतुः निपत्य मृतानि इत्यर्थः ॥ ८२ ॥

निर्ययाविति । अथ पौलस्त्यः रावणः अद्य जगत् अरावणं रावणशून्यमरामं रामशून्यं वा भवेदिति निश्चित निश्चितवान् । कर्त्तरि क्तः । विजयमरणयोरन्यतरनिश्चयवा पुनर्युद्धाय मन्दिरात् निर्ययौ निर्जगाम ॥ ८३ ॥

राममिति । पादाभ्यामततीति पदातिः तं पादचारि रामम्, वरूथः रथगुप्तिः । "रथगुप्तिर्वरूथो ना" इत्यमर अत्र वरूथेन रथो लक्ष्यते । वरूथिनं रथिनं लङ्केशं आलोक्य पुरन्दरः इन्द्रः युगं वहन्तीति युग्याः रथाश्वा "तद्वहति रथयुगप्रासङ्गम्" इति यत्प्रत्ययः । हरियुग कपिलवर्णाश्वम् । "शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु इत्यमरः । रथं तस्मै रामाय प्रजिघाय प्रहितवान् ॥ ८४ ॥

तमिति । राघवः व्योमगङ्गोर्मिवायुभिः आधूतध्वजप मार्गवशात् इति भावः । जैतैव जैत्रः जयनशीलः तं जैत्रम्

[मा]तलिस्तस्य माहेन्द्रमामुमोच तनुच्छदम् ।
[य]त्रोत्पलदलक्लैव्यमस्त्राण्यापुः सुरद्विषाम् ॥८६॥
[अ]न्योन्यदर्शनप्राप्तविक्रमावसरं चिरात् ।
[रा]मरावणयोर्युद्धं चरितार्थमिवाभवत् ॥ ८७ ॥
[भु]जमूर्द्धोरुबाहुल्यात् एकोऽपि धनदानुजः ।
[द]दृशे ह्ययथापूर्वो मातृवंश इव स्थितः ॥ ८८ ॥

[ए]कशब्दात् क्वन्तात् "प्रज्ञादिभ्यश्च" इति स्वार्थेऽण्प्रत्ययः । [र]थं देवप्लुतभुजालम्बी मातलिहस्तावलम्बः सन् अध्यास्त [अ]धिष्ठितवान् । आसेर्लङ् ॥ ८५ ॥

मातलिरिति । मातलिः इन्द्रसारथिः माहेन्द्रं तनुः [छाद्य]ते अनेनेति तनुच्छदः वर्म्म । "पुंसि संज्ञायां घः प्रायेण" [इ]ति घः । तं तस्य रामस्य आमुमोच आसञ्जयामास यत्र [तन]ुच्छदे सुरद्विषाम् अस्त्राणि उत्पलदलानां यत् क्लैव्यं नपुं[स]कत्वं निरर्थकत्वं तत् आपुः ॥ ८६ ॥

अन्योन्येति । चिरात् अन्योन्यदर्शनेन प्राप्तविक्रमावसरं [राम]रावणयोः युद्धं योधनं चरितार्थं सफलम् अभवत् इव । [एतेन] कपराक्रमावसरदौर्लभ्याद् विफलस्य अद्य तल्लाभात् [सा]फल्यमुत्प्रेक्ष्यते ॥ ८७ ॥

भुजेति । यथाभूतः पूर्वं यथापूर्वः । सुप्सुपेति समासः । [यथ]ापूर्वो न भवतीति अयथापूर्वः । निहतबन्धुत्वाद्बन्धुःपरि[वा]रशून्यः इत्यर्थः । अतएव एकोऽपि सन् धनदानुजः रावणः [भुज]ाश्च मूर्द्धानश्च उरवः पादाश्च भुजमूर्द्धोरु । प्राण्यङ्गत्वात् [द्व]न्द्वैकवद्भावः । तस्य बाहुल्यात् बहुलत्वात् हेतोः । तद्बहुत्वे [गौ]रवः, "दशास्यो विंशतिभुजः चतुष्पात् मातृमन्दिरे"

जेतारं लोकपालानां स्वमुखैरर्चितेश्वरम्।
रामस्तुलितकैलासम् अरातिं बह्वमन्यत॥ ८९॥
तस्य स्फुरति पौलस्त्यः सीतासङ्गमशंसिनि।
निचखानाधिकक्रोधः शरं सव्येतरे भुजे॥ ९०॥
रावणस्यापि रामास्तः भित्त्वा हृदयमाशुगः।
विवेश भुवमाख्यातुम् उरगेभ्य इव प्रियम्॥ ९१॥

इति। मातृवंशे मातृसम्बन्धिनि वर्गे स्थित इव ददृशे दृष्ट- हि। "वंशो वेणौ कुले वर्गे" इति विश्वः। अत्र रावणमातृ- रक्षोजातित्वात् तद्वर्गो रक्षोवर्ग इति लभ्यते, अतएकोऽपि अनेकरक्षःपरिवृत इव लक्ष्यते इत्यर्थः॥ ८८॥

जेतारमिति। लोकपालानाम् इन्द्रादीनां जेतारम्। "कर्तृकर्मणोः कृति" इति कर्मणि षष्ठी। स्वमुखैः स्वशिरोभिः अर्चितेश्वरं तुलितकैलासम् उत्क्षिप्तरुद्राद्रिम् तम् एवं शौर्य-वीर्यसत्त्वसम्पन्नं महावीर्य्यम् अरातिं शत्रुं, रामः गुणग्राहित्वात् जेतव्योत्कर्षस्य जेतुः उत्कर्षहेतुत्वाच्च बहु अमन्यत साधुः मद्विक्रमस्यायं पर्य्याप्तो विषय इति बहुमानमकरोत् इत्यर्थः। बह्विति क्रियाविशेषणम्॥ ८९॥

तस्येति। अधिकक्रोधः पौलस्त्यः स्फुरति स्पन्दमाने अतएव सीतासङ्गमशंसिनि तस्य रामस्य सव्यः इतरः यस्मात् सव्येतरे दक्षिणे। "न बहुव्रीहौ" इति इतरशब्दस्य सर्व-नामसंज्ञाप्रतिषेधः। भुजे शरं निचखान निखातवान्॥ ९०॥

रावणस्येति। रामेण अस्तः क्षिप्तः आशुगः बाणः, विश्रवसोऽपत्यं पुमान् रावणः। विश्रवः शब्दादपत्येऽर्थेऽण् प्रत्यये सति, "विश्रवसो विश्रवणरवणौ" इति रवणादेशः।

वचसैव तयोर्वाक्यम् अस्त्रमस्त्रेण निघ्नतोः ।
अन्योऽन्यजयसंरम्भः ववृधे वादिनोरिव ॥ ९२ ॥
विक्रमव्यतिहारेण सामान्याभूद् द्वयोरपि ।
जयश्रीरन्तरा वेदिर्मत्तवारणयोरिव ॥ ९३ ॥
कृतप्रतिकृतप्रीतैस्तयोर्मुक्तां सुरासुरैः ।
परस्परशरव्राताः पुष्पवृष्टिं न सेहिरे ॥ ९४ ॥

तस्य रावणस्य अपि हृदयं वक्षः भित्त्वा विदार्य्य उरगेभ्यः पातालवासिभ्यः प्रियम् आख्यातुमिव भुवं विवेश ॥ ९१ ॥

वचसेति । वाक्यं वचसैव अस्त्रम् अस्त्रेण निघ्नतोः प्रतिकुर्वतोः तयोः रामरावणयोः, वादिनोः कथकयोः इव, अन्योन्यविषये जयसंरम्भः ववृधे ॥ ९२ ॥

विक्रमेति । जयश्रीः विक्रमस्य व्यतिहारेण पर्य्याय-क्रमेण तयोः द्वयोः अपि अन्तरा मध्ये । अव्ययमेतत् । वेदिः वेद्याकारा भित्तिः मत्तवारणयोः इव, सामान्या साधारणा अभूत् नत्वन्यतरनियता इत्यर्थः । अत्र मत्तवारणयोरित्यत्र द्वयोरित्यत्र च "अन्तरान्तरेण युक्ते" इति द्वितीया न भवति । अन्तराशब्दस्योक्तरीत्या अन्यत्रान्वयात् । मध्ये कामपि भित्तिं कृत्वा गजौ योधयन्तीति प्रसिद्धिः ॥ ९३ ॥

कृतेति । स्वयमस्त्रप्रयोगः कृतं प्रतिकृतं परकृतप्रतीकारः ताभ्यां प्रीतैः सुरासुरैः यथासंख्यं तयोः रामरावणयोः मुक्तां पुष्पवृष्टिं द्वयीम् इति शेषः । परस्परं शरव्राताः न सेहिरे । अहमेवालं किं त्वयेति चान्तराल एव इतरेतरबाणवृष्टिरितरेतरपुष्पवृष्टिमवारयत् इत्यर्थः ॥ ९४ ॥

अयःशङ्कुचितां रक्षः शतघ्नीमथ शत्रवे ।
हृतां वैवस्वतस्येव कूटशाल्मलिमक्षिपत् ॥ ९५ ॥
राघवो रथमप्राप्तां तामाशाञ्च सुरद्विषाम् ।
अर्द्धचन्द्रमुखैर्बाणैः चिच्छेद कदलीसुखम् ॥ ९६ ॥
अमोघं सन्दधे चास्मै धनुष्येकधनुर्धरः ।
ब्राह्ममस्त्रं प्रियाशोकशल्यनिष्कर्षणौषधम् ॥ ९७ ॥

अय इति । अथ रक्षः रावणः अयसः शङ्कुभिः कीलैः चितां कीर्णां शतघ्नीं लौहकण्टककीलितयष्टिविशेषम्, "शतघ्नी तु चतुस्ताला लौहकण्टकसञ्चिता यष्टिः" इति केशवः । हृतां विजयलब्धां, वैवस्वतस्य अन्तकस्य कूटशाल्मलिमिव, शत्रवे राघवाय अक्षिपत् क्षिप्तवान् । कूटशाल्मलिः रिव कूटशाल्मलिरिति व्युत्पत्त्या वैवस्वतगदायाः गौणीसंज्ञा । कूटशाल्मलिर्नाम एकमूलप्रकृतिः कण्टकीवृक्षविशेषः । "रोचनः कूटशाल्मलिः" इत्यमरः । तस्मादस्यास्तु भेदः अयःशङ्कुचितत्वात् अनुसन्धेयम् ॥ ९५ ॥

राघव इति । राघवः रथम् अप्राप्तां तां शतघ्नीं सुरद्विषां रक्षसाम् आशां विजयतृष्णाञ्च । "आशा तृष्णा दिशः प्रोक्ता" इति विश्वः । अर्द्धचन्द्रः इव मुखं येषां तैः बाणैः कदलीव सुखं यथा तथा चिच्छेद । अथवा कदल्यामिव सुखम् अक्लेशः यस्मिन् कर्मणि तदिति विग्रहः ॥ ९६ ॥

अमोघमिति । एकः अद्वितीयः धनुर्धरः रामः प्रियायाः शोकः एव शल्यं तस्य निष्कर्षणम् उद्धारकं यत् औषधं तत् अमोघं ब्राह्मं ब्रह्मदेवताकम् अस्त्रम् अभिमन्त्रितं बाणम् अस्मै रावणाय च, तद्वधार्थमित्यर्थः, धनुषि सन्दधे ॥ ९७ ॥

तद् व्योम्नि शतधा भिन्नं ददृशे दीप्तिमन्मुखम् ।
वपुर्महोरगस्येव करालफणमण्डलम् ॥ ९८ ॥
तेन मन्त्रप्रयुक्तेन निमेषार्द्धादपातयत् ।
स रावणशिरःपङ्क्तिमज्ञातव्रणवेदनाम् ॥ ९९ ॥
बालार्कप्रतिमेवाप्सु वीचिभिन्ना पतिष्यतः ।
रराज रक्षःकायस्य कण्ठच्छेदपरम्परा ॥ १०० ॥
मरुतां पश्यतां तस्य शिरांसि पतितान्यपि ।
मनो नातिविशश्वास पुनःसन्धानशङ्किनाम् ॥१०१

तदिति । व्योम्नि शतधा भिन्नं प्रसृतं दीप्तिमन्ति मुखानि यस्य तत् शस्त्रास्त्रम्, करालं भीषणं तुङ्गं वा फणमण्डलं यस्य तत् तथोक्तम् । "करालो दन्तुरे तुङ्गे करालो भीषणेऽपि च" इति विश्वः । महोरगस्य शेषस्य वपुः इव, ददृशे दृष्टम् ॥ ९८ ॥

तेनेति । सः रामः मन्त्रप्रयुक्तेन तेन अस्त्रेण अज्ञातव्रणवेदनाम् अतिशैघ्र्यात् अननुभूतव्रणदुःखां रावणशिरःपङ्क्तिं निमेषार्द्धात् अपातयत् पातयामास ॥ ९९ ॥

बालेति । पतिष्यत आसन्नपातस्य रक्षःकायस्य रावणकलेवरस्य छिद्यन्ते इति छेदाः खण्डाः कण्ठानां ये छेदाः तेषां परम्परा पङ्क्तिः, वीचिभिः भिन्ना नाना कृता अप्सु बालार्कस्य प्रतिमा प्रतिबिम्बमिव, रराज । अर्कस्य बालविशेषणमारुण्यार्थम् इति भावः ॥ १०० ॥

मरुतामिति । पतितानि तस्य रावणस्य शिरांसि पश्यतामपि पुनःसन्धानशङ्किनाम्, पूर्वं तथादर्शनात् इति भावः ।

अथ मदगुरुपक्षैर्लोकपालद्विपाना-
मनुगतमलिवृन्दैर्गण्डभित्तीर्विहाय ।
उपनतमणिबन्धे मूर्ध्नि पौलस्त्यशत्रोः
सुरभि सुरविमुक्तं पुष्पवर्षं पपात ॥ १०२॥

यन्ता हरेः सपदि संहृतकार्मुकज्य-
मापृच्छ्य राघवमनुष्ठितदेवकार्य्यम् ।
नामाङ्करावणशराङ्कितकेतुयष्टि-
मूर्ध्वं रथं हरिसहस्रयुजं निनाय ॥ १०३ ॥

मरुताम् अमराणाम् । "मरुतौ पवनामरौ" इत्यमरः । मनः न अतिविश्रम्भास अतिविश्वासं न प्राप ॥ १०१ ॥

अथेति । अथ मदेन गजगण्डसञ्चारसंक्रान्तेन गुरुपक्षैः भारायमाणपक्षैः अलिवृन्दैः लोकपालद्विपानामैरावतादीनां गगनवर्त्तिनां गण्डभित्तीः विहाय अनुगतं अनुद्रुतं सुरभि सुगन्धि "सुरभिस्सम्पके स्वर्णे जातीफलवसन्तयोः । गन्धोपले सौरभेय्यां सल्लकीमातृभेदयोः । सुगन्धौ च मनोज्ञे च वाच्यवत् सुरभि स्मृतम्" इति विश्वः । सुरविमुक्तं पुष्पवर्षम् उपनतः आसन्नः मणिबन्धः राज्याभिषेकसमये भावी यस्य तस्मिन् पौलस्त्यशत्रोः रामस्य मूर्ध्नि पपात । इदमेव राज्याभिषेकसूचकमिति भावः ॥ १०२ ॥

यन्तेति । हरेः इन्द्रस्य यन्ता मातलिः सपदि संहृतकार्मुकज्यम् अनुष्ठितं देवकार्य्यं रावणवधरूपं येन तं राघवम् आपृच्छ्य साधु यामीत्यामन्त्र्य, नामाङ्कैः नामाक्षरचिह्नैः रावणशरैः अङ्किता चिह्निता केतुयष्टिः ध्वजदण्डः यस्य तं हरीणां वाजिनां सहस्रेण युज्यते इति हरिसहस्रयुक् तम् ।

रघुपतिरपि जातवेदोविशुद्धां प्रगृह्य प्रियां
प्रियसुहृदि विभीषणे संगमय्य श्रियं वैरिणः।
रविसुतसहितेन तेनानुयातः ससौमित्रिणा
भुजविजितविमानरत्नाधिरूढः प्रतस्थे पुरीम्॥१०४

इति श्रीरघुवंशे महाकाव्ये कालिदासकृतौ
रावणवधो नाम द्वादशः सर्गः।

"यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु। हरिः" इत्युभयत्राप्यमरः। रथम् ऊर्ध्वं निनाय नीतवान्॥ १०३॥

रघुपतिरिति। रघुपतिः अपि जातवेदसि अग्नौ विशुद्धां जातशुद्धिं प्रियां सीतां प्रगृह्य स्वीकृत्य प्रियसुहृदि विभीषणे वैरिणः रावणस्य श्रियं राज्यलक्ष्मीं संगमय्य सङ्गतां कृत्वा। गमेर्ण्यन्तात् ल्यप्प्रत्ययः, "मितां ह्रस्वः" इति ह्रस्वः, "ल्यपि लघुपूर्वात्" इति णेरयादेशः। रविसुतसहितेन सुग्रीवयुक्तेन ससौमित्रिणा सलक्ष्मणेन तेन विभीषणेन अनुयातः अनुगतः सन्। विमानं रत्नमिव विमानरत्नमित्युपमितसमासः। भुजविजितं यद्विमानरत्नं पुष्पकं तत् आरूढः सन् पुरीम् अयोध्यां प्रतस्थे। "समवप्रविभ्यः स्थः" इत्यात्मनेपदम्। अत्र प्रस्थानक्रियाया अकर्मकत्वेऽपि तदङ्गभूतोद्दगक्रियापेक्षया सकर्मकत्वम्। अस्ति च धातूनां क्रियान्तरोपसर्जनकस्वार्थाभिधायकत्वम्, यथा "कुसूलान् पचति" इत्यादावादानक्रियागर्भः पाको विधीयत इति॥ १०४॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां रघुवंशटीकायां सञ्जीवनीसमाख्यायाम् द्वादशः सर्गः।

---

## त्रयोदशः सर्गः ।

अथात्मनः शब्दगुणं गुणज्ञः
पदं विमानेन विगाहमानः ।
रत्नाकरं वीक्ष्य मिथः स जायां
रामाभिधानो हरिरित्युवाच ॥ १ ॥
वैदेहि ! पश्या मलयात् विभक्तं
मत्सेतुना फेनिलमम्बुराशिम् ।

त्रैलोक्यशल्योद्धरणाय सिन्धोः चकार बन्धं मरणं रिपूणाम् ।
पुण्यं प्रणामं भुवनाभिरामं रामं विरामं विपदामुपासे ॥

अथेति । अथ प्रस्थानानन्तरम्, जानातीति ज्ञः । "इगुपध—" इत्यादिना कप्रत्ययः । गुणानां ज्ञः गुणज्ञः रत्नाकरादिवर्ण्यवर्ण्यगुणाभिज्ञः इत्यर्थः सः रामाभिधानः हरिः विष्णुः शब्दः गुणः यस्य तत् शब्दगुणम् आत्मनः स्वस्य पदं विष्णुपदम् आकाशम् इत्यर्थः । "वियद् विष्णुपदम्" इत्यमरः । "शब्दगुणमाकाशम्" इति तार्किकाः । विमानेन पुष्पकेण विगाहमानः सन् रत्नाकरं वीक्ष्य मिथः रहसि । "मिथोऽन्योन्यं रहस्यपि" इत्यमरः । जायां पत्नीं सीताम् इति वक्ष्यमाणप्रकारेण उवाच । रामस्य हरिरित्यभिधानं निरङ्कुशमहिमद्योतनार्थम् । मिथोग्रहणं गोष्ठीविस्रम्भसूचनार्थम् ॥ १ ॥

वैदेहीति । हे वैदेहि ! सीते ! आ मलयात् मलयपर्य्यन्तम् ! "पञ्चम्यपाङ्परिभिः" इति पञ्चमी । पदद्वयं चैतत् । मत्सेतुना विभक्तं द्विधाकृतम् । अत्यायतसेतुना

छायापथेनेव शरत्प्रसन्नम्
आकाशमाविष्कृतचारुतारम् ॥ २ ॥
गुरोर्यियक्षोः कपिलेन मेध्ये
रसातलं संक्रमिते तुरङ्गे ।
तदर्थमुर्वीमवदारयद्भिः
पूर्वैः किलायं परिवर्द्धितो नः ॥ ३ ॥
गर्भं दधत्यर्कमरीचयोऽस्मात्
विवृद्धिमत्राश्नुवते वसूनि ।

त्यर्थः। हर्षाधिक्याच्च मदग्रहणम्। फेनिलं फेनवन्तम्। "फेनादिलच्च" इतीलच्प्रत्ययः। चित्रकारी चायम् इति भावः। अम्बुराशिम्, छायापथेन विभक्तं शरत्प्रसन्नम् आविष्कृतचारुतारम् आकाशम् इव, पश्य। मम महानयं प्रयासस्त्वदर्थ इति हृदयम्। छायापथो नाम ज्योतिश्चक्रमध्य-वर्त्ती कश्चित् तिरश्चीनोऽवकाशः ॥ २ ॥

गुरोरिति। यियक्षोः यष्टुमिच्छोः। यजेः सन्नन्तादु-प्रत्ययः। गुरोः सगरस्य मेध्ये अश्वमेधार्हे तुरङ्गे हये कपिलेन मुनिना रसातलं पातालं संक्रमिते सति, तदर्थम् उर्वीम् अवदारयद्भिः खनद्भिः नः अस्माकं पूर्वैः वृद्धैः सगरसुतैः अयं समुद्रः परिवर्द्धितः किल। किलेत्यैतिह्ये। अतो नः पूज्यः इति भावः। यद्यपि तुरङ्गहारी शतक्रतुः तथापि तस्य कपिलसमीपे दर्शनात् स एवेति तेषां भ्रान्तिः, तस्मात्तथैव कविना कपिलेनेति निर्दिष्टम् ॥ ३ ॥

गर्भमिति। अर्कमरीचयः अस्मात् अब्धेः अपादानात् गर्भमम्मयं दधति, वृष्ट्यर्थम् इत्यर्थः। अयमर्थो दशमसर्गे

अबिन्धनं वह्निमसौ बिभर्त्ति
प्रह्लादनं ज्योतिरजन्यनेन ॥ ४ ॥

तां तामवस्थां प्रतिपद्यमानं
स्थितं दश व्याप्य दिशो महिम्ना।
विष्णोरिवास्यानवधारणीयम्
ईदृक्तया रूपमियत्तया वा ॥ ५ ॥

नाभिप्ररूढाम्बुरुहासनेन
संस्तूयमानः प्रथमेन धात्रा।

"ताभिर्गर्भः—" इत्यत्र स्पष्टीकृतः। अयं लोकोपकारी इति भावः। अप अब्धौ वसूनि धनानि। "धने रत्ने वसु स्मृतम्" इति विश्वः। विन्दन्तिम् अश्नुवते प्राप्नुवन्ति, सम्पद्यान् इत्यर्थः। असौ आपः इन्धनं दाह्यं यस्य तद्दाहकं वह्निं बिभर्त्ति। अपकारिण्यप्याश्रितं न त्यजतीति भावः। अनेन प्रह्लादनम् आह्लादकं ज्योतिः चन्द्रः अजनि जनितम्। जनेर्ण्यन्तात् कर्मणि लुङ्। सौम्य इति भावः ॥ ४ ॥

तां तामिति। तां ताम् अनेकाम्। "नित्यवीप्सयोः" इति वीप्सायां द्विरुक्तिः अवस्थाम् अक्षोभाद्यवस्थाम्, विष्णुपक्षे सत्त्वाद्यवस्थाम्, प्रतिपद्यमानं भजमानं महिम्ना दश दिशः व्याप्य स्थितं विष्णोरिव अस्य रत्नाकरस्य रूपं स्वरूपम् ईदृक्तया इत्थं वहुप्रकारत्वात् व्यापकत्वाच्च ईदृक्तया इयत्तया वा प्रकारतः परिमाणतश्च अनवधारणीयं दुर्निरूपम् ॥ ५ ॥

नाभीति। युगान्ते कल्पान्ते उचिता परिचिता योगः स्वात्मनिष्ठैव निद्रेव निद्रा यस्य स पुरुषः विष्णुः लोकान् संहृत्य, नाभ्यां प्ररूढं यत् अम्बुरुहं पद्मं तदासनेन तदाभि-

अमुं युगान्तोचितयोगनिद्रः
संहृत्य लोकान् पुरुषोऽधिशेते ॥ ६ ॥
पक्षच्छिदा गोत्रभिदात्तगन्धाः
शरण्यमेनं शतशो महीध्राः ।
नृपा इवोपप्लविनः परेभ्यो-
धर्मोत्तरं मध्यममाश्रयन्ते ॥ ७ ॥
रसातलादादिभवेन पुंसा
भुवः प्रयुक्तोद्वहनक्रियायाः ।

मलाश्रयेण प्रथमेन धात्रा दक्षादीनामपि स्रष्ट्रा पिता-
हेन संस्तूयमानः सन्, अमुम् अधिशेते अमुस्मिन् शेते
त्यर्थः । कल्पान्तेऽप्यस्ति इति भावः ॥ ६ ॥

पक्षेति । पक्षच्छिदा गोत्रभिदा इन्द्रेण उभयत्र "सत्-
द्विष" इत्यादिना क्विप् । आत्तगन्धाः हृतगर्वाः अभिभूताः
अर्थः । "गन्धो गन्धक आमोदे लेशे सम्बन्धगर्वयोः" इति
श्वः । "आत्तगर्वोऽभिभूतः स्यात्" इत्यमरः । महीं
रयन्तीति महीध्राः पर्वताः । मूलविभुजादित्वात् कप्र-
यः । शतं शतं शतशः शरण्यं रक्षणसमर्थम् एनं समुद्रम्,
भ्यः शत्रुभ्यः उपप्लविनः भयवन्तः नृपाः धर्मोत्तरं धर्मप्रधानं
श्रमं मध्यमभूपालम् इव, आश्रयन्ते । "अरेश्च विजिगीषोश्च
श्रमो भूम्यनन्तरः" इति कामन्दकः । आत्तबन्धुः इति
व: ॥ ७ ॥

रसातलादिति । आदिभवेन पुंसा आदिवराहेण रसा-
लात् प्रयुक्तोद्वहनक्रियायाः कृतोद्धरणक्रियायाः, विवाह-
ाया च व्यज्यते, भुवो भूदेवतायाः प्रलये प्रहृत्वम् अस्य

मस्याच्छमम्भः प्रलयप्रवृद्धं
मुहूर्त्तवक्त्राभरणं बभूव ॥ ८ ॥
मुखार्पणेषु प्रकृतिप्रगल्भाः
स्वयं तरङ्गाधरदानदक्षः ।
अनन्यसामान्यकलत्रवृत्तिः
पिबत्यसौ पाययते च सिन्धूः ॥ ९ ॥
ससत्वमादाय नदीमुखाम्भः
संमीलयन्तो विवृताननत्वात् ।

अस्याः अच्छम् अम्भः मुहूर्त्तं वक्त्राभरणं लज्जावशात् मुखावगुण्ठनं बभूव । तदुक्तम्, "उद्धृतासि वराहेण कृष्णेन शतबाहुना" इति ॥ ८ ॥

मुखेति । अन्येषां पुंसां सामान्या साधारणा न भवतीति अनन्यसामान्या कलत्रेषु वृत्तिः भोगरूपा यस्य सः तथोक्तः । इममेवार्थं प्रतिपादयति, तरङ्गः एव अधरः तस्य दाने समर्पणे दक्षः चतुरः असौ समुद्रः मुखार्पणेषु प्रकृत्या सख्यादिप्रेषणं विना प्रगल्भाः धृष्टाः सिन्धूः नदीः । "सिन्धुः समुद्रे नद्यां च" इति विश्वः । स्वयं पिबति पाययते च तरङ्गाधरम् इति शेषः । "न पादम्याङ्यम्" इत्यादिना पिबतेर्ण्यन्तान्नित्यं परस्मैपदनिषेधः "गतिबुद्धिप्रत्यवसानार्थ" इत्यादिना सिन्धूनां कर्मत्वम् । दम्पत्योर्युगपत् परस्पराधरपानमनन्यसाधारणम् इति भावः ॥ ९ ॥

ससत्वमिति । अमी तिमयः मत्स्यविशेषाः । तदुक्तम्, "अस्ति मत्स्यस्तिमिर्नाम शतयोजनमायतः" इति । विवृताननत्वात् व्यात्तमुखत्वात् हेतोः आननविवृत्या इत्यर्थः

धमो शिरोभिस्तिमयः सरन्ध्रै-
रूर्ध्वं वितन्वन्ति जलप्रवाहान् ॥ १० ॥
मातङ्गनक्रैः सहसोत्पतद्भि-
र्भिन्नान् द्विधा पश्य समुद्रफेनान् ।
कपोलसंसर्पितया य एषां
व्रजन्ति कर्णक्षणचामरत्वम् ॥ ११ ॥
वेलानिलाय प्रसृता भुजङ्गाः
महोर्मिविस्फूर्जथुनिर्विशेषाः ।
सूर्य्यांशुसम्पर्कसमृद्धरागै-
र्व्यज्यन्त एते मणिभिः फणस्थैः ॥ १२ ॥

...सत्वं मत्स्यादिप्राणिसहितं नदीमुखाम्भः आदाय संमीलयन्तः चक्षुपुटानि सङ्कटयन्तः सन्तः सरन्ध्रैः शिरोभिः जलप्रवाहान् ऊर्ध्वं वितन्वन्ति। जलयन्त्रक्रीडासमाधिर्व्यज्यते ॥ १० ॥

मातङ्गेति। सहसा उत्पतद्भिः मातङ्गनक्रैः मातङ्गाकारैः ग्राहैः द्विधा भिन्नान् समुद्रफेनान् पश्य, ये फेनाः एषां जलमातङ्गनक्राणां कपोलेषु संसर्पितया संसर्पणेन हेतुना कर्णेषु क्षणं चामरत्वं व्रजन्ति ॥ ११ ॥

वेलेति। वेलानिलाय वेलानिलं पातुम् इत्यर्थः "क्रियार्थोपपद" इत्यादिना चतुर्थी। प्रसृताः निर्गताः महोर्मीणां विस्फूर्जथुः उद्रेकः। "ट्वितोऽथुच्" इत्यथुच्प्रत्ययः। तस्मात् निर्विशेषाः दुर्ग्रहभेदाः एते भुजङ्गाः सूर्य्यांशुसम्पर्केण समृद्धरागैः प्रवृद्धकान्तिभिः फणस्थैर्मणिभिः व्यज्यन्ते उन्नीयन्ते ॥१२॥

तवाधरस्पर्द्धिषु विद्रुमेषु
पर्य्यस्तमेतत् सहसोर्मिवेगात् ।
ऊर्ध्वाङ्कुरप्रोतमुखं कथञ्चित्
क्लेशादपक्रामति शङ्खयूथम् ॥ १३ ॥

प्रवृत्तमात्रेण पयांसि पातुम्
आवर्त्तवेगाद् भ्रमता घनेन ।
आभाति भूयिष्ठमयं समुद्रः
प्रमथ्यमानो गिरिणेव भूयः ॥ १४ ॥

दूरादयश्चक्रनिभस्य तन्वी
तमालतालीवनराजिनीला ।
आभाति वेला लवणाम्बुराशेः
धारानिबद्धेव कलङ्करेखा ॥ १५ ॥

तवेति । तव अधरस्पर्द्धिषु अधरसदृशेषु इत्यर्थः विद्रुमेषु प्रवालेषु सहसा ऊर्मिवेगात् पर्य्यस्तं प्रोत्क्षिप्तम् ऊर्ध्वाङ्कुरैः विद्रुमप्ररोहैः प्रोतमुखं स्यूतवदनम् एतत् शङ्खानां यूथं इदं कथञ्चित् क्लेशात् अपक्रामति विलम्बनापसरति इत्यर्थः ॥१३॥

प्रवृत्तेति । पयांसि पातुं प्रवृत्तः एव प्रवृत्तमात्रः न तु पीतवान् तेन आवर्त्तवेगात्, "स्यादावर्त्तोऽम्भसां भ्रमः" इत्यमरः । भ्रमता घनेन अयं समुद्रः भूयः पुनरपि गिरिणा मन्दरेण प्रमथ्यमानः इव भूयिष्ठम् अत्यन्तम् आभाति ॥ १४ ॥

दूरादिति । अयश्चक्रनिभस्य लवणाम्बुराशेः दूरात् तन्वी अणुत्वेन अवभासमाना तमालतालीवनराजिभिः नीला वेला तीरभूमिः धारानिबद्धा चक्राश्रिता कलङ्करेखा

वेलानिलः केतकरेणुभिस्ते
सम्भावयत्याननमायताक्षि ! ।
मामक्षमं मण्डनकालहाने-
र्वेत्तीव बिम्बाधरबद्धतृष्णम् ॥ १६ ॥
एते वयं सैकतभिन्नशुक्ति-
पर्य्यस्तमुक्तापटलं पयोधेः ।
प्राप्ता मुहूर्त्तेन विमानवेगात्
कूलं फलावर्जितपूगमालम् ॥ १७ ॥
कुरुष्व तावत् करभोरु ! पश्चात्
मार्गे मृगप्रेक्षिणि ! दृष्टिपातम् ।

लिन्यरेखा इव आभाति। "मालिन्यरेखान्तु कलङ्क-
ङ्कः" इति दण्डी ॥ १५ ॥

वेलानिल इति। हे आयताक्षि ! "वेला स्यात् तीर-
रयोः" इति विश्वः। वेलानिलः केतकरेणुभिः ते आननं
भावयति। किमर्थमित्यपेक्षायामुत्प्रेक्ष्यते, बिम्बाधरे
तृष्णं मां मण्डनेन आभरणक्रियया कालहानिः विलम्बः
या अक्षमम् असहमानम्। कर्मणि षष्ठी। कालहानिम-
मानं वेत्तीव वेत्ति किम्, नो चेत् कथं सम्भावये-
त्यर्थः ॥ २६ ॥

एत इति। एते वयं सैकतेषु भिन्नाभिः स्फुटिताभिः
क्तिभिः पर्य्यस्तानि परितः क्षिप्तानि मुक्तानां पटलानि
स्मिन् तत् तथोक्तं फलैः आवर्जिता आनमिताः पूगमालाः
स्मिन् तत् पयोधेः कूलं विमानवेगात् मुहूर्त्तेन प्राप्ताः ॥१७॥

एषा विदूरीभवतः समुद्रात्
सकानना निष्पततीव भूमिः ॥ १८ ॥

क्वचित् पथा सञ्चरते सुराणां
क्वचिद् घनानां पततां क्वचिच्च ।
यथाविधो मे मनसोऽभिलाषः
प्रवर्त्तते पश्य तथा विमानम् ॥ १९ ॥

असौ महेन्द्रद्विपदानगन्धि-
स्त्रिमार्गगावीचिविमर्दशीतः ।
आकाशवायुर्दिनयौवनोत्थान्
आचामति स्वेदलवान् मुखे ते ॥ २० ॥

कुरुष्वेति । "मणिबन्धादाकनिष्ठं करस्य करभो बहिः" इत्यमरः । करभः इव ऊरू यस्याः सा करभोरूः । "ऊरूत्तर-पदादौपम्ये" इत्यूङ् । तस्याः सम्बुद्धिः हे करभोरु ! मृगवत् प्रेक्षते इति विग्रहः, हे मृगप्रेक्षिणि ! तावत् पश्चात् मार्गे लङ्घिताध्वनि दृष्टिपातं कुरुष्व । एषा सकानना भूमिः विदूरीभवतः समुद्रात् निष्पतति निष्क्रामति इव । विदूर-शब्दाद् विशेष्यनिघ्नात् च्विः ॥ १८ ॥

क्वचिदिति । हे देवि ! विमानं पुष्पकं मे मनसः अभि-लाषः यथाविधः तथा प्रवर्त्तते, पश्य । क्वचित् सुराणां पथा सञ्चरते, क्वचित् घनानां क्वचित् पततां पक्षिणां च पथा सञ्चरते "समस्तृतीयायुक्तात्" इति संपूर्वाच्चरतेरात्मने-पदम् ॥ १९ ॥

असाविति । महेन्द्रद्विपदानगन्धिः ऐरावतमदगन्धिः

करेण वातायनलम्बितेन
स्पृष्टस्त्वया चण्डि! कुतूहलिन्या।
आमुञ्चतीवाभरणं द्वितीयम्
उद्भिन्नविद्युद्वलयो घनस्ते ॥ २१ ॥
अमी जनस्थानमपोढविघ्नं
मत्वा समारब्धनवोटजानि।
अध्यासते चीरभृतो यथास्वं
चिरोज्झितान्याश्रममण्डलानि ॥ २२ ॥

त्रिभिः मार्गैः गच्छतीति त्रिमार्गगा गङ्गा। "तद्धितार्थ" इत्यादिना उत्तरपदसमासः। तस्याः वीचीनां विमर्दन सम्पर्केण शीतः असौ आकाशवायुः दिनयौवनोत्थान् मध्याह्नसम्भवान् ते मुखे स्वेदलवान् आचामति हरति। अनेन सुरपथसञ्चारो दर्शितः ॥ २० ॥

करेणेति। हे चण्डि! कोपने! "चण्डस्त्वत्यन्तकोपनः" इत्यमरः। कुतूहलिन्या विनोदार्थिन्या त्वया कर्त्र्या वातायने गवाक्षे लम्बितेन प्रवसंसितेन करेण स्पृष्टः उद्भिन्नविद्युद्वलयः घनः ते द्वितीयम् आभरणं वलयम् आमुञ्चति इव अर्पयति इव। चण्डीत्यनेन कोपनशीलत्वाद् भीतः क्षिप्रं त्वां मुञ्चति मेघ इति व्यज्यते ॥ २१ ॥

अमी इति। अमी चीरभृतः तापसाः जनस्थानम् अपोढविघ्नम् अपास्तविघ्नं मत्वा ज्ञात्वा समारब्धाः नवाः उटजाः पर्णशालाः येषु तानि। "पर्णशालोटजोऽस्त्रियाम्" इत्यमरः। चिरोज्झितानि राक्षसभयात् इत्यर्थः आश्रममण्डलानि

सैषा स्थली यत्र विचिन्वता त्वां
भ्रष्टं मया नूपुरमेकमुर्व्याम्।
अदृश्यत त्वच्चरणारविन्द-
विश्लेषदुःखादिव बद्धमौनम्॥ २३॥
त्वं रक्षसा भीरु! यतोऽपनीता
तं मार्गमेताः कृपया लता मे।
अदर्शयन् वक्तुमशक्नुवत्यः
शाखाभिरावर्जितपल्लवाभिः॥ २४॥

आश्रमविभागान् यथास्वं स्वंस्वमनतिक्रम्य अध्यासते अधितिष्ठन्ति॥ २२॥

सैषेति। सा पूर्वानुभूता स्थली एषा, दृश्यते इत्यर्थः। यत्र स्थल्यां त्वां विचिन्वता अन्विष्यता मया त्वच्चरणारविन्देन यः विश्लेषः वियोगः तेन यत् दुःखं तस्मात् इव बद्धमौनं निःशब्दम्। उर्व्यां भ्रष्टम् एकं नूपुरं मञ्जीरः। "मञ्जीरो नूपुरोऽस्त्रियाम्" इत्यमरः। अदृश्यत दृष्टम्। हेतूत्प्रेक्षा॥ २३॥

त्वमिति। हे भीरु! भयशीले! "जङ्गुतः" इत्यूङ्, ततो नदीत्वात् सम्बुद्धौ ह्रस्वः। त्वं रक्षसा रावणेन यतः येन मार्गेण। सार्वविभक्तिकस्तसिः। अपनीता अपहृता तं मार्गं वागिन्द्रियाभावात् वक्तुम् अशक्नुवत्यः एताः लताः आवर्जिताः नमिताः पल्लवाः पाणिस्थानीयाः याभिः ताभिः शाखाभिः स्वावयवभूताभिः कृपया मे अदर्शयन् इत्सचेष्टया अदर्शयन् इत्यर्थः। "शाखा द्रुमान्तरे भुजे" इति विश्वः। लतादीनामपि ज्ञानमस्त्येव। तदुक्तं मनुना, "अन्तःसंज्ञा भवन्त्येते सुखदुःखसमन्विताः" इति॥ २४॥

मृग्यश्च दर्भाङ्कुरनिर्व्यपेक्षा-
स्तवागतिज्ञं समबोधयन् माम् ।
व्यापारयन्त्यो दिशि दक्षिणस्याम्
उत्पक्ष्मराजीनि विलोचनानि ॥ २५ ॥

एतद्गिरेर्माल्यवतः पुरस्तात्
आविर्भवत्यम्बरलेखि शृङ्गम् ।
नवं पयो यत्र घनैर्मया च
त्वद्विप्रयोगाश्रु समं विसृष्टम् ॥ २६ ॥

गन्धश्च धाराहतपल्वलानां
कादम्बमर्द्धोद्गतकेसरञ्च ।
स्निग्धाश्च केकाः शिखिनां बभूवु-
र्यस्मिन्नसह्यानि विना त्वया मे ॥ २७ ॥

मृग्यश्चेति । दर्भाङ्कुरेषु भक्ष्येषु निर्व्यपेक्षाः निःस्पृहाः
...षः समाक्रन्दाच्च उत्पक्ष्मराजीनि विलोचनानि दक्षिणस्यां
...शि व्यापारयन्त्यः प्रवर्त्तयन्त्यः सत्यः तव अगतिज्ञं गत्यनभिज्ञं
... समबोधयन् दृष्टिचेष्टया त्वद्गतिमबोधयन्नित्यर्थः ॥ २५ ॥

एतदिति । माल्यवतः नाम गिरेः अम्बरलेखि अभ्रङ्कष
...म् एतत् पुरस्तात् अग्रे आविर्भवति । यत्र शृङ्गे घनैः
...: नवं पयः मया त्वद्विप्रयोगेण यत् अश्रु तच्च समं युगपत्
...ष्टम् । मेघदर्शनादर्शतुल्यमश्रु विमुक्तमिति भावः ॥ २६ ॥

गन्धश्चेति । यस्मिन् शृङ्गे धाराभिः वर्षधाराभिः आहत-
...नां पल्वलानां गन्धश्च, अर्द्धोद्गतकेसरं कादम्बं नीपकुसुमञ्च,
...धाः मधुराः शिखिनां बर्हिणाम् । "शिखिनौ वह्नि-

पूर्वानुभूतं स्मरता च यत्र
कम्पोत्तरं भीरु ! तवोपगूढम् ।
गुहाविसारीण्यतिवाहितानि
मया कथञ्चिद्घनगर्जितानि ॥ २८ ॥
आसारसिक्तक्षितिबाष्पयोगात्
मामक्षिणोद्यत्र विभिन्नकोशैः ।
विडम्ब्यमाना नवकन्दलैस्ते
विवाहधूमारुणलोचनश्रीः ॥ २९ ॥
उपान्तवानीरवनोपगूढा-
न्यालक्ष्यपारिप्लवसारसानि ।

बर्हिणौ" इत्यमरः । केकाश्च, त्वया विना मे असह्यानि बभूवुः । "नपुंसकमनपुंसकेन" इति नपुंसकैकशेषः ॥ २७ ॥

पूर्वेति । किं च, हे भीरु ! यत्र शृङ्गे पूर्वानुभूतं कम्पोत्तरं कम्पप्रधानं तव उपगूढम् उपगूहनं स्मरता मया गुहाविसारीणि घनगर्जितानि कथञ्चित् अतिवाहितानि स्मारकत्वेनोद्दीपकत्वात् क्लेशेन गमितानि इत्यर्थः ॥ २८ ॥

आसारेति । यत्र शृङ्गे विभिन्नकोशैः विकसितकुड्मलैः नवकन्दलैः कन्दलीपुष्पैः अरुणवर्णैः आसारेण धारासम्पातेन "धारासम्पात आसारः" इत्यमरः । सिक्तायाः क्षितेः बाष्पस्य धूमवर्णस्य योगात् हेतोः विडम्ब्यमाना अनुक्रियमाणा विवाहधूमेन अरुणा लोचनश्रीः, तादृक्षात् स्मर्यमाणा इति शेषः, माम् अक्षिणोत् अपीडयत् ॥ २९ ॥

उपान्तेति । उपान्तवानीरवनोपगूढानि पार्श्ववञ्जु

दूरावतीर्णा पिबतीव खेदात्
अमूनि पम्पासलिलानि दृष्टिः ॥ ३० ॥
अत्रावियुक्तानि रथाङ्गनाम्नां
अन्योन्यदत्तोत्पलकेसराणि ।
द्वन्द्वानि दूरान्तरवर्त्तिना ते
मया प्रिये ! सस्पृहमीक्षितानि ॥ ३१ ॥
इमां तटाशोकलतां च तन्वीं
स्तनाभिरामस्तवकाभिनम्राम् ।
त्वत्प्राप्तिबुद्ध्या परिरब्धुकामः
सौमित्रिणा साश्रुरहं निषिद्धः ॥ ३२ ॥

तच्छानि आलक्ष्याः ईषत् दृश्याः पारिप्लवाः चञ्चलाः
रसाः येषु तानि अमूनि पम्पासलिलानि पम्पासरोजलानि
तात् अवतीर्णा मे दृष्टिः अतएव खेदात् पिबति इव न
शातुमुत्सहते इत्यर्थः ॥ ३० ॥

अत्रेति। अत्र पम्पासरसि अन्योन्यस्मै दत्तोत्पलकेस-
णि अवियुक्तानि रथाङ्गनाम्नां द्वन्द्वानि चक्रवाकमिथु-
नि ते तव दूरान्तरवर्त्तिना दूरदेशवर्त्तिना मया हे प्रिये !
पृहं साभिलाषम् ईक्षितानि तदानीं त्वामस्मार्षम्
र्थः ॥ ३१ ॥

इमामिति। किं च, स्तनवत् अभिरामाभ्यां स्तवका-
म् अभिनम्रां तन्वीम् इमां तटाशोकलताम् अतः त्वत्-
प्तिबुद्ध्या त्वमेव प्राप्तेति भ्रान्त्या परिरब्धुम् आलिङ्गितुं
मः यस्य स अहं सौमित्रिणा लक्ष्मणेन साश्रुः निषिद्धः

अमूर्विमानान्तरलम्बिनीनां
श्रुत्वा स्वनं काञ्चनकिङ्किणीनाम्।
प्रत्युद्व्रजन्तीव खमुत्पतन्त्यो-
गोदावरीसारसपङ्क्तयस्त्वाम्॥ ३३॥

एषा त्वया पेशलमध्ययापि
घटाम्बुसंवर्द्धितबालचूता।
आनन्दयत्युन्मुखकृष्णसारा
दृष्टा चिरात् पञ्चवटी मनो मे॥ ३४॥

अत्रानुगोदं मृगयानिवृत्त-
स्तरङ्गवातेन विनीतखेदः।

नेत्यं सोतीति निवारितः। परिरब्धुकाम इत्यत्र "तुं काम मनसोरपि" इति वचनात् मकारलोपः॥ ३२॥

अमूरिति। विमानस्य अन्तरेषु अवकाशेषु लम्बन्ते याः तासां काञ्चनकिङ्किणीनां स्वनं श्रुत्वा स्वयूथशङ्कया खम् आकाशम् उत्पतन्त्यः अमूः गोदावरीसारसपङ्क्तयः त्वां प्रत्युद्व्रजन्ति इव॥ ३३॥

एषेति। पेशलमध्ययापि भाराक्षमयापि इत्यर्थः, त्वया घटाम्बुभिः संवर्द्धिताः बालचूताः यस्याः सा उन्मुखाः अस्मदभिमुखाः त्वत्संवर्द्धिताः एव कृष्णसाराः यस्याः सा चिरात् दृष्टा एषा पञ्चवटी मे मनः आनन्दयति आह्लादयति। पञ्चवटीशब्दः पूर्वमेव व्याख्यातः॥ ३४॥

अत्रेति। अत्र पञ्चवट्यां गोदा गोदावरी तस्याः समीपे "अनुगोदम्। "अनुर्यत्समया" इत्यव्ययीभावः। मृगयाया

रहस्त्वदुत्सङ्गनिषण्णमूर्द्धा
स्मरामि वानीरगृहेषु सुप्तः ॥ ३५ ॥

भ्रूभेदमात्रेण पदान्मघोनः
प्रभ्रंशयां यो नहुषं चकार ।
तस्याविलाम्भःपरिशुद्धिहेतो-
र्भौमो मुनेः स्थानपरिग्रहोऽयम् ॥ ३६ ॥

त्रेताग्निधूमाग्रमनिन्द्यकीर्त्ते-
स्तस्येदमाक्रान्तविमानमार्गम् ।
घ्रात्वा हविर्गन्धि रजोविमुक्तः
समश्नुते मे लघिमानमात्मा ॥ ३७ ॥

गतः तरङ्गवातेन विनीतखेदः रहो रहसि । अत्यन्त-
योगे द्वितीया । त्वदुत्सङ्गनिषण्णमूर्द्धा सन् अहं वानीर-
गृहेषु सुप्तः स्मरामि । वाक्यार्थः कर्म । सुप्त इति यत्
त् स्मरामीत्यर्थः ॥ ३५ ॥

भ्रूभेदेति । यः मुनिः भ्रूभेदमात्रेण भ्रूभङ्गमात्रेणैव
हुषं राजानं मघोनः पदात् इन्द्रत्वात् प्रभ्रंशयाञ्चकार प्रभ्रंश-
ति स्म । आविलाम्भःपरिशुद्धिहेतोः कलुषजलप्रसादहेतोः
स्य मुनेः अगस्त्यस्य, अगस्त्यस्योदये शरदि जलं प्रसीदतीति
ं प्राक्, भूमौ भवः भौमः स्थानपरिग्रहः आश्रमोऽयं दृश्यते
ते शेषः । भौम इत्यनेन दिव्योऽप्यस्तीत्युक्तम् । परिगृह्यते
ते परिग्रहः स्थानमेव परिग्रहः इति विग्रहः ॥ ३६ ॥

त्रेतेति । अनिन्द्यकीर्त्तेः तस्य अगस्त्यस्य आक्रान्तविमान-
र्गं हविर्गन्धोऽस्यास्तीति हविर्गन्धि, त्रयः एव त्रेता

एतन्मुनेर्मानिनि! शातकर्णेः
पञ्चाप्सरो नाम विहारवारि।
आभाति पर्य्यन्तवनं विदूरात्
मेघान्तरालक्ष्यमिवेन्दुबिम्बम्॥ ३८॥
पुरा स दर्भाङ्कुरमात्रवृत्ति-
श्चरन् मृगैः सार्द्धमृषिर्मघोना।
समाधिभीतेन किलोपनीतः
पञ्चाप्सरोयौवनकूटबन्धम्॥ ३९॥

अग्निचयम्। "अग्निचयमिदं चेता" इत्यमरः। पृषोदरादित्वादेत्वम्। से तान्धे धूमायमिदं घ्रात्वाघ्राय रजसो गुणात् विमुक्तः मे मम आत्मा अन्तःकरणं लघिमानं लघुत्वगुणं समश्नुते प्राप्नोति॥ ३७॥

एतदिति। हे मानिनि! शातकर्णेः मुनेः सम्बन्धि पञ्चाप्सरो नाम पञ्चाप्सर इति प्रसिद्धम्। पञ्च अप्सरसः यस्मिन् इति विग्रहः। पर्य्यन्तेषु वनानि यस्य तत् पर्य्यन्तवनम् एतत् विहारवारि क्रीडासरः विदूरात्, मेघानाम् अन्तरे मध्ये आलक्ष्यम् ईषत् दृश्यम्। "आ ईषदर्थेऽभिव्याप्तौ" इत्यमरः। इन्दुबिम्बम् इव, आभाति॥ ३८॥

पुरेति। पुरा पूर्व्वस्मिन् काले दर्भाङ्कुरमात्रवृत्तिः तन्मात्राहारः मृगैः सार्द्धं सह चरन् सः ऋषिः समाधेः तपसः भीतेन मघोना इन्द्रेण पञ्चानाम् अप्सरसां यौवनम्। "तद्धितार्थ" इत्यादिना उत्तरपदसमासः। तदेव कूटबन्धं कपटयन्त्रम् उपनीतः। "उन्माथः कूटयन्त्रं स्यात्" इत्यमरः। किलेत्यैतिह्ये। मृगसाहचर्य्यात् मृगवदेव बद्धः इति भावः॥३९

तस्यायमन्तर्हितसौधभाजः
प्रसक्तसङ्गीतमृदङ्गघोषः ।
वियद्गतः पुष्पकचन्द्रशालाः
चणं प्रतिश्रुन्मुखराः करोति ॥ ४० ॥
हविर्भुजामेधवतां चतुर्णां
मध्ये ललाटन्तपसप्तसप्तिः ।
असौ तपस्यत्यपरस्तपस्वी
नाम्ना सुतीक्ष्णश्चरितेन दान्तः ॥ ४१ ॥

तस्येति । अन्तर्हितसौधभाजः जलान्तर्गतप्रासादगतस्य तस्य ज्ञातकर्णेः अयं प्रसक्तः सन्ततः सङ्गीतमृदङ्गघोषः वियद्गतः सन् पुष्पकस्य चन्द्रशालाः शिरोगृहाणि । "चन्द्रशाला शिरोगृहम्" इति हलायुधः । चणं प्रतिश्रुद्भिः प्रतिध्वानैः मुखराः ध्वनन्तीः करोति । "स्त्री प्रतिश्रुत् प्रतिध्वाने" इत्यमरः ॥ ४० ॥

हविरिति । नाम्ना सुतीक्ष्णः सुतीक्ष्णनामा चरितेन दान्तः सौम्यः असौ अपरः तपस्वी एधवताम् इन्धनवताम् । "काष्ठं दार्विन्धनं त्वेधः" इत्यमरः । चतुर्णां हविर्भुजाम् अग्नीनां मध्ये ललाटं तपतीति ललाटन्तपः सूर्य्यः । "असूर्य्यललाटयोर्दृशितपोः" इति खश्प्रत्ययः, "अरुर्द्विषत्" इत्यादिना मुमागमः । ललाटन्तपः सप्तसप्तिः सप्ताश्वः सूर्य्यः यस्य सः तथोक्तः सन् तपस्यति तपश्चरति "कर्म्मणो रोमन्थतपोभ्यां वर्त्तिचरोः" इति क्यङ्, तपसः परस्मैपदञ्चेति वक्तव्यम् ॥ ४१ ॥

अमुं सहासप्रहितेक्षणानि
व्याजार्धसन्दर्शितमेखलानि ।
नालं विकर्तुं जनितेन्द्रशङ्कं
सुराङ्गनाविभ्रमचेष्टितानि ॥ ४२ ॥
एषोऽक्षमालावलयं मृगाणां
कण्डूयितारं कुशसूचिलावम् ।
सभाजने मे भुजमूर्ध्वबाहुः
सव्येतरं प्राध्वमितः प्रयुङ्क्ते ॥ ४३ ॥

अमुमिति । जनितेन्द्रशङ्कं तपसा इति शेषः । अमुं सुतीक्ष्णं सहासं प्रहितानि ईक्षणानि दृष्टयः येषु तानि व्याजेन केनचित् मिषेण । "पुंस्यर्धोऽर्धं समेंऽशके" इति विश्वः । अर्धम् ईषत् सन्दर्शिताः मेखलाः येषु तानि सुराङ्गनानां इन्द्रप्रेषितानां विभ्रमाः विलासाः एव चेष्टितानि विकर्तुं स्खलयितुम् अलं समर्थानि न बभूवुः इति शेषः ॥४२॥

एष इति । ऊर्ध्वबाहुः एषः सुतीक्ष्णः अक्षमालैव वलयं यस्य तं मृगाणां कण्डूयितारं कुशाः एव सूचयः ताः लुनातीति कुशसूचिलावः तम् । "कर्मण्यण्" इत्यण् । एभिर्विशेषणैः जपशीलत्वं भूतदया कर्मकुशलत्वञ्च द्योत्यते । सव्यादितरं दक्षिणं भुजं मे मम सभाजने सम्भाषणनिमित्ते । "निमित्तात् कर्मयोगे" इति सप्तमी । इतः प्राध्वं प्रकृतानुकूलबन्धं प्रयुङ्क्ते । "आनुकूल्यार्थकं प्राध्वम्" इत्यमरः । अव्ययञ्चैतत् ॥ ४३ ॥

वाचंयमत्वात् प्रणतिं ममैष:
कम्पेन किञ्चित् प्रतिगृह्य मूर्ध्न: ।
दृष्टिं विमानव्यवधानमुक्तां
पुन: सहस्रार्चिषि सन्निधत्ते ॥ ४४ ॥

अद: शरण्यं शरभङ्गनाम्न-
स्तपोवनं पावनमाहिताग्ने: ।
चिराय सन्तर्प्य समिद्भिरग्निं
यो मन्त्रपूतां तनुमप्यहौषीत् ॥ ४५ ॥

छायाविनीताध्वपरिश्रमेषु
भूयिष्ठसम्भाव्यफलेष्वमीषु ।

वाचंयमत्वादिति। एष: सुतीक्ष्ण: वाचं यच्छतीति वाचंयम: मौनव्रती "वाचि यमो व्रते" इति खच्प्रत्यय:, "वाचंयमपुरन्दरौ च" इति मुम्। तस्य भाव: तत्त्वात् मम प्रणतिं किञ्चित् मूर्ध्न: कम्पेन प्रतिगृह्य विमानेन व्यवधानं तिरोधानं तस्मात् मुक्ताम्। "अपेतापोढमुक्तपतित—" इत्यादिना पञ्चमीसमास:। दृष्टिं पुन: सहस्रार्चिषि सूर्य्ये सन्निधत्ते सम्यक् धत्ते इत्यर्थ:, अन्यथा अकर्मकत्वप्रसङ्गात् ॥ ४४ ॥

अद इति। शरणे रक्षणे साधु शरण्यं पावयतीति पावनम् अद: दृश्यमानं तपोवनम् आहिताग्ने: शरभङ्गनाम्न: मुने: सम्बन्धि, य: शरभङ्ग: चिराय चिरम् अग्निं समिद्भि: सन्तर्प्य तर्पयित्वा तत: मन्त्रै: पूतां शुद्धां तनुम् अपि अहौषीत् हुतवान्। जुहोतेर्लुङ् ॥ ४५ ॥

छायेति। अधुना अस्मिन् काले तस्य शरभङ्गस्य सम्ब-

तस्यातिथीनामधुना सपर्या
स्थिता सुपुत्रेष्विव पादपेषु ॥ ४६ ॥

धाराखनोद्गारिदरीमुखोऽसौ
शृङ्गाग्रलग्नाम्बुदवप्रपङ्कः।
बध्नाति मे बन्धुरगात्रि! चक्षु-
र्दृप्तः ककुद्मानिव चित्रकूटः ॥ ४७ ॥

एषा प्रसन्नस्तिमितप्रवाहा
सरिद्विदूरान्तरभावतन्वी।
मन्दाकिनी भाति नगोपकण्ठे
मुक्तावली कण्ठगतेव भूमेः ॥ ४८ ॥

न्विनी अतिथीनां सपर्या अतिथिपूजा। "पूजा नमस्याप-चितिः सपर्याऽर्चार्हणाः समाः" इत्यमरः। छायाभिः विनीत-अपनीतः अध्वपरिश्रमः यैः तेषु भूयिष्ठानि बहुतमानि श्ला-घ्यानि श्लाघ्यानि फलानि येषां तेषु अमीषु पादपेषु पाल-हृदयेषु सुपुत्रेष्विव स्थिता। तत् पुत्रैरिव पादपैरनुष्ठी-इत्यर्थः ॥ ४६ ॥

धारेति। धाराः निर्झरधाराः, यद्वा धारया सातत्ये-स्वनोद्गारि दरी एव मुखं यस्य सः शृङ्गं शिखरं विकाग्र तस्य अग्रे लग्नः अम्बुदः एव वप्रपङ्कः वप्रक्रीडासक्तपङ्कः यस्य सः असौ चित्रकूटः हे बन्धुरगात्रि! उन्नतानताङ्गि! "बन्धु-तून्नतानतम्" इत्यमरः। दृप्तः ककुद्मान् वृषभः इव, मे चक्षुः बध्नाति अनन्यासक्तं करोति ॥ ४७ ॥

एषेति। प्रसन्नः निर्मलः स्तिमितः निःस्पन्दः प्रवाहः

अयं सुजातोऽनुगिरं तमालः
प्रवालमादाय सुगन्धि यस्य ।
यवाङ्कुरापाण्डुकपोलशोभी
मयावतंसः परिकल्पितस्ते ॥ ४९ ॥
अनिग्रहत्रासविनीतसत्त्व-
मपुष्पलिङ्गात् फलबन्धिवृक्षम् ।
वनं तपःसाधनमेतदत्रे-
राविष्कृतोदग्रतरप्रभावम् ॥ ५० ॥

यस्याः सा विदूरस्य अन्तरस्य मध्यवर्त्त्यवकाशस्य भावात्तन्वी दूरदेशवर्त्तित्वात् तनुत्वेन अवभासमाना मन्दाकिनी नाम काचित् चित्रकूटनिकटगा एषा सरित् नगोपकण्ठे, भूमेः कण्ठगता मुक्तावली इव, भाति । अत्र नगस्य शिरस्त्वं तदुपकण्ठस्य कण्ठत्वञ्च गम्यते ॥ ४८ ॥

अयमिति । गिरेः समीपे अनुगिरम् । "गिरेश्च सेनकस्य" इति समासान्तः टच्प्रत्ययः । सुजातः स तमालः अयं दृश्यते । यस्य तमालस्य शोभनः गन्धः यस्य तत् सुगन्धि । "गन्धस्य—" इत्यादिना इकारः समासान्तः । प्रवालं पल्लवम् आदाय मया ते यवाङ्कुरवत् आपाण्डौ कपोले शोभते यः सः अवतंसः परिकल्पितः ॥ ४९ ॥

अनिग्रहेति । अनिग्रहत्रासा दण्डभयरहिता अपि विनीताः सत्त्वाः जन्तवः यस्मिन् तत् अपुष्पलिङ्गात् पुष्परूपनिमित्तं विना एव फलबन्धिनः फलग्राहिणः वृक्षाः यस्मिन् तत् अतएव आविष्कृतोदग्रतरप्रभावम् अत्रेः मुनेः तपसः साधनं वनम् एतत् ॥ ५० ॥

अत्राभिषेकाय तपोधनानां
सप्तर्षिहस्तोद्धृतहेमपद्माम् ।
प्रवर्त्तयामास किलानुसूया
त्रिस्रोतसं त्र्यम्बकमौलिमालाम् ॥ ५१ ॥

वीरासनैर्ध्यानजुषामृषीणा-
ममी समध्यासितवेदिमध्याः ।
निवातनिष्कम्पतया विभान्ति
योगाधिरूढा इव शाखिनोऽपि ॥ ५२ ॥

त्वया पुरस्तादुपयाचितो यः
सोऽयं वटः श्याम इति प्रतीतः ।

अत्रेति । अत्र वने अनुसूया अत्रिपत्नी, सप्त च ते ऋषयश्च सप्तर्षयः । "दिक्संख्ये संज्ञायाम्" इति तत्पुरुषसमासः । तेषां हस्तैः उद्धृतानि हेमपद्मानि यस्याः तां त्र्यम्बकमौलिमालां हरशिरःस्रजं त्रिस्रोतसं भागीरथीं तपोधनानाम् ऋषीणाम् अभिषेकाय स्नानाय, प्रवर्त्तयामास, प्रवाहयामास । किलेत्यैतिह्ये ॥ ५१ ॥

वीरेति । वीरासनैः जयसाधनैः ध्यानं जुषन्ते सेवन्ते इति ध्यानजुषः तेषां तैः उपविश्य ध्यायताम् ऋषीणां सम्बन्धिनः समध्यासितवेदिमध्याः । इदं वीरासनस्थानीयम् । अमी शाखिनः अपि निवातनिष्कम्पतया योगाधिरूढा इव ध्यान-भाजः इव विभान्ति । ध्यायन्तोऽपि निश्चलाङ्गा भवन्ति । वीरासने वशिष्ठः, "एकपादमथैकस्मिन् विन्यस्योरुणि संस्थितम् । इतरस्मिंस्तथा चान्यं वीरासनमुदाहृतम्" इति ॥५२॥

त्वयेति । त्वया पुरस्तात् पूर्वं यः उपयाचितः प्रार्थितः

राशिर्मणीनामिव गारुड़ानां
सपद्मरागः फलितो विभाति ॥ ५३ ॥
क्वचित् प्रभालेपिभिरिन्द्रनीलै-
र्मुक्तामयी यष्टिरिवानुविद्धा ।
अन्यत्र माला सितपङ्कजाना-
मिन्दीवरैरुत्खचितान्तरेव ॥ ५४ ॥
क्वचित् खगानां प्रियमानसानां
कादम्बसंसर्गवतीव पङ्क्तिः ।
अन्यत्र कालागुरुदत्तपत्रा
भक्तिर्भुवश्चन्दनकल्पितेव ॥ ५५ ॥

था च रामायणे, "न्यग्रोधं तमुपस्थाय वैदेही वाक्यमब्रवीत् । मस्तेऽस्तु महावृक्ष ! पालयेन्मे व्रतं पतिः ॥" इति । श्याम ति ख्यातः सः वटः अयं फलितः सन्, सपद्मरागः गारुड़ानां णीनां मरकतानां राशिः इव, विभाति ॥ ५३ ॥

"क्वचित्—" इत्यादिभिश्चतुर्भिः श्लोकैः प्रयागे गङ्गायमुना- गमं वर्णयति, क्वचिदिति । हे अनवद्याङ्गि ! यमुनातरङ्गैः व्यवाहा मिश्रौघा गङ्गा जाह्नवी विभाति त्वं पश्य । केव ? चित् प्रदेशे प्रभया लिम्पन्ति सन्निहितमिति प्रभालेपिभिः द्रनीलैः अनुविद्धा, सह गुम्फिता मुक्तामयी यष्टिः इव हारा- लेः इव, विभाति । अन्यत्र प्रदेशे इन्दीवरैः नीलोत्पलैः त्खचितान्तरा सह ग्रथिता सितपङ्कजानां पुण्डरीकाणां ला इव, विभातीति सर्वत्र सम्बन्धः ॥ ५४ ॥

क्वचिदिति । क्वचित् कादम्बसंसर्गवती नीलहंससंसृष्टा

क्वचित् प्रभा चान्द्रमसी तमोभि-
श्छायाविलीनैः शबलीकृतेव।
अन्यत्र शुभ्रा शरदभ्रलेखा
रन्ध्रे ष्विवालक्ष्यनभःप्रदेशा॥ ५६॥
क्वचिच्च कृष्णोरगभूषणेव,
भस्माङ्गरागा तनुरीश्वरस्य।
पश्यानवद्याङ्गि! विभाति गङ्गा
भिन्नप्रवाहा यमुनातरङ्गैः॥ ५७॥
समुद्रपत्न्योर्जलसन्निपाते
पूतात्मनामत्र किलाभिषेकात्।
तत्त्वावबोधेन विनापि भूय-
स्तनुत्यजां नास्ति शरीरबन्धः॥ ५८॥

प्रियं मानसं नाम सरः येषां तेषां खगानां राजहंसानां पङ्क्ति
इव। "राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः" इत्यमरः
अन्यत्र कालागुरुणा दत्तपत्रा रचितमकरिका भुवः चन्द
कल्पिता भक्तिः इव॥ ५५॥

क्वचिदिति। क्वचित् छायासु विलीनैः स्थितैः तमोभि
शबलीकृता कर्बुरीकृता चान्द्रमसी प्रभा चन्द्रिका इव। अन्
रन्ध्रेषु आलक्ष्यनभःप्रदेशा शुभ्रा शरदभ्रलेखा शरन्मेघपङ्क्ति
इव॥ ५६॥

क्वचिदिति। क्वचित् कृष्णोरगभूषणा भस्माङ्गरागा ई
रस्य तनुः इव विभाति। शेषो व्याख्यातः। कलापकम्॥ ५
समुद्रेति। अत्र समुद्रपत्न्योः गङ्गायमुनयोः जलसन्निपा

पुरं निषादाधिपतेरिदं तत्
यस्मिन् मया मौलिमणिं विहाय ।
जटासु बद्धास्वरुदत् सुमन्त्रः
कैकेयि ! कामाः फलितास्तवेति ॥ ५९ ॥

पयोधरैः पुण्यजनाङ्गनानां
निर्विष्टहेमाम्बुजरेणु यस्याः ।
ब्राह्मं सरः कारणमाप्तवाचो
बुद्धेरिवाव्यक्तमुदाहरन्ति ॥ ६० ॥

इमे अभिषेकात् स्नानात् पूतात्मनां तनुत्यजां शुद्धात्मनां पुंसां
स्वावबोधेन तत्त्वज्ञानेन विनापि प्रारब्धशरीरत्यागानन्तरं
यः पुनः शरीरबन्धः शरीरयोगः नास्ति किल । अन्यत्र
ज्ञानादेव मुक्तिः । अत्रतु स्नानादेव मुक्तिरित्यर्थः ॥ ५८ ॥

पुरमिति । निषादाधिपतेः गुहस्य तत् पुरम् इदं, यस्मिन्
रे मया मौलिमणिं विहाय जटासु बद्धासु रचितासु सतीषु
सुमन्त्रः "हे कैकेयि ! तव कामाः मनोरथाः फलिताः सफलाः
जाताः" इति अरुदत् । "रुदिरश्रुविमोचने" इति धातोः
लङ् ॥ ५९ ॥

पयोधरैरिति । पुण्यजनाङ्गनानां यक्षस्त्रीणां पयोधरैः
स्तनैः निर्विष्टः उपभुक्तः हेमाम्बुजरेणुः यस्य तत् । तत्र ताः
क्रीडन्तीति व्यज्यते । ब्रह्मणः इदं ब्राह्मम् । "नस्तद्धिते"
इति टिलोपः । ब्राह्मं सरः मानसाख्यं यस्याः सरय्वाः, बुद्धेः
महत्तत्त्वस्य अव्यक्तं प्रधानम् इव, कारणम् आप्तस्य वाचः
आप्तवाचः वेदाः यद्वा बहुव्रीहिणा मुनयः उदाहरन्ति प्रवद-
न्ति ॥ ६० ॥

जलानि या तीरनिखातयूपा
वहत्ययोध्यामनु राजधानीम्।
तुरङ्गमेधावभृतावतीर्णै-
रिक्ष्वाकुभिः पुण्यतरीकृतानि ॥ ६१ ॥

यां सैकतोत्सङ्गसुखोचितानां
प्राज्यैः पयोभिः परिवर्धितानाम्।
सामान्यधात्रीमिव मानसं मे
सम्भावयत्युत्तरकोशलानाम् ॥ ६२ ॥

जलानीति। यूपः संस्कृतः पशुबन्धनार्थः दारुविशेषः। तीरनिखातयूपा या सरयूः तुरङ्गमेधाः अश्वमेधाः तेषु अवभृतार्थमेव अवतीर्णैः अवरूढैः इक्ष्वाकुगोत्रापत्यैः नः पूर्वैः। तद्राजत्वादणो लुक्। पुण्यतरीकृतानि अतिशयेन पुण्यानि कृतानि जलानि अयोध्यां राजधानीं नगरीम् अनु समीपे तया लक्षितया इत्यर्थः। अनुशब्दस्य "लक्षणेत्थम्भूत—" इत्यादिना कर्मप्रवचनीयत्वात् तद्योगे द्वितीया। वहति प्रापयति ॥६१॥

यामिति। यां सरयूं मे मानसं कर्तृ, सैकतं पुलिनं तत् एव उत्सङ्गः तत्र यत् सुखं तत्र उचितानां प्राज्यैः प्रभूतैः पयोभिः अम्बुभिः क्षीरैश्च। "पयः क्षीरं पयोऽम्बु च" इत्यमरः। परिवर्धितानां पुष्टानाम् उत्तरकोशलानाम् उत्तरकोशलेश्वराणां सामान्यधात्रीं साधारणमातरम् इव, सम्भावयति। "धात्री जनन्यामलकी वसुमत्युपमातृषु" इति विश्वः ॥ ६२ ॥

सेयं मदीया जननीव तेन
मान्येन राज्ञा सरयूर्वियुक्ता ।
दूरे वसन्तं शिशिरानिलैर्मां
तरङ्गहस्तैरुपगूहतीव ॥ ६३ ॥
विरक्तसन्ध्याकपिशं पुरस्तात्
यतो रजः पार्थिवमुज्जिहीते ।
शङ्के हनूमत्कथितप्रवृत्तिः
प्रत्युद्गतो मां भरतः ससैन्यः ॥ ६४ ॥
अद्धा श्रियं पालितसङ्गराय
प्रत्यर्पयिष्यत्यनघां स साधुः ।

सेति। मदीया जननी कौशल्या इव मान्येन पूज्येन
न राज्ञा दशरथेन वियुक्ता सा इयं सरयूः दूरे वसन्तं प्रोष्या-
ऽऽगतम् इत्यर्थः मां पुत्रभूतं शिशिरानिलैः तरङ्गैः एव हस्तैः
उपगूहति इव आलिङ्गति इव ॥ ६३ ॥
विरक्तेति। विरक्ता अतिरक्ता या सन्ध्या तद्वत् कपिशं
पिङ्गलवर्णम्। पृथिव्याः इदं पार्थिवं रजः धूलिः पुरस्तात् अग्रे
यतः यस्मात् कारणात् उज्जिहीते उद्गच्छति, तस्मात् हनुरस्या-
स्तीति हनूमान्। "शरादीनां च" इति दीर्घः। तेन कथिता
प्रवृत्तिः अस्मदागमनवार्त्ता यस्मै सः भरतः ससैन्यः सन् मां
प्रत्युद्गत इति शङ्के तर्कयामि। "शङ्का भयवितर्कयोः" इति
शब्दार्णवे। अत्र यत्तदोर्नित्यसम्बन्धात् तच्छब्दलाभः ॥ ६४ ॥
अद्धेति। किं च, साधुः सज्जनः सः भरतः। "साधु-
र्वार्धुषिके चारौ सज्जने चापि वाच्यवत्" इति विश्वः। पालित-

हत्वा निवृत्ताय मृधे खरादीन्
संरक्षितां त्वामिव लक्ष्मणो मे ॥ ६५ ॥
असौ पुरस्कृत्य गुरुं पदातिः
पश्चादवस्थापितवाहिनीकः ।
वृद्धैरमात्यैः सह चीरवासा
मामर्घ्यपाणिर्भरतोऽभ्युपैति ॥ ६६ ॥
पित्रा विसृष्टां मदपेक्षया यः
श्रियं युवाप्यङ्कगतामभोक्ता ।
इयन्ति वर्षाणि तया सहोग्र-
मभ्यस्यतीव व्रतमासिधारम् ॥ ६७ ॥

सङ्गराय पालितपितृप्रतिज्ञाय मे मह्यम् अनघाम् अक्षो भोगाभावात् अनुच्छिष्टां किन्तु संरक्षितां श्रियम्, मृधे यु खरादीन् हत्वा निवृत्ताय मे लक्ष्मणः संरक्षिताम् अनघां त्वामिव, प्रत्यर्पयिष्यति अद्धा सत्यम्। "सत्ये त्वद्धाञ्जसा द्वयम्" इत्यमरः ॥ ६५ ॥

असाविति। असौ पदातिः पादचारी चीरवासाः वल्कल-वसनः भरतः पश्चात् पृष्ठभागे अवस्थापिता वाहिनी सेना येन सः तथोक्तः सन्। "नद्यृतश्च" इति कप्। गुरुं वसिष्ठं पुरस्कृत्य वृद्धैः अमात्यैः सह अर्घ्यपाणिः सन् माम् अभ्युपैति ॥ ६६ ॥

पित्रेति। यः भरतः पित्रा विसृष्टां दत्ताम् अङ्कम् उत्सङ्ग-गताम् अपि यां श्रियं युवा मदपेक्षया मद्भक्त्या अभोक्ता अन तृन्नन्तत्वात् "नलोक—" इति षष्ठीनिषेधः। इयन्ति वर्षाणि एतावतः वत्सरान् अत्यन्तसंयोगे द्वितीया। तया श्रिया सा

एतावदुक्तवति दाशरथौ तदीया-
मिच्छां विमानमधिदेवतया विदित्वा ।
ज्योतिष्पथादवततार सविस्मयाभि-
रुद्वीक्षितं प्रकृतिभिर्भरतानुगाभिः ॥ ६८ ॥

तस्मात् पुरःसरविभीषणदर्शितेन
सेवाविचक्षणहरीश्वरदत्तहस्तः ।
यानादवातरददूरमहीतलेन
मार्गेण भङ्गिरचितस्फटिकेन रामः ॥ ६९ ॥

स्त्रियेति च गम्यते, उग्रं दुश्चरम् आसिधारं नाम व्रतम् अभ्यस्यति इव वर्त्तयति इव । "युवा युवत्या सार्द्धं यत् मुग्धभर्तृवदाचरेत् । अन्तर्निवृत्तसङ्गः स्यात् आसिधारव्रतं हि तत् ॥" इति यादवः । इदमासिधाराचङ्क्रमणतुल्यत्वादासिधारव्रतमित्युक्तम् ॥ ६७ ॥

एतावदिति । दाशरथौ रामे एतावत् उक्तवति सति विमानं पुष्पकं कर्तृ तदीयां रामसम्बन्धिनीम् इच्छाम् अधिदेवतया मिषेण विदित्वा तत्प्रेरितं सत् इत्यर्थः सविस्मयाभिः भरतानुगाभिः प्रकृतिभिः प्रजाभिः उद्वीक्षितं सत्ज्योतिष्पथात् आकाशात् अवततार ॥ ६८ ॥

तस्मादिति । रामः सेवायां विचक्षणः कुशलः हरीश्वरः सुग्रीवः तेन दत्तः हस्तः हस्तावलम्बः यस्य तादृशः सन् स्थलज्ञत्वात् पुरःसरः विभीषणः तेन दर्शितेन अदूरमासन्नं महीतलं यस्य तेन भङ्गिभिः विच्छित्तिभिः रचितस्फटिकेन बद्धस्फटिकेन सोपानपर्वणा मार्गेण तस्मात् यानात् पुष्पकात् अवातरत् अवतीर्णवान् । तरतेर्लङ् ॥ ६९ ॥

हत्वा निवृत्ताय मृधे खरादीन्
संरक्षितां त्वामिव लक्ष्मणो मे ॥ ६५ ॥

असौ पुरस्कृत्य गुरुं पदातिः
पश्चादवस्थापितवाहिनीकः ।
वृद्धैरमात्यैः सह चीरवासाः
मामर्घ्यपाणिर्भरतोऽभ्युपैति ॥ ६६ ॥

पित्रा विसृष्टां मदपेक्षया यः
श्रियं युवाप्यङ्कगतामभोक्ता ।
इयन्ति वर्षाणि तया सहोग्र-
मभ्यस्यतीव व्रतमासिधारम् ॥ ६७ ॥

सङ्गराय पालितपितृप्रतिज्ञाय मे मह्यम् अनघाम् परैर्भो-
भोगाभावात् अनुच्छिष्टां किन्तु संरक्षितां श्रियम्, मृधे युद्धे
खरादीन् हत्वा निवृत्ताय मे लक्ष्मणः संरक्षिताम् अनघां
त्वामिव, प्रत्यर्पयिष्यति अद्धा सत्यम् । "सत्ये त्वद्धाञ्जसा
द्वयम्" इत्यमरः ॥ ६५ ॥

असाविति । असौ पदातिः पादचारी चीरवासाः वल्कल-
वसनः भरतः पश्चात् पृष्ठभागे अवस्थापिता वाहिनी सेना येन
सः तथोक्तः सन् । "नद्यृतश्च" इति कप् । गुरुं वसिष्ठं पुरस्कृत्य
वृद्धैः अमात्यैः सह अर्घ्यपाणिः सन् माम् अभ्युपैति ॥ ६६ ॥

पित्रेति । यः भरतः पित्रा विसृष्टां दत्ताम् अङ्कम् उत्सङ्गं
गताम् अपि यां श्रियं युवा मदपेक्षया मद्भक्त्या अभोक्ता सन्
तृन्नन्तत्वात् "नलोक—" इति षष्ठीनिषेधः । इयन्ति वर्षाणि
एतावतः वत्सरान् अत्यन्तसंयोगे द्वितीया । तया श्रिया सह

एतावदुक्तवति दाशरथौ तदीया-
मिच्छां विमानमधिदेवतया विदित्वा ।
ज्योतिष्पथादवततार सविस्मयाभि-
रुद्वीक्षितं प्रकृतिभिर्भरतानुगाभिः ॥ ६८ ॥

तस्मात् पुरःसरविभीषणदर्शितेन
सेवाविचक्षणहरीश्वरदत्तहस्तः ।
यानादवातरददूरमहीतलेन
मार्गेण भङ्गिरचितस्फटिकेन रामः ॥ ६९ ॥

स्त्रियेति च गम्यते, उग्रं दुश्चरम् आसिधारं नाम व्रतम् अभ्यस्यति इव वर्त्तयति इव । "युवा युवत्या सार्धं यत् मुग्धभर्तृवदाचरेत् । अन्तर्निवृत्तसङ्गः स्यात् आसिधारव्रतं हि तत् ॥" इति यादवः । इदमासिधाराचङ्क्रमणतुल्यत्वादासिधारव्रतमित्युक्तम् ॥ ६७ ॥

एतावदिति । दाशरथौ रामे एतावत् उक्तवति सति विमानं पुष्पकं कर्तृ तदीयां रामसम्बन्धिनीम् इच्छाम् अधिदेवतया मिषेण विदित्वा तदवेदितं सत् इत्यर्थः सविस्मयाभिः भरतानुगाभिः प्रकृतिभिः प्रजाभिः उद्वीक्षितं सत्ज्योतिष्पथात् आकाशात् अवततार ॥ ६८ ॥

तस्मादिति । रामः सेवायां विचक्षणः कुशलः हरीश्वरः सुग्रीवः तेन दत्तः हस्तः हस्तावलम्बः यस्य तादृशः सन् स्थलज्ञत्वात् पुरःसरः विभीषणः तेन दर्शितेन अदूरमासन्नं महीतलं यस्य तेन भङ्गिभिः विच्छित्तिभिः रचितस्फटिकेन बद्धस्फटिकेन सोपानपर्वणा मार्गेण तस्मात् यानात् पुष्पकात् अवातरत् अवतीर्णवान् । तरतेर्लङ् ॥ ६९ ॥

इक्ष्वाकुवंशगुरवे प्रयतः प्रणम्य
स भ्रातरं भरतमर्घ्यपरिग्रहान्ते।
पर्य्यश्रुरस्वजत मूर्द्धनि चोपजघ्रौ
तद्भक्त्यपोढ़पितृराज्यमहाभिषेके ॥ ७० ॥
श्मश्रुप्रवृद्धिजनिताननविक्रियांश्च
प्लक्षान् प्ररोहजटिलानिव मन्त्रिवृद्धान्।
अन्वग्रहीत् प्रणमतः शुभदृष्टिपातै-
र्वार्त्तानुयोगमधुराक्षरया च वाचा ॥ ७१ ॥
दुर्जातबन्धुरयमृक्षहरीश्वरो मे
पौलस्त्य एष समरेषु पुरःप्रहर्त्ता।

इक्ष्वाक्विति। प्रयतः सः रामः इक्ष्वाकुवंशगुरवे वशिष्ठाय प्रणम्य नमस्कृत्य अर्घ्यस्य परिग्रहः स्वीकारः तस्य अन्ते पर्य्यश्रुः परिगतानन्दवाष्पः सन् स भ्रातरं भरतम् अस्वजत आलिङ्गत्, तस्मिन् रामे भक्त्या अपोढ़ः परिहृतः पितृराज्यमहाभिषेकः येन तस्मिन् मूर्द्धनि उपजघ्रौ च। "घ्रागन्धोपादाने" लिटि रूपम् ॥ ७० ॥

श्मश्र्विति। श्मश्रूणां मुखरोम्णां प्रवृद्ध्या संस्काराभावात् अभिवृद्ध्या जनिता आननेषु विक्रिया विकृतिः येषां तान् अतएव प्ररोहैः शाखावलम्बिभिः अधोमुखैः मूलैः जटिलान् जटावतः प्लक्षान् न्यग्रोधान् इव स्थितान्। प्रणमतः मन्त्रिवृद्धान् च शुभैः कृपार्द्रैः दृष्टिपातैः वार्त्तस्य अनुयोगेन कुशलप्रश्नेन मधुराक्षरया वाचा च अन्वग्रहीत् अनुगृहीतवान् ॥ ७१ ॥

दुर्जात इति। अयं मे दुर्जातबन्धुः आपद्बन्धुः।

इत्यादृतेन कथितौ रघुनन्दनेन
व्युत्क्रम्य लक्ष्मणमुभौ भरतो ववन्दे ॥ ७२ ॥
सौमित्रिणा तदनु संससृजे स चैनम्
उत्थाप्य नम्रशिरसं भृशमालिलिङ्ग ।
रूढेन्द्रजित्प्रहरणव्रणकर्कशेन
क्लिश्यन्निवास्य भुजमध्यमुरःस्थलेन ॥ ७३ ॥

"दुर्जातं व्यसनं प्रोक्तम्" इति विश्वः। ऋक्षहरीश्वरः सुग्रीवः, एषः समरेषु पुरःप्रहर्त्ता पौलस्त्यः विभीषणः इति आदृतेन आदरवता। कर्त्तरि क्तः। रघूणां नन्दनेन रामेण कथितौ उभौ विभीषणसुग्रीवौ लक्ष्मणम् अनुजम् अपि व्युत्क्रम्य आलिङ्गनादिभिः असम्भाव्य भरतः ववन्दे ॥ ७२ ॥

सौमित्रिणेति। तत् अनु सुग्रीवादिवन्दनानन्तरं सः भरतः सौमित्रिणा संससृजे सङ्गतः। "सृज विसर्गे" दैवादिकात् कर्त्तरि लिट्। नम्रशिरसं प्रणतम् एनं सौमित्रिम् उत्थाप्य भृशं गाढम् आलिलिङ्ग च। किं कुर्वन्? रूढेन्द्रजित्प्रहरणव्रणैः कर्कशेन अस्य सौमित्रेः उरःस्थलेन भुजमध्यं स्वकीयं क्लिश्यन् इव पीड़यन्निव। क्लिश्नातिरयं सकर्मकः "क्लिश्नाति भुवनत्रयम्" इति दर्शनात्। ननु रामायणे, "ततो लक्ष्मणमासाद्य वैदेहीञ्च परन्तपः। अभिवाद्य ततः प्रीतो भरतो नाम चाब्रवीत्॥" इति भरतस्य कानिष्ठ्यं प्रतीयते। किमर्थं ज्यैष्ठ्यमवलम्ब्य आर्जवेन श्लोको व्याख्यातः सत्यम्। किन्तु रामायणश्लोकार्थष्टीकाकृतोक्तः श्रूयताम्, "ततो लक्ष्मणमासाद्य" इत्यादिश्लोके आसादनं लक्ष्मणवैदेह्योः, अभि-

रामाज्ञया हरिचमूपतयस्तदानीं
कृत्वा मनुष्यवपुरारुरुहुर्गजेन्द्रान्।
तेषु क्षरत्सु बहुधा मदवारिधाराः
शैलाधिरोहणसुखान्युपलेभिरे ते ॥ ७४ ॥
सानुप्लवः प्रभुरपि क्षणदाचराणां
भेजे रथान् दशरथप्रभवानुशिष्टः।
मायाविकल्परचितैरपि ये तदीयै-
र्न स्यन्दनैस्तुलितकृत्रिमभक्तिशोभाः ॥ ७५ ॥

वादनं तु वैदेह्या एव, अन्यथा पूर्वोक्तं भरतस्य ज्यैष्ठ्यं विरुध्येतेति ॥ ७३ ॥

रामेति। तदानीं हरिचमूपतयः रामाज्ञया मनुष्यवपुः कृत्वा गजेन्द्रान् आरुरुहुः बहुधा मदवारिधाराः क्षरत्सु वर्षत्सु तेषु गजेन्द्रेषु ते कपियूथनाथाः शैलाधिरोहणसुखानि उपलेभिरे अनुबभूवुः ॥ ७४ ॥

सानुप्लव इति। सानुप्लवः सानुगः। "अभिसारस्त्वनुसरः सहायोऽनुप्लवोऽनुगः" इति यादवः। क्षणदाचराणां प्रभुः विभीषणोऽपि प्रभवत्यस्मादिति प्रभवः जनकः दशरथः प्रभवः यस्य सः दशरथप्रभवः रामः तेन अनुशिष्टः आज्ञप्तः सन् रथान् भेजे। तानेव विशिनष्टि, ये रथाः मायाविकल्परचितैः सङ्कल्पविशेषनिर्मितैरपि तदीयैः विभीषणीयैः स्यन्दनैः रथैः तुलितकृत्रिमभक्तिशोभाः तुलिता समीकृता कृत्रिमा क्रियया निर्वृत्ता भक्तीनां शोभा येषां ते तथोक्ताः न भवन्ति तेऽपि तत्साम्यं न लभन्त इत्यर्थः। कृत्रिमेत्यत्र "ड्वितः क्त्रिः" इति क्त्रिप्रत्ययः, "क्त्रेर्मम् नित्यम्" इति ममागमः ॥७५॥

भूयस्ततो रघुपतिर्विलसत्पताकम्
अध्यास्त कामगति सावरजो विमानम् ।
दोषातनं बुधबृहस्पतियोगदृश्य-
स्तारापतिस्तरलविद्युदिवाभ्रवृन्दम् ॥ ७६ ॥
तत्रेश्वरेण जगतां प्रलयादिवोर्वीं
वर्षात्ययेन रुचमभ्रघनादिवेन्दोः ।
रामेण मैथिलसुतां दशकण्ठकृच्छ्रात्
प्रत्युद्धृतां धृतिमतीं भरतो ववन्दे ॥ ७७ ॥
लङ्केश्वरप्रणतिभङ्गदृढव्रतं तत्
वन्द्यं युगं चरणयोर्जनकात्मजायाः ।

भूय इति । ततः रघुपतिः सावरजः भरतलक्ष्मणसहितः
न् विलसत्पताकं कामेन इच्छानुसारेण गतिः यस्य तत्
वेमानं भूयः पुनरपि, बुधबृहस्पतिभ्यां योगेन दृश्यः दर्श-
ीयः तारापतिः चन्द्रः दोषाभवं दोषातनम् । "सायञ्चिरं
ाह्ने" इत्यादिना दोषाशब्दादव्ययात् ट्युप्रत्ययः । तरल-
वेद्युत् चञ्चलतड़ित् अभ्रवृन्दमिव, अध्यास्त अधिष्ठित-
ान् ॥ ७६ ॥

तत्रेति । तत्र विमाने, जगताम् ईश्वरेण आदिवराहेण
ालयात् उर्वीम् इव, वर्षात्ययेन शरदागमेन अभ्रघनात्
ोवसङ्घातात् इन्दोः रुचं चन्द्रिकाम् इव, रामेण दशकण्ठः
ेव कृच्छ्रं सङ्कटं तस्मात् प्रत्युद्धृतां धृतिमतीं सन्तोषवतीं
ैथिलसुतां सीतां भरतः ववन्दे ॥ ७७ ॥

लङ्केश्वरेति । लङ्केश्वरस्य रावणस्य प्रणतीनां भङ्गेन

ज्येष्ठानुवृत्तिजटिलञ्च शिरोऽस्य साधो-
रन्योन्यपावनमभूदुभयं समेत्य ॥ ७८ ॥
क्रोशार्द्धं प्रकृतिपुरःसरेण गत्वा
काकुत्स्थः स्तिमितजवेन पुष्पकेण ।
शत्रुघ्नप्रतिविहितोपकार्य्यमार्य्यः
साकेतोपवनमुदारमध्युवास ॥ ७९ ॥

इति श्रीरघुवंशे महाकाव्ये कालिदासकृतौ
दण्डकाप्रत्यागमनं नाम
त्रयोदशः सर्गः ।

निरासेन दृढव्रतम् अखण्डितपातिव्रत्यम् अतएव वन्द्यं तत् जनकात्मजायाः चरणयोः युगम्, ज्येष्ठानुवृत्त्या जटिलं जटायुक्तं साधोः सज्जनस्य अस्य भरतस्य शिरश्च इत्युभयं समेत्य मिलित्वा अन्योन्यस्य पावनं शोधकम् अभूत् ॥ ७८ ॥

क्रोशेति । आर्य्यः पूज्यः काकुत्स्थः रामः प्रकृतयः प्रजाः पुरःसराः यस्य तेन स्तिमितजवेन मन्दवेगेन पुष्पकेण, क्रोशः अध्वपरिमाणविशेषः, क्रोशार्द्धं क्रोशैकदेशं गत्वा शत्रुघ्नेन प्रतिविहिताः सज्जिताः उपकार्य्याः पटभवनादि यस्मिन् तत् उदारं महत् साकेतस्य अयोध्यायाः उपवनम् अध्युवास अधितष्ठौ । "साकेतः स्यादयोध्यायां कोशला नन्दिनी तथा" इति यादवः ॥ ७९ ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां रघुवंशटीकायां सञ्जीवनीसमाख्यायां त्रयोदशः सर्गः ।

## चतुर्दशः सर्गः ।

भर्त्तुः प्रणाशादथ शोचनीयं
दशान्तरं तत्र समं प्रपन्ने ।
अपश्यतां दाशरथी जनन्यौ
छेदादिवोपघ्नतरोर्व्रतत्यौ ॥ १ ॥

उभावुभाभ्यां प्रणतौ हतारी
यथाक्रमं विक्रमशोभिनौ तौ ।
विस्पष्टमस्रान्धतया न दृष्टौ
ज्ञातौ सुतस्पर्शसुखोपलम्भात् ॥ २ ॥

जीवनं मैथिलकन्यकायाः सौन्दर्य्यसर्वस्वमहानिधानम् ।
पादपङ्के रघुयोः समानं रामस्य वन्दे रमणीयमास्यम् ॥

भर्त्तुरिति । अथ उपवनाधिष्ठानानन्तरं दाशरथी राम-लक्ष्मणौ, उपघ्नतरोः आश्रयवृक्षस्य । "उपघ्नमाश्रये" इति निपातः । छेदात् व्रतत्यौ लते इव । "वल्लीतु व्रततिर्लता" इत्यमरः । भर्त्तुः दशरथस्य प्रणाशात् शोचनीयं दशान्तरम् अवस्थान्तरम् । "अवस्थायां वस्त्रान्ते स्यादृशापि" इति विश्वः । प्रपन्ने प्राप्ते जनन्यौ कौशल्यासुमित्रे तत्र साकेतोप-वने समं युगपत् अपश्यताम् । दृशेः कर्त्तरि लङ् ॥ १ ॥

उभाविति । यथाक्रमं स्वस्वमातृपूर्वकं प्रणतौ नमस्कृतवन्तौ हतारी हतशत्रुकौ विक्रमशोभिनौ तौ उभौ रामलक्ष्मणौ उभाभ्यां मातृभ्यामस्रैः अश्रुभिः अन्धतया हेतुना । "अस्र-

आनन्दजः शोकजमश्रु बाष्प-
स्तयोरशीतं शिशिरो बिभेद।
गङ्गासरय्वोर्जलमुष्णतप्तं
हिमाद्रिनिस्यन्द इवावतीर्णः॥ ३॥
ते पुत्रयोर्नैरृतशस्त्रमार्गान्
आर्द्रानिवाङ्गे सदयं स्पृशन्त्यौ।
अपीप्सितं क्षत्रकुलाङ्गनानां
न वीरसूशब्दमकामयेताम्॥ ४॥
क्लेशावहा भर्त्तुरलक्षणाहं
सीतेति नाम स्वमुदीरयन्ती।

अश्रु च शोणितम्" इति यादवः। विस्पष्टं न दृष्टौ किन्
सुतस्पर्शेन यत् सुखं तस्य उपलम्भादनुभवात् आतौ॥ २॥

आनन्दज इति। तयोः मात्रोः आनन्दजः शिशिर
बाष्पः शोकजम् अशीतम् उष्णम् अश्रु, उष्णतप्तं शीतलम
गङ्गासरय्वोः जलं कर्म अवतीर्णो हिमाद्रेः निस्यन्दः निर्भर
इव, बिभेद। आनन्देन शोकस्तिरस्कृत इत्यर्थः॥ ३॥

ते इति। ते मातरौ पुत्रयोः अङ्गे शरीरे नैरृतशस्त्राणां
राक्षसशस्त्राणां मार्गान् व्रणान् आर्द्रान् सरसान् इव सदयं
स्पृशन्त्यौ क्षत्रकुलाङ्गनानाम् ईप्सितम् इष्टम् अपि वीरसू
वीरमातेति शब्दं न अकामयेताम्। वीरप्रसवो दुःखहेतु
इति भावः॥ ४॥

क्लेशावहेति। आवहतीति आवहा, भर्त्तुः क्लेशावहा
क्लेशकारिणी अतएव अलक्षणा अहं सीतेति स्वं नाम

स्वर्गप्रतिष्ठस्य गुरोर्महिष्या-
वभक्तिभेदेन वधूर्ववन्दे ॥ ५ ॥
उत्तिष्ठ वत्से ! ननु सानुजोऽसौ
वृत्तेन भर्त्ता शुचिना तवैव ।
कृच्छ्रं महत् तीर्ण इति प्रियार्हां
तामूचतुस्ते प्रियमप्यमिथ्या ॥ ६ ॥
अथाभिषेकं रघुवंशकेतोः
प्रारब्धमानन्दजलैर्जनन्योः ।
निर्वर्त्तयामासुरमात्यवृद्धाः
तीर्थाहृतैः काञ्चनकुम्भतोयैः ॥ ७ ॥

उदीरयन्ती स्वर्गः प्रतिष्ठा आस्पदं यस्य तस्य स्वर्गस्थितस्य गुरोः श्वशुरस्य महिष्यौ श्वश्र्वौ वधूः स्नुषा। "वधूः स्नुषा वधूर्जाया" इत्यमरः। अभक्तिभेदेन ववन्दे। स्वर्गप्रतिष्ठस्येत्यनेन श्वश्रूवैधव्यदर्शनदुःखं सूचितम् ॥ ५ ॥

उत्तिष्ठेति। ननु "वत्से ! उत्तिष्ठ असौ सानुजः भर्त्ता तव एव शुचिना वृत्तेन महत् कृच्छ्रं दुःखं तीर्णः तीर्णवान्" इति प्रियार्हां तां वधूं प्रियमपि अमिथ्या सत्यं ते श्वश्र्वौ ऊचतुः। उभयं दुर्वचम् इति भावः ॥ ६ ॥

अथेति। अथ जनन्योः आनन्दजलैः आनन्दवाष्पैः प्रारब्धं प्रक्रान्तं रघुवंशकेतोः रामस्य अभिषेकम् अमात्यवृद्धाः तीर्थेभ्यः गङ्गाप्रमुखेभ्यः आहृतैः आनीतैः काञ्चनकुम्भतोयैः निर्वर्त्तयामासुः निष्पादयामासुः ॥ ७ ॥

सरित्समुद्रान् सरसीश्च गत्वा
रक्षःकपीन्द्रैरुपपादितानि।
तस्यापतन् मूर्ध्नि जलानि जिष्णो-
र्विन्ध्यस्य मेघप्रभवा इवापः॥ ८॥

तपस्विवेशक्रिययापि तावत्
यः प्रेक्षणीयः सुतरां बभूव।
राजेन्द्रनेपथ्यविधानशोभा
तस्योदितासीत् पुनरुक्तदोषा॥ ९॥

स मौलरक्षोहरिभिः ससैन्यः
तूर्य्यस्वनानन्दितपौरवर्गः।
विवेश सौधोद्गतलाजवर्षाम्
उत्तोरणामन्वयराजधानीम्॥ १०॥

सरिदिति। रक्षःकपीन्द्रैः सरितः गङ्गाद्याः समुद्रान् पूर्वादीन् सरसीः मानसादीश्च गत्वा उपपादितानि उपनीतानि जलानि जिष्णोः जयशीलस्य। "ग्लाजिस्थश्च ग्स्नुः" इति ग्स्नुप्रत्ययः। तस्य रामस्य मूर्ध्नि, विन्ध्यस्य विन्ध्याद्रेः मूर्ध्नि मेघप्रभवाः आपः इव, अपतन्॥ ८॥

तपस्वीति। यः रामः तपस्विवेशक्रियया अपि तपस्विवेशरचनया अपि सुतराम् अत्यन्तं प्रेक्षणीयः तावत् दर्शनीय एव बभूव, तस्य राजेन्द्रनेपथ्यविधानेन राजवेशरचनया उदिता या शोभा सा पुनरुक्तं नाम दोषः यस्याः सा पुनरुक्तदोषा द्विगुणा आसीत्॥ ९॥

स इति। सः रामः ससैन्यः तूर्य्यस्वनैः आनन्दितपौर-

सौमित्रिणा सावरजेन मन्दम्
आधूतबालव्यजनो रथस्थः ।
धृतातपत्रो भरतेन साक्षात्
उपायसङ्घात इव प्रवृद्धः ॥ ११ ॥

प्रासादकालागुरुधूमराजि-
स्तस्याः पुरो वायुवशेन भिन्ना ।
वनान्निवृत्तेन रघूत्तमेन
मुक्ता स्वयं वेणिरिवाबभासे ॥ १२ ॥

श्वश्रूजनानुष्ठितचारुवेशां
कर्णीरथस्थां रघुवीरपत्नीम् ।

ः सन् मूले भवाः मौलाः मन्त्रिवृद्धाः तैः रक्षोभिः
रिभिश्च सह सौधेभ्यः उद्गतलाजवर्षाम् उत्तोरणाम्
वयराजधानीम् अयोध्यां विवेश प्रविष्टवान् ॥ १० ॥

सौमित्रिणेति । सावरजेन अनुजयुक्तेन सौमित्रिणा
णेन मन्दम् आधूते बालव्यजने चामरे यस्य सः रथस्थः
तेन धृतातपत्रः एवं चतुर्व्यूहः रामः प्रवृद्धः साक्षादुपा-
नां सामादीनां सङ्घातः समष्टिरिव विवेशेति पूर्वेण
न्वयः ॥ ११ ॥

प्रासादेति । वायुवशेन भिन्ना प्रासादे यः कालागुरुधूमः
य राजिः रेखा वनात् निवृत्तेन रघूत्तमेन रामेण स्वयं
ता तस्याः पुरः पुर्य्याः वेणिः इव आबभासे । पुरोऽपि
तेव्रतासमाधिवृत्ताः । "न प्रोषिते तु संस्कुर्य्यान्न वेणीञ्च
रोचयेत्" इति हारीतः ॥ १२ ॥

प्रासादवातायनदृश्यबन्धैः
साकेतनार्य्योऽञ्जलिभिः प्रणेमुः ॥ १३ ॥

स्फुरत्प्रभामण्डलमानुसूयं
सा बिभ्रती शाश्वतमङ्गरागम् ।
रराज शुद्धेति पुनः स्वपुर्य्यै
सन्दर्शिता वह्निगतेव भर्त्रा ॥ १४ ॥

वेश्मानि रामः परिवर्हवन्ति
विश्राण्य सौहार्दनिधिः सुहृद्भ्यः ।
बाष्पायमाणो बलिमन्निकेतम्
आलेख्यशेषस्य पितुर्विवेश ॥ १५ ॥

श्वश्रूजनेति । श्वश्रूजनैः अनुष्ठितचारुवेशां कृतशोभनेपथ्याम् । "आकल्पवेषौ नेपथ्यम्" इत्यमरः । कर्णीरथः स्त्रीयोग्यः अल्परथः । "कर्णीरथः प्रवहणं डयनं रथगर्भके" इति यादवः । तत्रस्थां रघुवीरपत्नीं सीतां साकेतनार्य्यः प्रासादवातायनेषु दृश्यबन्धैः लक्ष्यपुटैः अञ्जलिभिः प्रणेमुः ॥१३॥

स्फुरदिति । स्फुरत्प्रभामण्डलम् आनुसूयम् अनुसूयया दत्तं शाश्वतं सदातनम् अङ्गरागं बिभ्रती सा सीता भर्त्रा स्वपुर्य्यै शुद्धेति सन्दर्शिता पुनर्वह्निगतेव रराज ॥ १४ ॥

वेश्मानीति । सुहृदः भावः सौहार्दं सौजन्यम् । "हृद्भगसिन्ध्वन्ते पूर्वपदस्य—" इत्युभयपदवृद्धिः । सौहार्दनिधिः रामः सुहृद्भ्यः सुग्रीवादिभ्यः परिवर्हवन्ति उपकरणवन्ति वेश्मानि विश्राण्य दत्त्वा आलेख्यशेषस्य चित्रमात्रशेषस्य पितुः

कृताञ्जलिस्तत्र यदम्ब ! सत्यात्
नाभ्रश्यत स्वर्गफलाद् गुरुर्नः ।
तच्चिन्त्यमानं सुकृतं तवेति
जहार लज्जां भरतस्य मातुः ॥ १६ ॥

तथैव सुग्रीवविभीषणादीन्
उपाचरत् कृत्रिमसंविधाभिः ।
सङ्कल्पमात्रोदितसिद्धयस्ते
क्रान्ता यथा चेतसि विस्मयेन ॥ १७ ॥

सभाजनायोपगतान् स दिव्यान्
मुनीन् पुरस्कृत्य हतस्य शत्रोः ।

श्रिमत् पूजायुक्तं निकेतं गृहं बाष्पायमाणः बाष्पम् उद्वमन्
विवेश । "बाष्पोष्मभ्यामुद्वमने" इति क्यङ्प्रत्ययः ॥ १५ ॥

कृताञ्जलिरिति । तत्र निकेतने कृताञ्जलिः सन् रामः,
अम्ब ! नः गुरुः पिता स्वर्गः फलं यस्य तस्मात् सत्यात्
अभ्रश्यत न भ्रष्टवान् इति यत् अभ्रंशनं तत् चिन्त्यमानं
विचार्यमाणं तव सुकृतम् इत्येवं प्रकारेण, भरतस्य मातुः
कैकेय्याः लज्जां जहार अपानयत् । राज्ञां प्रतिज्ञापरिपालनं
स्वर्गसाधनम् इत्यर्थः । भरतग्रहणं तदपेक्षयापि कैकेय्यनु-
ग्रहद्योतनार्थम् ॥ १६ ॥

तथेति । सुग्रीवविभीषणादीन् संविधीयन्ते इति संविधाः
भोग्यवस्तूनि कृत्रिमसंविधाभिः तथा तेन प्रकारेण एव उपा-
चरत् यथा सङ्कल्पमात्रेण इच्छामात्रेण उदितसिद्धयः ते
सुग्रीवादयः चेतसि विस्मयेन क्रान्ताः आक्रान्ताः ॥ १७ ॥

शुश्राव तेभ्यः प्रभवादि वृत्तं
स्वविक्रमे गौरवमादधानम् ॥ १८ ॥
प्रतिप्रयातेषु तपोधनेषु
सुखादविज्ञातगतार्द्धमासान् ।
सीतास्वहस्तोपहृताग्र्यपूजान्
रक्षःकपीन्द्रान् विससर्ज रामः ॥ १९ ॥
तच्चात्मचिन्तासुलभं विमानं
हृतं सुरारेः सह जीवितेन ।
कैलासनाथोद्वहनाय भूयः
पुष्पं दिवः पुष्पकमन्वमंस्त ॥ २० ॥

सभाजनायेति । सः रामः सभाजनाय अभिवन्दनाय उपगतान् दिवि भवान् मुनीन् अगस्त्यादीन् पुरस्कृत्य हतस्य शत्रोः रावणस्य प्रभवादि जन्मादिकं स्वविक्रमे गौरवम् उत्कर्षम् आदधानं वृत्तं तेभ्यः मुनिभ्यः शुश्राव श्रुतवान् । विजितोत्कर्षोऽज्जे तुरुत्कर्षः इत्यर्थः ॥ १८ ॥

प्रतीति । तपोधनेषु मुनिषु प्रतिप्रयातेषु प्रतिनिवृत्त्य गतेषु सत्सु, सुखात् अविज्ञातः एव गतः अर्द्धमासः येषां तान् अनन्तरं सीतायाः स्वहस्तेन उपहृता दत्ता अग्र्यपूजा उत्तमसम्भावना येभ्यः तान्, एतेन सौहार्दातिशयः उक्तः । रक्षःकपीन्द्रान् रामः विससर्ज विसृष्टवान् ॥ १९ ॥

तच्चेति । तच्च आत्मचिन्तासुलभं स्वेच्छामात्रलभ्यं सुरारेः रावणस्य जीवितेन सह हृतं दिवः पुष्पं पुष्पवत् आभरणभूतं पुष्पकं विमानं भूयः पुनरपि कैलासनाथस्य कुबेरस्य उद्वहनाय

पितुर्नियोगाद्वनवासमेवं
निस्तीर्य्य रामः प्रतिपन्नराज्यः ।
धर्मार्थकामेषु समां प्रपेदे
यथा तथैवावरजेषु वृत्तिम् ॥ २१ ॥
सर्वासु मातृष्वपि वत्सलत्वात्
स निर्विशेषप्रतिपत्तिरासीत् ।
षड़ाननापीतपयोधरासु
नेता चमूनामिव कृत्तिकासु ॥ २२ ॥
तेनार्थवान् लोभपराङ्मुखेन
तेन घ्नता विघ्नभयं क्रियावान् ।

अन्वमंस्त अनुज्ञातवान् । मन्यतेर्लुङ् । भूयोग्रहणेन पूर्वमप्येतत् कौवेरमेवेति सूच्यते ॥ २० ॥

पितुरिति । रामः एवं पितुः नियोगात् शासनात् वनवासं निस्तीर्य्य अनन्तरं प्रतिपन्नराज्यः प्राप्तराज्यः सन् धर्मार्थकामेषु यथा तथैव अवरजेषु अनुजेषु समां वृत्तिं प्रपेदे अवैषम्येण व्यवहृतवान् इत्यर्थः ॥ २१ ॥

सर्वास्विति । सः रामः वत्सलत्वात् स्निग्धत्वात् न तु लोकप्रतीत्यर्थम् । "स्निग्धस्तु वत्सलः" इत्यमरः । सर्वासु मातृषु अपि निर्विशेषप्रतिपत्तिः तुल्यसत्कारः आसीत् । कथमिव ? चमूनां नेता षण्मुखः षड्भिः आननैः आपीताः पयोधराः स्तनाः यासां तासु कृत्तिकासु इव ॥ २२ ॥

तेनेति । लोकः लोभपराङ्मुखेन वदान्येन तेन रामेण अर्थवान् धनिकः आस बभूव । तिङन्तप्रतिरूपकमव्ययमेतत् ।

तेनास लोकः पितृमान् विनेत्रा
तेनैव शोकापनुदेन पुत्री ॥ २३ ॥
स पौरकार्य्याणि समीक्ष्य काले
रेमे विदेहाधिपतेर्दुहित्रा ।
उपस्थितश्चारु वपुस्तदीयं
कृत्वोपभोगोत्सुकयेव लक्ष्म्या ॥ २४ ॥
तयोर्यथाप्रार्थितमिन्द्रियार्थान्
आसेदुषोः सद्मसु चित्रवत्सु ।
प्राप्तानि दुःखान्यपि दण्डकेषु
सञ्चिन्त्यमानानि सुखान्यभूवन् ॥ २५ ॥

विन्नेश्वः भयं घ्नता नुदता तेन क्रियावान् अनुष्ठानवान्। विनेत्रा नियामकेन तेन पितृमान् आस पितृवनियन्त्रित इत्यर्थः। शोकमपनुदतीति शोकापनुदः दुःखस्य हर्त्ता तेन। "तुन्दशोकयोः परिमृजापनुदोः" इति कमत्यथः। तेन पुत्री पुत्रवान् आस पुत्रवदानन्दयति इत्यर्थः ॥ २३ ॥

स इति। सः रामः काले अवसरे पौराणां कार्य्याणि प्रयोजनानि समीक्ष्य विदेहाधिपतेः दुहित्रा सीतया, उपभोगोत्सुकया अतएव तदीयं सीतासम्बन्धि चारु वपुः कृत्वा स्थितया लक्ष्म्या इव, उपस्थितः सङ्गतः सन् रेमे। "उपस्थानं तु सङ्गतिः" इति यादवः ॥ २४ ॥

तयोरिति। चित्रवत्सु वनवासवृत्तान्तालेख्यवत्सु सद्मसु यथाप्रार्थितं यथेष्टम् इन्द्रियार्थान् इन्द्रियविषयान् शब्दादीन् आसेदुषोः प्राप्तवतोः तयोः सीतारामयोः दण्डकेषु दण्डकारण्

अथाधिकस्निग्धविलोचनेन
मुखेन सीता शरपाण्डुरेण ।
आनन्दयित्री परिणेतुरासीत्
अनक्षरव्यञ्जितदोहदेन ॥ २६ ॥

तामङ्कमारोप्य कृशाङ्गयष्टिं
वर्णान्तराक्रान्तपयोधराग्राम् ।
विलज्जमानां रहसि प्रतीतः
पप्रच्छ रामां रमणोऽभिलाषम् ॥ २७ ॥

सा दष्टनीवारबलीनि हिंस्रैः
सम्बद्धवैखानसकन्यकानि ।

तेषु प्राप्तानि दुःखानि अपि विरहविलापान्वेषणादीनि अनुचिन्त्यमानानि स्मर्य्यमाणानि सुखानि अभूवन् । स्मारकन्तु चित्रदर्शनमिति द्रष्टव्यम् ॥ २५ ॥

अथेति । अथ सीता अधिकस्निग्धविलोचनेन अत्यन्तमसृणलोचनेन शरवत् तृणविशेषवत् पाण्डुरेण अतएव अनक्षरम् अवाग्व्यापारं यथा भवति तथा व्यञ्जितं दौहृदं गर्भः येन तेन मुखेन परिणेतुः पत्युः आनन्दयित्री आसीत् ॥ २६ ॥

तामिति । प्रतीतः गर्भज्ञानवान् रमयतीति रमणः प्रियः कृशाङ्गयष्टिं वर्णान्तरेण नीलिम्ना आक्रान्तपयोधराग्रां विलज्जमानां तां रामां रहसि अङ्कम् आरोप्य अभिलाषं मनोरथं पप्रच्छ । एतच्च, “दोहदस्याप्रदानेन गर्भो दोषमवाप्नुयात्” इति शास्त्रात् न तु लौल्यादित्यनुसन्धेयम् ॥ २७ ॥

भूयेष भूयः कुशवन्ति गन्तुं
भागीरथीतीरतपोवनानि ॥ २८ ॥

तस्यै प्रतिश्रुत्य रघुप्रवीर-
स्तदीप्सितं पार्श्वचरानुयातः ।
आलोकयिष्यन् मुदितामयोध्यां
प्रासादमभ्रंलिहमारुरोह ॥ २९ ॥

ऋद्धापणं राजपथं स पश्यन्
विगाह्यमानां सरयूञ्च नौभिः ।
विलासिभिश्चाध्युषितानि पौरैः
पुरोपकण्ठोपवनानि रेमे ॥ ३० ॥

सेति । सा सीता हिंस्रैः दष्टाः नीवाराः एव बलयः येषु तानि तिर्य्यग्भिश्चुकादिदानं बलिः । सब्बद्धाः ज्ञातसम्बन्धाः ज्ञातसख्याः वैखानसानां कन्यकाः येषु तानि कुशवन्ति भागीरथीतीरतपोवनानि भूयः पुनरपि गन्तुम् एषेष अभिललाष ॥ २८ ॥

तस्यै इति । रघुप्रवीरः रामः तस्यै सीतायै तत् पूर्वोक्तम् ईप्सितं मनोरथं प्रतिश्रुत्य पार्श्वचरैः तत्कालोचितैः अनुयातः सन् मुदितां ताम् अयोध्याम् आलोकयिष्यन् अभ्रं लेढ़ीति अभ्रंलिहं अभ्रङ्कषं प्रासादम् आरुरोह । "वहाभ्रे लिहः" इति खश्प्रत्ययः, "अरुर्द्दिषदजन्तस्य मुम्" इति मुमागमः ॥ २९ ॥

ऋद्धापणमिति । सः रामः ऋद्धाः समृद्धाः आपणाः पण्यभूमयः यस्मिन् तं राजपथं नौभिः समुद्रवाहिनीभिः

स किंवदन्तीं वदतां पुरोगः
स्ववृत्तमुद्दिश्य विशुद्धवृत्तः ।
सर्पाधिराजोरुभुजोऽपसर्पं
पप्रच्छ भद्रं विजितारिभद्रः ॥ ३१ ॥

निर्बन्धपृष्टः स जगाद सर्वं
स्तुवन्ति पौराश्चरितं त्वदीयम् ।
अन्यत्र रक्षोभवनोषितायाः
परिग्रहात् मानवदेव ! देव्याः ॥ ३२ ॥

कलत्रनिन्दागुरुणा किलैवम्
अभ्याहतं कीर्त्तिविपर्य्ययेण ।

विगाह्यमानां सरयूं च पौरैः विलासिभिः अध्युषितानि पुरोपकण्ठोपवनानि च पश्यन् रेमे। विलासिन्यश्च विलासिनश्च विलासिनः । "पुमान् स्त्रिया" इत्येकशेषः ॥ ३० ॥

स इति । वदतां वाग्मिनां पुरोगः श्रेष्ठः विशुद्धवृत्तः सर्पाधिराजः शेषः तद्वत् उरू भुजौ यस्य सः विजितारिभद्रः विजितारिश्रेष्ठः सः रामः स्ववृत्तम् उद्दिश्य भद्रं भद्रनामकम् अपसर्पं चरं किंवदन्तीं जनवादं पप्रच्छ । "अपसर्पश्चरः स्पशः" इति, "किंवदन्ती जनश्रुतिः" इति च अमरः ॥ ३१ ॥

निर्बन्धेति । निर्बन्धेन आग्रहेण पृष्टः सः अपसर्पः जगाद । किमिति । हे मानवदेव ! रक्षोभवने उषितायाः देव्याः सीतायाः परिग्रहात् स्वीकारात् अन्यत्र इतरांशे तं वर्जयित्वा इत्यर्थः । त्वदीयं सर्वं चरितं पौराः स्तुवन्ति ॥ ३२ ॥

अयोघनेनाय इवाभितप्तं
वैदेहिबन्धोर्हृदयं विदद्रे ॥ ३३ ॥
किमात्मनिर्वादकथामुपेक्षे
जायामदोषामुत सन्त्यजामि।
इत्येकपक्षाश्रयविक्लवत्वात्
आसीत् स दोलाचलचित्तवृत्तिः ॥ ३४ ॥
निश्चित्य चानन्यनिवृत्ति वाच्यं
त्यागेन पत्न्याः परिमार्ष्टुमैच्छत्।
अपि स्वदेहात् किमुतेन्द्रियार्थात्
यशोधनानां हि यशो गरीयः ॥ ३५ ॥

कलत्रेति। एवं किल कलत्रनिन्दया गुरुणा दुर्वहेण कीर्त्तिविपर्य्ययेण अपकीर्त्या अभ्याहतं वैदेहिबन्धोः वैदेहि-वल्लभस्य। "ङ्यापोः संज्ञाच्छन्दसोर्बहुलम्" इति ह्रस्वः, कालिदास इतिवत्। हृदयम् अयोघनेन अभितप्तं सन्तप्तम् अयः इव, विदद्रे विदीर्णम्। कर्त्तरि लिट् ॥ ३३ ॥

किमिति। आत्मनः निर्वादः अपवादः एव कथा तां किम् उपेक्षे। उत अदोषां साध्वीं जायां सन्त्यजामि। उभयत्रापि प्रश्ने लट्। इत्येकपक्षाश्रये अन्यतरपक्षपरिग्रहे विक्लवत्वात् अपरिच्छेत्तृत्वात् सः रामः दोला इव चला चित्तवृत्तिः यस्य सः आसीत् ॥ ३४ ॥

निश्चित्येति। किं च, वाच्यम् अपवादं नास्ति अन्येन त्यागातिरिक्तोपायेन निवृत्तिः यस्य तत् अनन्यनिवृत्ति निश्चित्य पत्न्याः त्यागेन परिमार्ष्टुं परिहर्त्तुमैच्छत्। तथाहि

स सन्निपात्यावरजान् हतौजा-
स्तद्विक्रियादर्शनलुप्तहर्षान् ।
कौलीनमात्माश्रयमाचचक्षे
तेभ्यः पुनश्चेदमुवाच वाक्यम् ॥ ३६ ॥
राजर्षिवंशस्य रविप्रसूतेः
उपस्थितः पश्यत कीदृशोऽयम् ।
मत्तः सदाचारशुचेः कलङ्कः
पयोदवातादिव दर्पणस्य ॥ ३७ ॥
पौरेषु सोऽहं बहुलीभवन्तम्
अपां तरङ्गेष्विव तैलविन्दुम् ।

यशोधनानां पुंसां स्वदेहादपि यशः गरीयः गुरुतरम्, इन्द्रियार्थात् स्रक्चन्दनवनितादेः इन्द्रियविषयात् गरीयः इति किमुत वक्तव्यम्? "पञ्चमी विभक्ते" इत्युभयत्रापि पञ्चमी। सीता चेन्द्रियार्थ एव ॥ ३५ ॥

स इति। हतौजाः निस्तेजस्कः सः रामः तस्य रामस्य विक्रियादर्शनेन लुप्तहर्षान् अवरजान् सन्निपात्य संगमय्य आत्माश्रयं स्वविषयकं कौलीनं निन्दां तेभ्यः आचचक्षे, पुनः इदं वाक्यम् उवाच च ॥ ३६ ॥

राजर्षीति। रवेः प्रसूतिः जन्म यस्य तस्य राजर्षिवंशस्य सदाचारशुचेः सद्वृत्तात् शुद्धात् मत्तः मत्सकाशात्, दर्पणस्य पयोदवातात् इव अम्भःकणात् इत्यर्थः कीदृशः अयं कलङ्कः उपस्थितः प्राप्तः? पश्यत ॥ ३७ ॥

पौरेष्विति। सः अहम् अपां तरङ्गेषु तैलविन्दुम् इव,

सोढुं न तत्पूर्वमवर्णमीशे
आलानिकं स्थाणुमिव द्विपेन्द्रः ॥ ३८ ॥
तस्यापनोदाय फलप्रवृत्तौ
उपस्थितायामपि निर्व्यपेक्षः ।
त्यक्ष्यामि वैदेहसुतां पुरस्तात्
समुद्रनेमिं पितुराज्ञयेव ॥ ३९ ॥
अवैमि चैनामनघेति किन्तु
लोकापवादो बलवान् मतो मे ।
छाया हि भूमेः शशिनो मलत्वे-
नारोपिता शुद्धिमतः प्रजाभिः ॥ ४० ॥

पौरेषु बहुलीभवन्तं प्रसरन्तं सः एव पूर्वः यस्य सः तं तत्पूर्वम् अवर्णम् अपवादम्। "अवर्णाक्षेपनिर्वादपरीवादापवादवत्" इत्यमरः। द्विपेन्द्रः आलानमेव आलानिकम्। विनयादित्वात् स्वार्थे ठक्। अथवा आलानं बन्धनं प्रयोजनमस्य इति आलानिकम्। "प्रयोजनम्" इति ठक्। स्थाणुं स्तम्भम् इव, चूतवृक्ष इतिवत् सामान्यविशेषभावात्पौनरुक्त्यं द्रष्टव्यम्। सोढुं न ईशे न शक्नोमि ॥ ३८ ॥

तस्येति। तस्य अवर्णस्य अपनोदाय फलप्रवृत्तौ फलोत्पत्तौ उपस्थितायां सत्याम् अपि निर्व्यपेक्षः निस्पृहः सन् वैदेहसुताम्, पुरस्तात् पूर्वं पितुः आज्ञया समुद्रनेमिं समुद्रः नेमिरिव नेमिर्यस्याः सा भूमिः ताम् इव, त्यक्ष्यामि ॥ ३९ ॥

ननु सर्वथा साध्वी न त्याज्ये त्यत्राह, अवैमीति। एनां सीताम् अनघा साध्वी इति च अवैमि, किन्तु मे मम लोका-

रक्षोबधान्तो न च मे प्रयासः
व्यर्थः स वैरप्रतिमोचनाय ।
अमर्षणः शोणितकाङ्क्षया किं
पदा स्पृशन्तं दशति द्विजिह्वः ॥ ४१ ॥
तदेष सर्गः करुणार्द्रचित्तैः
न मे भवद्भिः प्रतिषेधनीयः ।
यद्यर्थिता निर्ह्रतवाच्यशल्यान्
प्राणान् मया धारयितुं चिरं वः ॥ ४२ ॥
इत्युक्तवन्तं जनकात्मजायां
नितान्तरूक्षाभिनिवेशमीशम् ।

पवादः बलवान् मतः। कुतः ? हि यस्मात् प्रजाभिः भूमेः छाया प्रतिबिम्बं शुद्धिमतः निर्मलस्य शशिनः मलत्वेन कलङ्कत्वेन आरोपिता, अतो लोकापवाद एव बलवान् इत्यर्थः ॥ ४० ॥

रक्ष इति। किं च, मे रक्षोवधान्तः प्रयासः व्यर्थः न, किन्तु सः वैरप्रतिमोचनाय वैरशोधनाय। तथाहि, अमर्षणः असहनः द्विजिह्वः सर्पः पदा पादेन स्पृशन्तं पुरुषं शोणित-काङ्क्षया दशति किम् ? किन्तु वैरनिर्यातनाय इत्यर्थः ॥४१॥

तदिति। तत् तस्मात् एषः मे सर्गः निश्चयः। "स्वर्गः स्वभावनिर्मोक्षनिश्चयाध्यायसृष्टिषु" इत्यमरः। करुणार्द्रचित्तैः भवद्भिः न प्रतिषेधनीयः। निर्ह्रतं वाच्यमेव शल्यं येषां तान् प्राणान् मया चिरं धारयितुं धारणं कारयितुं वः युष्माकम् अर्थिता अर्थित्वम् इच्छा यदि अस्ति इति शेषः ॥ ४२ ॥

न कश्चन भ्रातृषु तेषु शक्तो-
निषेद्धुमासीदनुमोदितुं वा ॥ ४३ ॥

स लक्ष्मणं लक्ष्मणपूर्वजन्मा
विलोक्य लोकत्रयगीतकीर्त्तिः ।
सौम्येति चाभाष्य यथार्थभाषी
स्थितं निदेशे पृथगादिदेश ॥ ४४ ॥

प्रजावती दोहदशंसिनी ते
तपोवनेषु स्पृहयालुरेव ।
स त्वं रथी तद्व्यपदेशनेयां
प्रापय्य वाल्मीकिपदं त्यजैनाम् ॥ ४५ ॥

इतीति । इत्युक्तवन्तं जनकात्मजायां विषये नितान्त-क्रूराभिनिवेशम् अतिक्रूराग्रहम् ईशं स्वामिनं तेषु भ्रातृषु मध्ये कश्चन अपि निषेद्धुं निवारयितुमनुमोदितुं प्रवर्त्तयितुं वा शक्तः न आसीत् पक्षद्वयस्यापि प्रबलत्वादित्यर्थः ॥ ४३ ॥

स इति । लोकत्रयगीतकीर्त्तिः यथार्थभाषी लक्ष्मणपूर्व-जन्मा लक्ष्मणाग्रजः सः रामः निदेशे स्थितम् आज्ञाकारिणं लक्ष्मणं विलोक्य "हे सौम्य ! सुभग" इति आभाष्य च पृथक् भरतशत्रुघ्नाभ्यां विनाकृत्य आदिदेश आज्ञापयामास ॥ ४४ ॥

प्रजावतीति । दोहदः गर्भिणीमनोरथः तत्शंसिनी ते प्रजावती भ्रातृजाया । "प्रजावती भ्रातृजाया" इत्यमरः । तपोवनेषु स्पृहयालुः एव सस्पृहा एव । "स्पृहिगृहि—" इत्यादिना आलुच्प्रत्ययः । सः त्वं रथी सन् तद्व्यपदेशेन

स शुश्रुवान् मातरि भार्गवेण
पितुर्नियोगात् प्रहृतं द्विषद्वत् ।
प्रत्यग्रहीदग्रजशासनं त-
दाज्ञा गुरूणां ह्यविचारणीया ॥ ४६ ॥

अथानुकूलश्रवणप्रतीता-
मत्रस्नुभिर्युक्तधुरं तुरङ्गैः ।
रथं सुमन्त्रप्रतिपन्नरश्मि-
मारोप्य वैदेहसुतां प्रतस्थे ॥ ४७ ॥

सा नीयमाना रुचिरान् प्रदेशान्
प्रियङ्करो मे प्रिय इत्यनन्दत् ।

दोहदमिषेण नेयां नेतव्याम् एनां सीतां वाल्मीकेः पदं स्थानं प्रापय्य गमयित्वा। "विभाषापः" इत्ययादेशः। त्यज ॥ ४५ ॥

स इति। पितुः जमदग्नेः नियोगात् शासनात् भार्गवेण जामदग्न्येन कर्त्रा। "न लोका—" इत्यादिना षष्ठीप्रतिषेधः। मातरि द्विषतीव द्विषद्वत्। "तत्र तस्येव" इति वतिप्रत्ययः। प्रहृतं प्रहारं शुश्रुवान् श्रुतवान्। "भाषायां सदवसश्रुवः" इति क्वसुप्रत्ययः। सः लक्ष्मणः तत् अग्रजशासनं प्रत्यग्रहीत्, हि यस्मात् गुरूणाम् आज्ञा अविचारणीया ॥ ४६ ॥

अथेति। अथ असौ लक्ष्मणः अनुकूलश्रवणेन प्रतीताम् इष्टाकर्णनेन तुष्टां वैदेहसुताम् अत्रस्नुभिः अभीरुभिः गर्भिणीवहनयोग्यैः। "त्रसिगृधिधृषिक्षिपेः क्नुः" इति क्नुप्रत्ययः। तुरङ्गैः युक्तधुरं सुमन्त्रेण प्रतिपन्नरश्मिं गृहीतप्रग्रहं रथम् आरोप्य प्रतस्थे ॥ ४७ ॥

नाबुद्ध कल्पद्रुमतां विहाय
जातं तमात्मन्यसिपत्रवृक्षम् ॥ ४८ ॥
जुगूह तस्याः पथि लक्ष्मणो यत्
सव्येतरेण स्फुरता तदक्ष्णा ।
आख्यातमस्यै गुरु भावि दुःख-
मत्यन्तलुप्तप्रियदर्शनेन ॥ ४९ ॥
सा दुर्निमित्तोपगताद् विषादात्
सद्यः परिम्लानमुखारविन्दा ।

सेति । सा सीता रुचिरान् प्रदेशान् नीयमाना प्राप्यमाणा सती मे मम प्रियं करोतीति प्रियङ्करः प्रियकारी इति अनन्दत् । "क्षेमप्रियमद्रेऽण् च" इति चकारात् खच्प्रत्ययः । तं प्रियम् आत्मनि विषये कल्पद्रुमतां विहाय असिपत्रवृक्षं जातं न अबुद्ध न अज्ञासीत् । बुध्यतेर्लुङ् । असिपत्रः खड्गाकारदलः कोऽप्यपूर्वो वृक्षविशेषः । "असिपत्रो भवेत् कोषाकारे च नरकान्तरे" इति विश्वः । आसन्नघातुक इति भावः ॥ ४८ ॥

जुगूहेति । पथि लक्ष्मणः यत् दुःखं तस्याः सीतायाः जुगूह प्रतिसंहृतवान् तत् गुरु भावि भविष्यत् दुःखम् अत्यन्तलुप्तं प्रियदर्शनं यस्य तेन स्फुरता सव्येतरेण दक्षिणेन अक्ष्णा अस्यै सीतायै आख्यातम् । स्त्रीणां दक्षिणाक्षिस्फुरणं दुर्निमित्तमाहुः ॥ ४९ ॥

सेति । सा सीता दुर्निमित्तेन दक्षिणाक्षिस्फुरणरूपेण उपगतात् प्राप्तात् विषादात् दुःखात् सद्यः परिम्लानमुखारविन्दा सती सावरजस्य सानुजस्य राज्ञः रामस्य शिवं भूयात्

राज्ञः शिवं सावरजस्य भूया-
दित्याशशंसे करणैरबाह्यैः ॥ ५० ॥

गुरोर्नियोगाद् वनितां वनान्ते
साध्वीं सुमित्रातनयो विहास्यन् ।
अवार्य्यतेवोत्थितवीचिहस्तै-
र्जह्नोर्दुहित्रा स्थितया पुरस्तात् ॥ ५१ ॥

रथात् स यन्त्रा निगृहीतवाहा-
त्तां भ्रातृजायां पुलिनेऽवतार्य्य ।
गङ्गां निषादाहृतनौविशेष-
स्ततार सन्धामिव सत्यसन्धः ॥ ५२ ॥

इति अबाह्यैः करणैः अन्तःकरणैः आशशंसे। शंसतेरपेक्षाया-
मात्मनेपदमिष्यते। करणैः इति बहुवचनं क्रियावृत्त्यभिप्रायं,
पुनः पुनराशशंसे इत्यर्थः ॥ ५० ॥

गुरोरिति। गुरोः ज्येष्ठस्य नियोगात् साध्वीं वनिताम्
अत्याज्याम् इत्यर्थः वनान्ते विहास्यन् त्यक्ष्यन् सुमित्रातनयः
लक्ष्मणः पुरस्तात् अग्रे स्थितया जह्नोः दुहित्रा जाह्नव्या
उत्थितैः वीचिहस्तैः अवार्य्यत इव। अकार्य्यं मा कुर्वित्य-
वार्य्यत इव इत्युत्प्रेक्षा ॥ ५१ ॥

रथादिति। सत्यसन्धः सत्यप्रतिज्ञः सः लक्ष्मणः यन्त्रा
सारथिना निगृहीतवाहात् बद्धाश्वात् रथात् भ्रातृजायां
पुलिने अवतार्य्य आरोप्य निषादेन किरातेन आहृतनौविशेषः
आनीतदृढनौकः सन् गङ्गां भागीरथीं, सन्धां प्रतिज्ञाम् इव,
ततार। "सन्धा प्रतिज्ञा मर्य्यादा" इत्यमरः ॥ ५२ ॥

अथ व्यवस्थापितवाक् कथञ्चित्
सौमित्रिरन्तर्गतवाष्पकण्ठः।
औत्पातिकं मेघ इवाश्मवर्षं
महीपतेः शासनमुज्जगार ॥ ५३ ॥

ततोऽभिषङ्गानिलविप्रविद्धा
प्रभ्रश्यमानाभरणप्रसूना।
स्वमूर्त्तिलाभप्रकृतिं धरित्रीं
लतेव सीता सहसा जगाम ॥ ५४ ॥

इक्ष्वाकुवंशप्रभवः कथं त्वां
त्यजेदकस्मात् पतिरार्य्यवृत्तः।

अथेति। अथ कथञ्चित् व्यवस्थापिता प्रकृतिमापादिता वाक् येन सः अन्तर्गतवाष्पः कण्ठः यस्य सः कण्ठस्थिताश्रुः इत्यर्थः सौमित्रिः महीपतेः शासनं मेघः उत्पाते भवम् औत्पातिकम् अश्मवर्षं शिलावर्षम् इव, उज्जगार उद्गीर्णवान्। दारुणत्वेनावाच्यत्वादुज्जगारेत्युक्तम् ॥ ५३ ॥

तत इति। ततः, अभिषङ्गः पराभवः। "शापे तु अभिषङ्गः पराभवः" इत्यमरः। सः एव अनिलः तेन विप्रविद्धा अभिहता प्रभ्रश्यमानानि पतन्ति आभरणानि एव प्रसूनानि यस्याः सा सीता लता इव, सहसा स्वमूर्त्तिलाभस्य स्वशरीरलाभस्य स्वोत्पत्तेः प्रकृतिं कारणं धरित्रीं जगाम। भूमौ पपात इत्यर्थः। स्त्रीणामापदि मातैव शरणम् इति भावः ॥ ५४ ॥

इक्ष्वाकिति। इक्ष्वाकुवंशप्रभवः महाकुलप्रसूतिः इत्यर्थः आर्य्यवृत्तः साधुचरितः पतिः भर्त्ता त्वाम् अकस्मादकारणात्

इति क्षितिः संशयितेव तस्यै
दद्दौ प्रवेशं जननी न तावत् ॥ ५५ ॥
सा लुप्तसंज्ञा न विवेद दुःखं
प्रत्यागतासुः समतप्यतान्तः ।
तस्याः सुमित्रात्मजयत्नलब्धो-
मोहादभूत् कष्टतरः प्रबोधः ॥ ५६ ॥
न चावदद्भर्त्तुरवर्णमार्य्या
निराकरिष्णोर्वृजिनादृतेऽपि ।
आत्मानमेव स्थिरदुःखभाजं
पुनः पुनर्दुष्कृतिनं निनिन्द ॥ ५७ ॥

कथं त्यजेत्। असम्भावितमित्यर्थः, इति संशयिता इव सन्दिहाना इव तावत् त्यागहेतुज्ञानावधेः प्राक् इत्यर्थः जननी क्षितिः तस्यै सीतायै प्रवेशम् आत्मनीति शेषः न दद्दौ ॥ ५५ ॥

सेति। लुप्तसंज्ञा नष्टचेतना मूर्च्छिता सा दुःखं न विवेद, प्रत्यागतासुः लब्धसंज्ञा सती अन्तः समतप्यत दुःखेनादह्यत इत्यर्थः। तपेः कर्मणि लङ्। कर्मकर्त्तरीति केचित् तन्न "तपस्तपः कर्मकस्यैव" इति यङ्नियमात्। तस्याः सीतायाः सुमित्रात्मजयत्नलब्धः प्रबोधः मोहात् कष्टतरः अतिदुःखदः अभूत्, दुःखवेदनासम्भवात् इति भावः ॥ ५६ ॥

न चेति। आर्य्या साध्वी सा सीता वृजिनादृते एनसा विनापि। "कलुषं वृजिनैनोऽघम्" इत्यमरः। "अन्यारादि-तरर्त्ते—" इत्यादिना पञ्चमी। निराकरिष्णोः निरासकस्य। "अलं कृञ्—" इत्यादिना इष्णुच्प्रत्ययः। भर्त्तुः अवर्णम्

आश्वास्य रामावरजः सतीं ता-
माख्यातवाल्मीकिनिकेतमार्गः।
निघ्नस्य मे भर्तृनिदेशरौक्ष्यं
देवि! क्षमस्वेति बभूव नम्रः॥ ५८॥
सीता तमुत्थाप्य जगाद वाक्यं
प्रीतास्मि ते सौम्य! चिराय जीव।
बिड़ौजसा विष्णुरिवाग्रजेन
भ्रात्रा यदित्थं परवानसि त्वम्॥ ५९॥
श्वश्रूजनं सर्वमनुक्रमेण
विज्ञापय प्रापितमत्प्रणामः।

अपवादं न च अवदत् नैव अवादीत्, किन्तु स्वैरदुःखभाजम् अतएव दुष्कृतिनम् आत्मानं पुनः पुनः निनिन्द॥ ५७॥

आश्वास्येति। रामावरजः लक्ष्मणः सतीं साध्वीं ताम् आश्वास्य आख्यातः उपदिष्टः वाल्मीकेः निकेतस्य आश्रमस्य मार्गः येन सः तथोक्तः सन् निघ्नस्य पराधीनस्य। "अधीनो निघ्न आयत्तः" इत्यमरः। मे भर्तृनिर्देशेन स्वाम्यनुज्ञया हेतुना यत् रौक्ष्यं पारुष्यं तत् हे देवि! क्षमस्व इति नम्रः प्रणतः बभूव॥ ५८॥

सीतेति। सीता तं लक्ष्मणम् उत्थाप्य वाक्यं जगाद। किमिति। हे सौम्य साधो! ते प्रीता अस्मि, चिराय चिरं जीव, यत् यस्मात्, विड़ौजसा इन्द्रेण विष्णुः उपेन्द्र इव, अग्रजेन ज्येष्ठेन भ्रात्रा त्वम् इत्थं परवान् परतन्त्रः असि॥५९॥

श्वश्रूजनमिति। सर्वं श्वश्रूजनम् अनुक्रमेण प्रापितमत्प्र-

प्रजानिषेकं मयि वर्त्तमानं
सूनोरनुध्यायत चेतसेति ॥ ६० ॥
वाच्यस्त्वया मद्वचनात् स राजा
वह्नौ विशुद्धामपि यत् समक्षम् ।
मां लोकवादश्रवणादहासीः
श्रुतस्य किं तत् सदृशं कुलस्य ? ॥ ६१ ॥
कल्याणबुद्धेरथवा तवायं
न कामचारो मयि शङ्कनीयः ।

मः सन् मत्प्रणाममुक्त्वा इत्यर्थः विज्ञाप्य। किमिति?
िषिच्यते इति निषेकः, मयि वर्त्तमानं सूनोः त्वत्पुत्रस्य
ानिषेकं गर्भं चेतसा अनुध्यायत शिवमस्त्विति चिन्तयत
ते ॥ ६० ॥

वाच्य इति। सः राजा त्वया मद्वचनात् मद्वचनमिति
त्वा। ल्यब्लोपे पञ्चमी। वाच्यः वक्तव्यः। किमित्यत
ाह, "वह्नौ" इत्यादिभिः सप्तभिः श्लोकैः। अक्ष्णोः समीपे
मक्षम्। विभक्त्यर्थेऽव्ययीभावः सामीप्यार्थे वा, "अव्ययी-
वे शरत्प्रभृतिभ्यः" इति समासान्तः टच्प्रत्ययः। समक्ष-
ो वह्नौ विशुद्धामपि मां लोकवादस्य मिथ्यापवादस्य
वणाद्धेतोः अहासीः अत्याक्षीः इति यत् तत् श्रुतस्य
ख्यातस्य कुलस्य सदृशं किम्? किन्त्वसदृशमित्यर्थः। यद्वा
तस्य ख्यातस्य कुलस्य चेति योजना। कामचार्य्यसि इति
वः ॥ ६१ ॥

कल्याणेति। अथवा कल्याणबुद्धेः सुधियः तव कर्त्तुः मयि
िष्ये अयं कामः न कामचारः इच्छया करणं न शङ्कनीयः,

ममैव जन्मान्तरपातकानां
विपाकविस्फूर्जथुरप्रसह्यः ॥ ६२ ॥
उपस्थितां पूर्वमपास्य लक्ष्मीं
वनं मया सार्द्धमसि प्रपन्नः।
तदास्पदं प्राप्य तयातिरोषात्
सोढ़ास्मि न त्वद्भवने वसन्ती ॥ ६३ ॥
निशाचरोपप्लुतभर्तृकाणां
तपस्विनीनां भवतः प्रसादात्।
भूत्वा शरण्या शरणार्थमन्यं
कथं प्रपत्स्ये त्वयि दीप्यमाने ॥ ६४ ॥

कामचारश्चापि न क्रियते इत्यर्थः। किन्तु ममैव जन्मान्तर-
पातकानामप्रसह्यः विपच्यते इति विपाकः फलितः एव वि-
स्फूर्जथुः अशनिनिर्घोषः। "स्फूर्जथुर्वज्रनिर्घोषः" इत्यमरः॥६२॥

उपस्थितामिति। पूर्वमुपस्थितां प्राप्तां लक्ष्मीमपास्य मया
सार्द्धं वनं प्रपन्नः असि प्राप्तः असि। तत् तस्मात् तया लक्ष्म्या
अतिरोषात् त्वद्भवनं आस्पदं प्रतिष्ठाम्। "आस्पदं प्रति-
ष्ठायाम्" इति निपातः। प्राप्य वसन्ती अहं सोढ़ा न
अस्मि ॥ ६३ ॥

निशाचरेति। निशाचरैः उपप्लुताः पीड़िताः भर्तारः
यासां ताः निशाचरोपप्लुतभर्तृकाः। "नद्यृतश्च" इति कप्
प्रत्ययः। तासां तपस्विनीनां भवतः प्रसादात् अनुग्रहात्
शरण्या शरणसमर्था भूत्वा अद्य त्वयि दीप्यमाने प्रकाशमाने
सत्येव शरणार्थम् अन्यं तपस्विनं कथं प्रपत्स्ये प्राप्स्यामि॥६४॥

किंवा तवात्यन्तवियोगमोघे
कुर्य्यामुपेक्षां हतजीवितेऽस्मिन् ।
स्याद्रक्षणीयं यदि मे न तेज-
स्त्वदीयमन्तर्गतमन्तरायः ॥ ६५ ॥

साहं तपः सूर्य्यनिविष्टदृष्टि-
रूर्ध्वं प्रसूतेश्चरितुं यतिष्ये ।
भूयो यथा मे जननान्तरेऽपि
त्वमेव भर्त्ता न च विप्रयोगः ॥ ६६ ॥

नृपस्य वर्णाश्रमपालनं यत्
स एव धर्मो मनुना प्रणीतः ।
निर्वासिताप्येवमतस्त्वयाहं
तपस्विसामान्यमवेक्षणीया ॥ ६७ ॥

किंवा इति । किंवा अथवा तव सम्बन्धिना अत्यन्तेन :प्राप्तिरहितेन वियोगेन मोघे निष्फले अस्मिन् हतजी-ते तुच्छजीविते उपेक्षां कुर्य्यां कुर्य्यामेव, रक्षणीयं रक्षणा-[ अन्तर्गतं कुक्षिस्थं त्वदीयं तेजः शुक्रं गर्भरूपम् । "शुक्रं ारेतसी च बीजवीर्य्येन्द्रियाणि च" इत्यमरः । मे मम तरायः विघ्नः न स्यात् यदि ॥ ६५ ॥

सेति । साहं प्रसूतेः ऊर्ध्वं सूर्य्यनिविष्टदृष्टिः सती तथा-धं तपः चरितुं यतिष्ये, यथाहं भूयः तेन तपसा मे मम ननान्तरे अपि त्वमेव भर्त्ता स्याः विप्रयोगश्च न स्यात् ॥६६॥

नृपस्येति । वर्णानां ब्राह्मणादीनामाश्रमाणां ब्रह्मचर्य्या-नां च पालनं यत् सः एव नृपस्य धर्मः मनुना प्रणीतः उक्तः ।

तथेति तस्याः प्रतिगृह्य वाचं
रामानुजे दृष्टिपथं व्यतीते।
सा मुक्तकण्ठं व्यसनातिभारात्
चक्रन्द विग्ना कुररीव भूयः॥ ६८॥
नृत्यं मयूराः कुसुमानि वृक्षाः
दर्भानुपात्तान् विजहुर्हरिण्यः।
तस्याः प्रपन्ने समदुःखभाव-
मत्यन्तमासीद्रुदितं वनेऽपि॥ ६९॥
तामभ्यगच्छद्रुदितानुसारी
कविः कुशेध्माहरणाय यातः।

अतः कारणात् एवं त्वया निर्वासिता निष्कासितापि अहं त
पस्विभिः सामान्यं साधारणं यथा भवति तथा अवेक्षणीया
कलत्रदृष्ट्यभावेऽपि वर्णाश्रमदृष्टिः सीतायां कर्त्तव्येत्यर्थः॥६७

तथेति। तथेति तस्याः सीतायाः वाचं प्रतिगृह्य अङ्गी
कृत्य रामानुजे लक्ष्मणे दृष्टिपथं व्यतीते अतिक्रान्ते सति सा
सीता व्यसनातिभारात् दुःखातिरेकात् मुक्तकण्ठं यथा
स्यात् तथा वागुदस्या इत्यर्थः, विग्ना भीता कुररी इव
उत्क्रोशी इव। "उत्क्रोशकुररौ समौ" इत्यमरः। भूयो
भूयिष्ठं चक्रन्द चुक्रोश॥ ६८॥

नृत्यमिति। मयूराः नृत्यं विजहुः त्यक्तवन्तः, वृक्षाः कुसु-
मानि, हरिण्यः उपात्तान् दर्भान्, इत्थं तस्याः सीतायाः
समदुःखभावं प्रपन्ने तुल्यदुःखत्वं प्राप्ते वने अपि अत्यन्तं
रुदितम् आसीत्, यथा रामगेहेऽपि इत्यपिशब्दार्थः॥ ६९॥

निषादविद्धाण्डजदर्शनोत्थः
श्लोकत्वमापद्यत यस्य शोकः ॥ ७० ॥
तमश्रु नेत्रावरणं प्रमृज्य
सीता विलापाद्विरता ववन्दे ।
तस्यै मुनिर्दोहदलिङ्गदर्शी
दाश्वान् सुपुत्राशिषमित्युवाच ॥ ७१ ॥
जाने विसृष्टां प्रणिधानतस्त्वां
मिथ्यापवादक्षुभितेन भर्त्रा

तामिति । कुशेध्माहरणाय यातः कविः वाल्मीकिः रुदिता-
सारी सन् तां सीतामभ्यगच्छत् अभिगमनं चक्रे । दयालु-
येत्याह, निषादेति । निषादेन व्याधेन विद्धस्य अण्डजस्य
ौञ्चस्य दर्शनेन उत्थः उत्पन्नः यस्य शोकः श्लोकत्वम् आप-
त श्लोकरूपेणावोचत् इत्यर्थः । स च श्लोकः पठ्यते । "मा
नषाद ! प्रतिष्ठां त्वमगमः शाश्वतीः समाः । यत् क्रौञ्च-
मथुनादेकमवधीः काममोहितम् ॥" इति । तिरश्चामपि
:खं न सेहे किमुतान्येषाम् ? इति भावः ॥ ७० ॥

तमिति । सीता विलापात् विरता सती नेत्रावरणं दृष्टि-
तिबन्धकम् अश्रु प्रमृज्य तं मुनिं ववन्दे । दोहदलिङ्गदर्शी
र्भचिह्नदर्शी मुनिः तस्यै सीतायै सुपुत्राशिषं तत्प्राप्तिहेतु-
तां दाश्वान् दत्तवान् इति वक्ष्यमाणप्रकारेण उवाच ।
दाश्वान् साह्वान् मीढ्वांश्च" इति क्वस्वन्तो निपातः ॥ ७१ ॥

जाने इति । त्वां मिथ्यापवादेन क्षुभितेन भर्त्रा विसृष्टां
यक्तां प्रणिधानतः समाधिदृष्ट्या जाने । हे वैदेहि ! विषया-
न्तरस्थं देशान्तरस्थं पितुः जनकस्यैव निकेतं गृहं प्राप्ता

तन्मा व्यथिष्ठा विषयान्तरस्थं
प्राप्तासि वैदेहि ! पितुर्निकेतम् ॥ ७२ ॥

उत्खातलोकत्रयकण्टकेऽपि
सत्यप्रतिज्ञेऽप्यविकत्थनेऽपि ।
त्वां प्रत्यकस्मात् कलुषप्रवृत्ता-
वस्त्येव मन्युर्भरताग्रजे मे ॥ ७३ ॥

तवोरुकीर्त्तिः श्वशुरः सखा मे
सतां भवोच्छेदकरः पिता ते ।
धुरि स्थिता त्वं पतिदेवतानां
किन्तन्न येनासि ममानुकम्प्या ॥ ७४ ॥

असि । तत् तस्मात् मा व्यथिष्ठाः मा शोचीः । व्यथेर्लुङ् । "न माङ्योगे" इत्यडागमप्रतिषेधः । भर्त्रोपेक्षितानां पितृगृह-वास एव उचित इति भावः ॥ ७२ ॥

उत्खातेति । उत्खातलोकत्रयकण्टके अपि रावणादि-कण्टकोद्धरणेन सर्वलोकोपकारिण्यपि इत्यर्थः । सत्यप्रतिज्ञे सत्यसन्धेऽपि अविकत्थने अनात्मश्लाघिन्यपि इत्थं श्लाघ्येऽपि त्वां प्रति अकस्मात् अकारणात् कलुषप्रवृत्तौ गर्हितव्यापारे भरताग्रजे मे मन्युः कोपः अस्त्येव । सर्वगुणाच्छादकोऽयं दोष इत्यर्थः । सीतानुनयार्थोऽयं रामोपालम्भः ॥ ७३ ॥

तवेति । उरुकीर्त्तिः तव श्वशुरः दशरथः मे सखा, ते पिता जनकः सतां विदुषां भवोच्छेदकरः ज्ञानोपदेशा-दिना संसारदुःखध्वंसकारी, त्वं पतिदेवतानां पतिव्रतानां

तपस्विसंसर्गविनीतसत्वे
तपोवने वीतभया वसास्मिन् ।
इतो भविष्यत्यनघप्रसूते-
रपत्यसंस्कारमयो विधिस्ते ॥ ७५ ॥
अशून्यतीरां मुनिसन्निवेशै-
स्तमोऽपहन्त्रीं तमसां वगाह्य ।
तत्सैकतोत्सङ्गबलिक्रियाभिः
सम्पत्स्यते ते मनसः प्रसादः ॥ ७६ ॥
पुष्पं फलं चार्त्तवमाहरन्त्यः
वीजञ्च बालेयमकृष्टरोहि ।

धुरि अग्रे स्थिता, येन निमित्तेन मम अनुकम्पया अनुग्राह्या न असि तत् किम्? न किञ्चित् इत्यर्थः ॥ ७४ ॥

तपस्वीति । तपस्विसंसर्गेण विनीतसत्वे शान्तजन्तुके अस्मिन् तपोवने वीतभया निर्भीका वस । इतः अस्मिन् वने अनघप्रसूतेः सुखप्रसूतेः ते अपत्यसंस्कारमयः जातकर्मादि-रूपो विधिः अनुष्ठानं भविष्यति ॥ ७५ ॥

अशून्येति । सन्निविश्यन्ते येष्विति सन्निवेशाः उटजाः । अधिकरणार्थे घञ्प्रत्ययः । मुनीनां सन्निवेशैः उटजैः अशून्यतीरां पूर्णतीरां तमसः शोकस्य पापस्य वा अपहन्त्रीम् । "तमस्तु क्लीवे पापे नरकशोकयोः" इत्यमरः । तमसां नदीं वगाह्य तत्र स्नात्वा । बलिक्रियापेक्षया पूर्वकालता । तस्याः सैकतोत्सङ्गेषु बलिक्रियाभिः इष्टदेवतापूजाविधिभिः ते मनसः प्रसादः सम्पत्स्यते भविष्यति ॥ ७६ ॥

विनोदयिष्यन्ति नवाभिषङ्गा-
मुदारवाचो मुनिकन्यकास्त्वाम्॥ ७७॥
पयोघटैराश्रमबालवृक्षान्
संवर्द्धयन्ती स्वबलानुरूपैः।
असंशयं प्राक् तनयोपपत्तेः
स्तनन्धयप्रीतिमवाप्स्यसि त्वम्॥ ७८॥
अनुग्रहप्रत्यभिनन्दिनीं तां
वाल्मीकिरादाय दयार्द्रचेताः।
सायं मृगाध्यासितवेदिपार्श्वं
स्वमाश्रमं शान्तमृगं निनाय॥ ७९॥

पुष्पमिति। ऋतुरस्य प्राप्तः आर्त्तवं स्वकालप्राप्तं पुष्पं फलं च। अकृष्टरोहि अकृष्टदेशोत्थम् अकृष्टपच्यम् इत्यर्थः। बलये हितं बालेयं पूजायोग्यम्। "छदिरुपधिबलेर्ढञ्" इति ढञ्प्रत्ययः। बीजं नीवारादिधान्यं च आहरन्त्यः उदारवाचः प्रगल्भगिरः मुनिकन्यकाः नवाभिषङ्गां नूतनदुःखां त्वां विनोदयिष्यन्ति॥ ७७॥

पय इति। स्वबलानुरूपैः स्वशक्त्यनुसारिभिः पयसाम् अम्भसां घटैः। स्तन्यैः इति च ध्वन्यते। आश्रमबालवृक्षान् संवर्द्धयन्ती त्वं तनयोपपत्तेः प्राक्पूर्वम् असंशयं यथा तथा स्तनं धयति पिबतीति स्तनन्धयः शिशुः। "नासिकास्तनयोर्ध्माधेटोः" इति खश्प्रत्ययः, "अरुर्द्विषत्—" इति मुमागमः। तस्मिन् या प्रीतिः ताम् अवाप्स्यसि। ततः परं सुलभ एव विनोद इति भावः॥ ७८॥

अनुग्रहेति। दयार्द्रचेताः वाल्मीकिः अनुग्रहं प्रत्यभिनन्द-

तामर्पयामास च शोकदीनां
तदागमप्रीतिषु तापसीषु ।
निर्विष्टसारां पितृभिर्हिमांशो-
रन्त्यां कलां दर्श इवौषधीषु ॥ ८० ॥
ता इङ्गुदीस्नेहकृतप्रदीप-
मास्तीर्णमेध्याजिनतल्पमस्मै ।
तस्यै सपर्य्यानुपदं दिनान्ते
निवासहेतोरुटजं वितेरुः ॥ ८१ ॥

तीति तथोक्तां तां सीतामादाय सायं मृगैः अध्यासितवेदि-पार्श्वमधिष्ठितवेदिप्रान्तं शान्तमृगं स्वमाश्रमं निनाय ॥ ७९ ॥

तामिति । शोकदीनां तां सीतां तस्याः सीतायाः आगमेन प्रीतिः यासां तासु तापसीषु, पितृभिरग्निष्वात्तादिभिः निर्विष्टसारां भुक्तसारां हिमांशोः अन्त्याम् अवशिष्टां कलां दर्शः अमावास्याकालः ओषधीषु इव, अर्पयामास । अत्र पराशरः,—"पिबन्ति विमलं सोमं विशिष्टा तस्य या कला । सुधामृतमयीं पुण्यां तामिन्दोः पितरो मुने" इति । व्यासश्च— "अमायां तु सदा सोमः ओषधीः प्रतिपद्यते" इति ॥ ८० ॥

ता इति । ताः तापस्यः तस्यै सीतायै सपर्य्यानुपदं पूजानन्तरं दिनान्ते सायंकाले निवासः एव हेतुः तस्य निवासहेतोः निवासार्थम् इत्यर्थः । "षष्ठी हेतुप्रयोगे" इति षष्ठी । "इङ्गुदी तापसतरुः" इत्यमरः । इङ्गुदीस्नेहेन कृतप्रदीपमन्तरास्तीर्णं मेध्यं शुद्धम् अजिनमेव तल्पं शय्या यस्मिन् तम् उटजं पर्णशालां वितेरुः ददुः ॥ ८१ ॥

तत्राभिषेकप्रयता वसन्ती
प्रयुक्तपूजा विधिनातिथिभ्यः।
वन्येन सा वल्कलिनी शरीरं
पत्युः प्रजासन्ततये बभार॥ ८२॥

अपि प्रभुः सानुशयोऽधुना स्यात्
किमुत्सुकः शक्रजितोऽपि हन्ता।
शशंस सीता परिदेवनान्त-
मनुष्ठितं शासनमग्रजाय॥ ८३॥

बभूव रामः सहसा सबाष्पः
तुषारवर्षीव सहस्यचन्द्रः।
कौलीनभीतेन गृहान्निरस्ता
न तेन वैदेहसुता मनस्तः॥ ८४॥

तत्रेति। तत्र आश्रमे अभिषेकेण स्नानेन प्रयता नियता वसन्ती विधिना शास्त्रेण अतिथिभ्यः प्रयुक्तपूजा कृतसत्कारा वल्कलिनी सा सीता पत्युः प्रजासन्ततये सन्तानाविच्छेदाय हेतोः वन्येन कन्दमूलादिना शरीरं बभार पुपोष॥ ८२॥

अपीति। प्रभुः राजा अधुना अपि सानुशयः सानुतापः स्यात् किम्? इति काकुः। उत्सुकः शक्रजितः इन्द्रजितः हन्ता लक्ष्मणः अपि सीतापरिदेवनान्तं सीताविलापान्तम् अनुष्ठितं शासनम् अग्रजाय शशंस॥ ८३॥

बभूवेति। सहसा सपदि सबाष्पः रामः, तुषारवर्षी सहस्यचन्द्रः इव, बभूव अत्यश्रुतया तुषारवर्षिणा पौषचन्द्रेण तुल्योऽभूत्। "पौषे तैषसहस्यौ द्वौ" इत्यमरः। युक्तं चैत-

निगृह्य शोकं स्वयमेव धीमान्
वर्णाश्रमावेक्षणजागरूकः ।
स भ्रातृसाधारणभोगमृद्धं
राज्यं रजोरिक्तमनाः शशास ॥ ८५ ॥
तामेकभार्य्यां परिवादभीरोः
साध्वीमपि त्यक्तवतो नृपस्य ।
वक्षस्यसङ्घट्टसुखं वसन्ती
रेजे सपत्नीरहितेव लक्ष्मीः ॥ ८६ ॥
सीतां हित्वा दशमुखरिपुर्नोपयेमे यदन्यां
तस्या एव प्रतिकृतिसखो यत् क्रतूनाजहार ।

दित्याह, कौलीनात् लोकापवादात् भीतेन तेन रामेण वैदेह-सुता सीता गृहात् निरस्ता न मनस्तः मनसः चित्तात् न निरस्ता । पञ्चम्यास्तसिल् ॥ ८४ ॥

निगृह्येति । धीमान् वर्णानाम् आश्रमाणां च अवेक्षणे अनुसन्धाने जागरूकः अप्रमत्तः । "जागरूकः" इति ऊक-प्रत्ययः । रजोरिक्तमनाः रजोगुणशून्यचेताः सः रामः स्वयमेव शोकं निगृह्य निरुध्य भ्रातृभिः साधारणभोगं शरीरस्थिति-मात्रोपयुक्तम् इत्यर्थः ऋद्धं राज्यं शशास ॥ ८५ ॥

तामिति । परिवादभीरोः निन्दाभीरोः अतएव एक-भार्य्याम् अपि साध्वीमपि तां सीतां त्यक्तवतः नृपस्य वक्षसि असङ्घट्टसुखं असम्भाव्यसुखं वसन्ती लक्ष्मीः सपत्नीरहिता इव रेजे दिदीपे । तस्य स्त्र्यन्तरपरिग्रहो नाभूत् इति भावः ॥८६॥

सीतामिति । दशमुखरिपुः रामः सीतां हित्वा त्यक्त्वा

वृत्तान्तेन श्रवणविषयप्रापिणा तेन भर्तुः
सा दुर्वारं कथमपि परित्यागदुःखं विषेहे ॥८७

इति श्रीरघुवंशे महाकाव्ये कालिदासकृतौ
सीतापरित्यागो नाम चतुर्दशः सर्गः।

---

## पञ्चदशः सर्गः।

कृतसीतापरित्यागः स रत्नाकरमेखलाम्।
बुभुजे पृथिवीपालः पृथिवीमेव केवलाम् ॥ १ ॥

अन्यां स्त्रियं न उपयेमे न परिणीतवान् इति यत्। "उपायमः स्वीकरणे" इत्यात्मनेपदम्। किं च, तस्याः सीताया एव प्रतिकृतेः प्रतिमायाः हिरण्मय्याः सखा प्रतिकृतिसखः स क्रतून् आजहार आहृतवान् इति यत् तेन श्रवणविषयप्रापिणा श्रोत्रदेशगामिना भर्तुः वृत्तान्तेन वार्त्तया हेतुना सा सीता दुर्वारं दुर्निरोधं परित्यागेन यत् दुःखं तत् कथमपि विषेहे विसोढवती ॥ ८७ ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां रघुवंशटीकायां सञ्जीवनीसमाख्यायां चतुर्दशः सर्गः।

---

चरणत्रं गृहस्थानां मधुरौ यद्रजःकणाः।
स्वयमीवाहिकं मेद्ं तस्मै रामाय ते नमः ॥

कृतेति। कृतसीतापरित्यागः सः पृथिवीपालः रामः रत्नाकरः एव मेखला यस्याः तां सार्वभौमित्यर्थः केवलामेकाम् इत्यर्थः पृथिवीमेव बुभुजे भुक्तवान्, न तु पार्थिवीमित्यर्थः।

लवणेन विलुप्तेज्याः तामिस्रेण तमभ्ययुः ।
मुनयो यमुनाभाजः शरण्यं शरणार्थिनः ॥ २ ॥
अवेक्ष्य रामं ते तस्मिन् न प्रजह्रुः स्वतेजसा ।
त्राणाभावे हि शापास्त्राः कुर्वन्ति तपसो व्ययम् ॥ ३ ॥
प्रतिशुश्राव काकुत्स्थः तेभ्यो विघ्नप्रतिक्रियाम् ।
धर्मसंरक्षणार्थैव प्रवृत्तिर्भुवि शार्ङ्गिणः ॥ ४ ॥
ते रामाय वधोपायम् आचख्युर्विबुधद्विषः ।

सापि रत्नखचितमेखला । पृथिव्याः कान्तासमाधिः व्यज्यते । रामस्य स्त्र्यन्तरपरिग्रहो नास्तीति श्लोकाभिप्रायः ॥ १ ॥

लवणेनेति । लवणेन लवणाख्येन तामिस्रेण तमिस्राचारिणा रक्षसा इत्यर्थः, विलुप्तेज्याः लुप्तयागक्रियाः अतएव शरणार्थिनः रक्षणार्थिनः यमुनाभाजः यमुनातीरवासिनः मुनयः शरण्यं शरणार्हं रक्षणसमर्थं तं रामं रक्षितारम् अभ्ययुः प्राप्ताः । यातेर्लङ् ॥ २ ॥

अवेक्ष्येति । ते मुनयः राममवेक्ष्य रक्षितारमिति शेषः, तस्मिन् लवणे स्वतेजसा शापरूपेण न प्रजह्रुः । तथाहि, त्रायते इति त्राणं रक्षकम् । कर्त्तरि ल्युट् । तदभावे शापः एव अस्त्रं येषां ते शापास्त्राः सन्तः तपसः व्ययं कुर्वन्ति । शापदानात् तपसो व्यय इति प्रसिद्धेः ॥ ३ ॥

प्रतीति । काकुत्स्थः रामः तेभ्यः मुनिभ्यः विघ्नप्रतिक्रियां लवणवधरूपां प्रतिशुश्राव प्रतियज्ञे । तथाहि, भुवि शार्ङ्गिणः विष्णोः प्रवृत्तिः रामरूपेण अवतरणं धर्मसंरक्षणमेव अर्थः प्रयोजनं यस्याः सा तथैव ॥ ४ ॥

ते इति । ते मुनयः रामाय विबुधद्विषः सुरारेः लवणस्य

दुर्जयो लवणः शूली विशूलः प्रार्थ्यतामिति ।
आदिदेशाथ शत्रुघ्नं तेषां क्षेमाय राघवः ।
करिष्यन्निव नामास्य यथार्थमरिनिग्रहात् ॥ ६ ॥
यः कश्चन रघूणां हि परमेकः परन्तपः ।
अपवाद इवोत्सर्गं व्यावर्त्तयितुमीश्वरः ॥ ७ ॥
अग्रजेन प्रयुक्ताशीस्ततो दाशरथी रथी ।

वधोपायमाचख्युः । लुनातीति लवणः । नन्द्यादित्वात् ल्युः । तत्रैव निपातनाण्णत्वम् । लवणः शूली शूलवान् दुर्जयः अजय्यः, किन्तु विशूलः शूलरहितः प्रार्थ्यतामभिगम्यताम् । "याच्ञा-यामभियाने च प्रार्थना कथ्यते बुधैः" इति केशवः ॥ ५ ॥

आदिदेशेति । अथ तेषां मुनीनां क्षेमाय क्षेमकरणाय राघवः रामः शत्रुघ्नमादिदेश । अत्रोत्प्रेक्षते, अस्य शत्रुघ्नस्य नाम अरिनिग्रहात् शत्रुहननाद्धेतोः यथाभूतः अर्थः यस्य तत् यथार्थं करिष्यन्निव । शत्रून् हन्तीति शत्रुघ्नः । "अमनुष्य-कर्तृके च" इति चकारात्कृतघ्नशत्रुघ्नादयः सिद्धाः इति दुर्ग-सिंहः "पाणिनीयेऽपि बहुलग्रहणाद्यथेष्टसिद्धिः "कृत्यल्युटो बहुलम्" इति ॥ ६ ॥

रामस्य स्वयमप्रयाणे हेतुमाह, य इति । हि यस्मात् परान् शत्रून् तापयतीति परन्तपः । "द्विषत्परयोस्तापेः" इति खच्प्रत्ययः, "खचि ह्रस्वः" इति ह्रस्वः । रघूणां मध्ये यः कश्चन एकः, अपवादः विशेषशास्त्रम् उत्सर्गं सामान्यशास्त्रम् इव, परं शत्रुं व्यावर्त्तयितुं बाधितुम् ईश्वरः समर्थः । अतः शत्रुघ्नमेवादिदेशेति पूर्वेणान्वयः ॥ ७ ॥

अग्रजेनेति । ततः अग्रजेन रामेण प्रयुक्ताशीः कृताशीर्वाद:

ययौ वनस्थलीः पश्यन् पुष्पिताः सुरभीरभीः ॥८॥
रामादेशादनुगता सेना तस्यार्थसिद्धये ।
पश्चादध्ययनार्थस्य धातोरधिरिवाभवत् ॥ ९ ॥
आदिष्टवर्त्मा मुनिभिः स गच्छंस्तपतां वरः ।
विरराज रथप्रष्ठैः वालखिल्यैरिवांशुमान् ॥१०॥
तस्य मार्गवशादेका बभूव वसतिर्यतः ।
रथस्वनोत्कण्ठमृगे वाल्मीकीये तपोवने ॥११॥

यौ रथिको अभीः निर्भीकः दाशरथिः पुष्पाणि सञ्जातानि
यासां ताः पुष्पिताः सुरभीः आमोदमानाः वनस्थलीः पश्यन्
ययौ ॥ ८ ॥

रामेति । रामादेशात् अनुगता सेना तस्य शत्रुघ्नस्य,
अध्ययनमर्थः अभिधेयः यस्य तस्य । धातोः "इङ्ध्ययने"
तस्य धातोः पश्चात् अधिः अध्युपसर्गः इव, अर्थसिद्धये प्रयो-
जनसाधनाय इत्येकत्र अन्यत्र अभिधेयसाधनाय अभवत् ।
"अर्थोऽभिधेये रै वस्तुप्रयोजननिवृत्तिषु" इत्यमरः । यथा,
"इङिकावध्युपसर्गं न व्यभिचरते" इति न्यायेन अध्युपसर्गः
कर्मेवार्थसाधकस्य धातोः सन्निधिमात्रेणोपकरोति सेनापि
स तद्वदिति भावः ॥ ९ ॥

आदिष्टेति । रथप्रष्ठैः रथाग्रगामिभिः । "प्रष्ठोऽग्रगामि-
नि" इति निपातः । मुनिभिः पूर्वोक्तैः आदिष्टवर्त्मा निर्दिष्ट-
मार्गः गच्छन् तपतां देदीप्यमानानां मध्ये वरः श्रेष्ठः सः
शत्रुघ्नः, वालखिल्यैः मुनिभिः अंशुमान् सूर्यः इव, विरराज ।
सोऽपि रथप्रष्ठा इत्यनुसन्धेयम् ॥ १० ॥

तस्येति । यतः गच्छतः । इण्धातोः शतृप्रत्ययः । तस्य

तमृषिः पूजयामास कुमारं क्लान्तवाहनम् ।
तपःप्रभावसिद्धाभिर्विशेषप्रतिपत्तिभिः ॥१२॥
तस्यामेवास्य यामिन्यामन्तर्वत्नी प्रजावती ।
सुतावसूत सम्पन्नौ कोशदण्डाविव क्षितिः ॥१३॥
सन्तानश्रवणाद् भ्रातुः सौमित्रिः सौमनस्यवान् ।
प्राञ्जलिर्मुनिमामन्त्र्य प्रातर्युक्तरथो ययौ ॥१४॥
स च प्राप मधूपघ्नं कुम्भीनस्याश्च कुक्षिजः ।
वनात् करमिवादाय सत्वराशिमुपस्थितः ॥१५॥

शत्रुघ्नस्य मार्गवशात् रथस्वने उत्कण्ठाः उदग्रीवाः मृगाः यस्मिन् तस्मिन् वाल्मीकीये वाल्मीकिसम्बन्धिनि । "वृद्धाच्छः" इति छप्रत्ययः । तपोवने एका वसतिः रात्रिः बभूव, तत्रैकां रात्रिमुषित इत्यर्थः । "वसती रात्रिवेश्मनोः" इत्यमरः ॥११॥

तमिति । क्लान्तवाहनं श्रान्तयुग्यं तं कुमारं शत्रुघ्नम् ऋषिः वाल्मीकिः तपःप्रभावसिद्धाभिः विशेषप्रतिपत्तिभिः उत्कृष्टसम्भावनाभिः पूजयामास ॥ १२ ॥

तस्यामिति । तस्यामेव यामिन्यां रात्रौ अस्य शत्रुघ्नस्य अन्तरस्याः अस्तीति अन्तर्वत्नी गर्भिणी । "अन्तर्वत्नी च गर्भिणी" इत्यमरः । "अन्तर्वत्पतिवतोर्नुग्" इति ङीप् नुगागमश्च । प्रजावती भ्रातृजाया सीता, क्षितिः सम्पन्नौ समग्रौ कोशदण्डौ इव, सुतौ असूत ॥ १३ ॥

सन्तानेति । भ्रातुः ज्येष्ठस्य सन्तानश्रवणाद्धेतोः सौमनस्यवान् प्रीतिमान् सौमित्रिः शत्रुघ्नः प्रातः युक्तरथः सज्जरथः सन् । प्राञ्जलिः कृताञ्जलिः मुनिमामन्त्र्य आपृच्छ्य ययौ ॥१४

स चेति । सः शत्रुघ्नश्च मधूपघ्नं नाम लवणपुरं प्राप,

धूमधूम्रो वसागन्धी ज्वालाबभ्रुशिरोरुहः ।
क्रव्याद्गणपरीवारश्चिताग्निरिव जङ्गमः ॥ १६ ॥
अपशूलं तमासाद्य लवणं लक्ष्मणानुजः ।
रुरोध संमुखीनो हि जयो रन्ध्रप्रहारिणाम् ॥ १७ ॥
नातिपर्याप्तमालक्ष्य मत्कुक्षेरद्य भोजनम् ।

कुम्भीनसी नाम रावणस्वसा तस्याः कुक्षिजः पुत्रः लवणास्य वनात् करं बलिमिव सत्त्वानां प्राणिनां राशिम् आदाय उपस्थितः प्राप्तः ॥ १५ ॥

धूमेति । किम्भूतो लवणः ? धूमः इव धूम्रः कृष्णलोहितवर्णः । "धूम्रधूमलौ कृष्णलोहिते" इत्यमरः । वसागन्धः हृन्मेदोगन्धः सः अस्यास्तीति वसागन्धी । "हृन्मेदस्तु वपा वसा" इत्यमरः । ज्वालाः इव बभ्रवः पिङ्गलाः शिरोरुहाः केशाः यस्य सः तथोक्तः । "विपुले नकुले विष्णौ बभ्रुः स्यात् पिङ्गले त्रिषु" इत्यमरः । क्रव्यं मांसम् अदन्ति इति क्रव्यादः राक्षसाः तेषां गणः एव परीवारः यस्य सः तथोक्तः अतएव जङ्गमः चरिष्णुः चिताग्निः इव स्थितः । चितानुपक्षे धूमैः धूम्रवर्णः ज्वालाः एव शिरोरुहाः क्रव्यादो-गृध्रादयः इति अनुसन्धेयम् ॥ १६ ॥

अपशूलमिति । लक्ष्मणानुजः शत्रुघ्नः अपशूलं शूलरहितं तं लवणम् आसाद्य रुरोध । तथाहि, रन्ध्रप्रहारिणां रन्ध्रप्रहरणशीलानाम् अपशूलतैवात्र रन्ध्रम् । जयः सम्मुखीनः हि सम्मुखस्य दर्शनः हि । "यथामुखसम्मुखस्य दर्शनः खः" इति खप्रत्ययः । अधिकारलक्षणार्थस्तु दुर्लभ एव ॥ १७ ॥

नेति । इतीति । राक्षसः लवणः, अद्य मत्कुक्षेः, भुज्यते इति भोजनं भोज्यं मृगादिकं नातिपर्याप्तम् अनतिसम-

दिष्ट्या त्वमसि मे धात्रा भीतेनेवोपपादितः॥१८
इति सन्तर्ज्य शत्रुघ्नं राक्षसस्तज्जिघांसया।
प्रांशुमुत्पाटयामास मुस्तास्तम्बमिव द्रुमम्॥१९
सौमित्रेर्निशितैर्बाणैरन्तरा शकलीकृतः।
गात्रं पुष्परजः प्राप न शाखी नैरृतेरितः॥२
विनाशात् तस्य वृक्षस्य रक्षस्तस्मै महोपलम्।
प्रजिघाय कृतान्तस्य मुष्टिं पृथगिव स्थितम्॥२
ऐन्द्रमस्त्रमुपादाय शत्रुघ्नेन स ताड़ितः।
सिकतात्वादपि परां प्रपेदे परमाणुताम्॥२२॥

अम् आलक्ष्य दृष्ट्वा भीतेन इव धात्रा दिष्ट्या भाग्येन मे त्वम् उपपादितः कल्पितः असि इति शत्रुघ्नं सन्तर्ज्य तस्य शत्रुघ्नस्य जिघांसया हन्तुमिच्छया प्रांशुम् उन्नतं द्रुमं मुस्तास्तम्बम् इव, अक्लेशेन उत्पाटयामास॥ १८॥ १९॥

सौमित्रेरिति। नैरृतेरितः रक्षःप्रेरितः शाखी अन्तरा मध्ये निशितैः बाणैः शकलीकृतः सन् सौमित्रेः शत्रुघ्नस्य गात्रं न प्राप, किन्तु पुष्परजः प्राप॥ २०॥

विनाशादिति। रक्षः लवणः तस्य वृक्षस्य विनाशात्तेतौ महोपलं महान्तं पाषाणं, पृथक् स्थितं कृतान्तस्य यम मुष्टिम् इव। मुष्टिशब्दो द्विलिङ्गः। तस्मै शत्रुघ्नाय प्रजि घाय प्रहितवान्॥ २१॥

ऐन्द्रमिति। सः महोपलः शत्रुघ्नेन ऐन्द्रम् इन्द्रदेवत कम् अस्त्रम् उपादाय ताड़ितः अभिहतः सन् सिकतात्व सिकताभावादपि परां परमाणुतां प्रपेदे। यतोऽल्पी स परमाणुरित्याहुः॥ २२॥

तमुपाद्रवदुद्यम्य दक्षिणं दोर्निशाचरः ।
एकताल इवोत्पात पवनप्रेरितो गिरिः ॥२३॥
कार्ष्णेन पत्रिणा शत्रुः स भिन्नहृदयः पतन् ।
आनिनाय भुवः कम्पं जहाराश्रमवासिनाम् ॥२४
वयसां पङ्क्तयः पेतुः हतस्योपरि विद्विषः ।
तत्प्रतिद्वन्द्विनो मूर्ध्नि दिव्याः कुसुमवृष्टयः ॥२५॥
स हत्वा लवणं वीरस्तदा मेने महौजसः ।

तमिति । निशाचरः राक्षसः दक्षिणं दोः । "ककुद्दोषणी" इति भगवतो भाष्यकारस्य प्रयोगात् दोष्शब्दस्य नपुंसकत्वं द्रष्टव्यम् । "भुजबाहू प्रवेष्टो दोः" इति पुंल्लिङ्गसाहचर्यात् पुंस्त्वञ्च । तथा च प्रयोगः, "दोषं तस्य तथाविधस्य भजतः" इति । सव्येतरं बाहुम् उद्यम्य एकः तालः तदाख्यवृक्षः यस्मिन् सः एकतालः, उत्पातपवनेन प्रेरितः गिरिः इव, तं शत्रुघ्नम् उपाद्रवत् अभिद्रुतः ॥ २३ ॥

कार्ष्णेनेति । सः शत्रुः लवणः कार्ष्णेन वैष्णवेन पत्रिणा बाणेन । उक्तञ्च रामायणे, "एवमेष प्रजनितः विष्णोस्तेजोमयः शरः" इति । "विष्णुर्नारायणः कृष्णः" इत्यमरः । भिन्नहृदयः पतन् भुवः कम्पम् आनिनाय नीतवान् देहभारात्, इत्यर्थः, आश्रमवासिनां कम्पं जहार, तत्रत्याः सद्यः अकुतोभया बभूवुः इत्यर्थः ॥ २४ ॥

वयसामिति । हतस्य विद्वेष्टीति विद्विट् तस्य विद्विषः राक्षसस्य उपरि वयसां पक्षिणां पङ्क्तयः पेतुः तत्प्रतिद्वन्द्विनः शत्रुघ्नस्य मूर्ध्नि तु दिव्याः कुसुमवृष्टयः पेतुः ॥ २५ ॥

स इति । सः वीरः शत्रुघ्नः लवणं हत्वा तदा आत्मानं

भ्रातुः सोदर्य्यमात्मानमिन्द्रजिद्वधशोभिनः॥२

तस्य संस्तूयमानस्य चरितार्थैस्तपस्विभिः।
शुशुभे विक्रमोदग्रं व्रीड़यावनतं शिरः॥ २७॥

उपकूलं स कालिन्द्याः पुरीं पौरुषभूषणः।
निर्ममे निर्ममोऽर्थेषु मथुरां मधुराकृतिः॥२८॥

या सौराज्यप्रकाशाभिर्बभौ पौरविभूतिभिः।
स्वर्गाभिष्यन्दवमनं कृत्वेवोपनिवेशिता॥ २९॥

महौजसः महाबलस्य इन्द्रजिद्वधेन शोभिनः भ्रातुः लक्ष्मणस्य समानोदरे शयितं सोदर्य्यम् एकोदरं मेने। "सोदराद् यत्" इति यत्प्रत्ययः॥ २६॥

तस्येति। चरितार्थैः कृतार्थैः कृतकार्य्यैः तपस्विभिः संस्तूयमानस्य तस्य शत्रुघ्नस्य विक्रमेण उदग्रम् उन्नतं व्रीड़या लज्जया अवनतं नम्रं शिरः शुशुभे, विक्रान्तस्य नम्रैव भूषणम् इति भावः॥ २७॥

उपेति। पौरुषभूषणः अर्थेषु विषयेषु निर्ममः निस्पृहः मधुराकृतिः सौम्यरूपः सः शत्रुघ्नः कालिन्द्याः यमुनायाः उपकूलं कूले। विभक्त्यर्थेऽव्ययीभावः। मथुरां नाम पुरीं निर्ममे निर्मितवान्॥ २८॥

येति। या पूः शत्रुघ्नः शोभनः राजा यस्याः पुरः सा सुराज्ञी सुराज्ञ्याः भावः सौराज्यं तेन प्रकाशाभिः प्रकाशमानाभिः पौराणां विभूतिभिः ऐश्वर्य्यैः स्वर्गस्य अभिष्यन्दः अतिरिक्तजनः। तस्य वमनमाहरणं कृत्वा उपनिवेशिता इव बभौ। अत्र कौटिल्यः, "भूतपूर्वमभूतपूर्वं वा जनपदं परदेशप्रवाहेण स्वदेशाभिष्यन्दवमनेन वा निवेशयेत्" इति॥२९

तत्र सौधगतः पश्यन् यमुनां चक्रवाकिनीम् ।
हेमभक्तिमतीं भूमेः प्रवेणीमिव पिप्रिये ॥ ३० ॥
सखा दशरथस्यापि जनकस्य च मन्त्रकृत् ।
सञ्चस्कारोभयप्रीत्या मैथिलेयौ यथाविधि ॥२१॥
स तौ कुशलवोन्मृष्टगर्भक्लेदौ तदाख्यया ।
कविः कुशलवावेव चकार किल नामतः ॥३२॥
साङ्गञ्च वेदमध्याप्य किञ्चिदुत्क्रान्तशैशवौ ।

तत्रेति । तत्र मथुरायां सौधगतः हर्म्यारूढः सः चक्रवाकिनीं चक्रवाकवतीं यमुनां हेमभक्तिमतीं सुवर्णरचनावतीं भूमेः प्रवेणीं वेणीमिव । "वेणी प्रवेणी" इत्यमरः । पश्यन् पिप्रिये प्रीतः । "प्रीङ् प्रीणने" इति धातोर्दैवादिकाल्लिट् ॥३०

सम्प्रति रामसन्तानवृत्तान्तमाह, सखा इति । दशरथस्य जनकस्य च सखा मन्त्रकृत् मन्त्रद्रष्टा सः वाल्मीकिः अपि । "सुकर्मपापमन्त्रपुण्येषु कृञः" इति क्विप् । उभयोः दशरथजनकयोः प्रीत्या स्नेहेन मैथिलेयौ मैथिलीपुत्रौ यथाविधि यथाशास्त्रं सञ्चस्कार संस्कृतवान् जातकर्मादिभिरिति शेषः ॥ २१ ॥

स इति । सः कविः वाल्मीकिः कुशैः दर्भैः लवैः गोपुच्छलोमभिः । "लवो लवणकिञ्जल्कपक्ष्मगोपुच्छलोमसु" इति वैजयन्ती । उन्मृष्टः गर्भक्लेदः गर्भोपद्रवः ययोः तौ कुशलवोन्मृष्टगर्भक्लेदौ तौ मैथिलेयौ तेषां कुशानाञ्च लवानाञ्च आख्यया नामतः नाम्ना यथासंख्यं कुशलवौ एव चकार किल । कुशोन्मृष्टः कुशः, लवोन्मृष्टः लवः ॥ ३२ ॥

साङ्गमिति । किञ्चित् उत्क्रान्तशैशवौ अतिक्रान्तबाल्यौ

स्वकृतिं गापयामास कविप्रथमपद्धतिम् ॥३३॥

रामस्य मधुरं वृत्तं गायन्तौ मातुरग्रतः ।
तद्वियोगव्यथां किञ्चित् शिथिलीचक्रतुः सुतौ ॥३४॥

इतरेऽपि रघोर्वंश्यास्त्रयस्त्रेताग्नितेजसः ।
यद्योगात् पतिवत्नीषु पत्नीष्वासन् द्विसूनवः ॥३५॥

शत्रुघातिनि शत्रुघ्नः सुबाहौ च बहुश्रुते ।
मथुराविदिशे सून्वोर्निदधे पूर्वजोत्सुकः ॥ ३६ ॥

तौ साङ्गं वेदम् अध्याप्य कवीनां प्रथमपद्धतिं कवितावीजमित्यर्थः स्वकृतिं काव्यं रामायणाख्यं गापयामास । गायतेर्लिट् । शब्दकर्मत्वात् "गतिबुद्धि—" इत्यादिना द्विकर्मकत्वम् ॥ ३३ ॥

रामस्येति । तौ सुतौ रामस्य वृत्तं मातुः अग्रतः मधुरं गायन्तौ तद्वियोगव्यथां रामविरहवेदनां किञ्चित् शिथिलीचक्रतुः ॥ ३४ ॥

इतरेऽपीति । रघोः वंश्याः वंशे भवाः त्रेतेति अन्वयः त्रेताग्नयः तेषां तेजः इव तेजः येषां ते त्रेताग्नितेजसः इतरे रामात् अन्ये त्रयः भरतादयः अपि तद्योगात् तेषां योगात् भरतादिसम्बन्धात् पतिवत्नीषु भर्तृमतीषु जीवत्पतिकासु ख्यातिमतीषु इत्यर्थः । "पतिवत्नी सभर्तृका" इत्यमरः । "अन्तर्वत्पतिवतोर्नुक्" इति ङीप्प्रत्ययो नुगागमश्च । पत्नीषु द्विसूनवः आसन् । द्वौ द्वौ सूनू येषां ते द्विसूनवः इति विग्रहः । क्वचित् संख्याशब्दस्य वृत्तिविषये वीप्सार्थत्वं सप्तपर्णादिवत् ॥ ३५ ॥

शत्रुघातिनीति । पूर्वजोत्सुकः ज्येष्ठप्रियः शत्रुघ्नः बहु-

भूयस्तपोव्ययो माभूद्वाल्मीकेरिति सोऽत्यगात् ।
मैथिलीतनयोद्गीतनिःस्पन्दमृगमाश्रमम् ॥ ३७ ॥
वशी विवेश चायोध्यां रथ्यासंस्कारशोभिनीम् ।
लवणस्य वधात् पौरैरीचितोऽत्यन्तगौरवम् ॥३८॥
स ददर्श सभामध्ये सभासद्भिरुपस्थितम् ।
रामं सीतापरित्यागादसामान्यपतिं भुवः ॥३९॥
तमभ्यनन्दत् प्रणतं लवणान्तकमग्रजः ।
कालनेमिवधात् प्रीतस्तुराषाडिव शार्ङ्गिणम् ॥४०

श्रुते शत्रुघातिनि सुबाहौ च तन्नामकयोः सून्वोः मथुरा च विदिशा च ते नगर्यौ निदधे निधाय गतः इत्यर्थः ॥ ३६ ॥

भूय इति । सः शत्रुघ्नः मैथिलीतनययोः कुशलवयोः उद्गीतेन निःस्पन्दमृगं गीतप्रियतया निश्चलहरिणं वाल्मीकेः आश्रमम् भूयः पुनरपि तपोव्ययः संविधानकरणार्थं तपोहानिः माभूदिति हेतोः, अत्यगादतिक्रम्य गत इत्यर्थः ॥ ३७ ॥

वशीति । वशी सः लवणस्य वधाद्धेतोः पौरैः पौरजनैः अत्यन्तं गौरवं यस्मिन् कर्मणि तत् तथा ईचितः सन् रथ्यासंस्कारैः तोरणादिभिः, शोभते या ताम् अयोध्यां विवेश च ॥ ३८ ॥

स इति । सः शत्रुघ्नः सभामध्ये सभासद्भिः सभ्यैः उपस्थितं सेवितं सीतापरित्यागात् भुवः असामान्यपतिम् असाधारणपतिं रामं ददर्श ॥ ३९ ॥

तमिति । अग्रजः रामः लवणस्य अन्तकं हन्तारं प्रणतं तं शत्रुघ्नम्, कालनेमिर्नाम राक्षसः तस्य वधात् प्रीतं, तुरां वेगं सहते इति तुराषाट् इन्द्रः । "छन्दसि सहः" इति क्विः ।

स पृष्टः सर्वतो वार्त्तमाख्यद्राज्ञे न सन्ततिम्।
प्रत्यर्पयिष्यतः काले कवेराद्यस्य शासनात्॥४१॥
अथ जानपदो विप्रः शिशुमप्राप्तयौवनम्।
अवतार्य्याङ्कशय्यास्थं द्वारि चक्रन्द भूपतेः॥४२॥
शोचनीयासि वसुधे! या त्वं दशरथात् च्युता।
रामहस्तमनुप्राप्य कष्टात् कष्टतरं गता॥४३॥
श्रुत्वा तस्य शुचो हेतुं गोप्ता जिह्राय राघवः।
न ह्यकालभवो मृत्युरिक्ष्वाकुपदमस्पृशत्॥४४॥

यद्वा सहतेर्णिचि कृते साहयतेः क्विप्, "अन्येषामपि दृश्यते" इति पूर्वपदस्य दीर्घः, "सहेः साढ़ः षः" इति षत्वम्। शार्ङ्गिणम् उपेन्द्रम् इव, अभ्यनन्दत्॥४०॥

स इति। सः शत्रुघ्नः पृष्टः सन् सर्वतः वार्त्तं कुशलं राज्ञे रामाय आख्यत् आख्यातवान्। चक्षिङो लुङ्, "चक्षिङः ख्याञ्" इति ख्याञादेशः। "अस्यति वक्ति—" इत्यङ्, "आतो लोप इति च" इत्याकारलोपः, ख्यातेर्वा लुङ्। सन्ततिं कुशलवोत्पत्तिं नाख्यत्। कुतः? काले अवसरे प्रत्यर्पयिष्यतः आद्यस्य कवेः वाल्मीकेः शासनात्॥४१॥

अथेति। अथ जनपदे भवः जानपदः विप्रः कश्चिदिति शेषः। अप्राप्तयौवनं शिशुं पुत्रं मृतम् इति शेषः, भूपतेः रामस्य द्वारि अङ्कशय्यास्थं यथा तथा अवतार्य्य अङ्कतलेनैवावरोप्य चक्रन्द चुक्रोश॥४२॥

शोचनीयेति। हे वसुधे! दशरथात् च्युता या त्वं रामहस्तमनुप्राप्य कष्टात् कष्टतरं गता सती शोचनीयासि॥४३॥

श्रुत्वेति। गोप्ता रक्षकः राघवः तस्य विप्रस्य शुचः शोकस्य

स मुहूर्त्तं क्षमस्वेति द्विजमाश्वास्य दुःखितम् ।
यानं सस्मार कौवेरं वैवस्वतजिगीषया ॥ ४५ ॥
आत्तशस्त्रस्तदध्यास्य प्रस्थितः स रघूद्वहः ।
उच्चचार पुरस्तस्य गूढ़रूपा सरस्वती ॥ ४६ ॥
राजन्! प्रजासु ते कश्चिदपचारः प्रवर्त्तते ।
तमन्विष्य प्रशमयेर्भवितासि ततः कृती ॥ ४७ ॥
इत्याप्तवचनाद्रामो विनेष्यन् वर्णविक्रियाम् ।
दिशः पपात पत्रेण वेगनिष्कम्पकेतुना ॥ ४८ ॥

हेतुं पुत्रमरणरूपं श्रुत्वा जिह्राय लज्जितः । कुतः? हि यस्मात् अकालभवः मृत्युः इक्ष्वाकूणां पदं राष्ट्रं न अस्पृशत् वृद्धे जीवति यवीयान् न म्रियते इत्यर्थः ॥ ४४ ॥

स इति । सः रामः दुःखितं द्विजं मुहूर्त्तं क्षमस्वेति आश्वास्य वैवस्वतस्य अन्तकस्यापि जिगीषया जेतुमिच्छया कौवेरं यानं पुष्पकं सस्मार ॥ ४५ ॥

आत्तेति । सः रघूद्वहः रामः आत्तशस्त्रः सन् तत्पुष्पकम् अध्यास्य प्रस्थितः । अथ तस्य पुरो गूढ़रूपा सरस्वती अशरीरा वाक् उच्चचार उद्बभूव ॥ ४६ ॥

राजन्निति । हे राजन्! ते प्रजासु कश्चित् अपचारः वर्णधर्मव्यतिरेकः प्रवर्त्तते, तम् अपचारम् अन्विष्य प्रशमयेः, ततः कृती कृतकृत्यः भवितासि भविष्यसि ॥ ४७ ॥

इतीति । इति आप्तवचनात् रामः वर्णविक्रियां वर्णापचारं विनेष्यन् अपनेष्यन् वेगेन निष्कम्पकेतुना पत्रेण वाहनेन पुष्पकेण । “पत्रं वाहनपक्षयोः” इत्यमरः । दिशः पपात धावति स्म ॥ ४८ ॥

अथ धूमाभिताम्राक्षं वृक्षशाखावलम्बिनम्।
ददर्श कञ्चिदैक्ष्वाकस्तपस्यन्तमधोमुखम्॥४९॥
पृष्टनामान्वयो राज्ञा स किलाचष्ट धूमपः।
आत्मानं शम्बुकं नाम शूद्रं सुरपदार्थिनम्॥५०॥
तपस्यनधिकारित्वात् प्रजानां तमघावहम्।
शीर्षच्छेद्यं परिच्छिद्य नियन्ता शस्त्रमाददे॥५१॥
स तद्वक्त्रं हिमक्लिष्ट-किञ्जल्कमिव पङ्कजम्।
ज्योतिष्कणाहतश्मश्रु कण्ठनालादपातयत्॥५२॥

अथेति। अथ इक्ष्वाकुवंशप्रभवः ऐक्ष्वाकः रामः। "कोपधादण्" इत्यणि कृते "दाण्डिनायन—" इत्यादिना उकारलोपनिपातः। धूमेन पीयमानेन अभिताम्राक्षं वृक्षशाखावलम्बिनम् अधोमुखं तपस्यन्तं तपश्चरन्तं कञ्चित् पुरुषं ददर्श॥ ४९॥

पृष्टेति। राज्ञा नाम च अन्वयश्च तौ पृष्टौ नामान्वयौ यस्य सः तथोक्तः धूमं पिबतीति धूमपः। "सुपि" इति योगविभागात् कप्रत्ययः। सः पुरुषः आत्मानं सुरपदार्थिनं स्वर्गार्थिनम्। अनेन प्रयोजनमपि पृष्ट इति ज्ञेयम्। शम्बुकं नाम शूद्रम् आचष्ट बभाषे किल॥ ५०॥

तपसीति। तपसि अनधिकारित्वात् प्रजानाम् अघावहं तं शूद्रं शीर्षच्छेद्यम्। "शीर्षच्छेदात् यच्च" इति यत्प्रत्ययः। परिच्छिद्य निश्चित्य नियन्ता दण्डकः रामः शस्त्रम् आददे जग्राह॥ ५१॥

स इति। सः रामः ज्योतिष्कणैः स्फुलिङ्गैः आहतानि दग्धानि श्मश्रूणि यस्य तत् तस्य वक्त्रं, हिमक्लिष्टकिञ्जल्कं पङ्कजम् इव, कण्ठ एव नालं तस्मात् अपातयत्॥ ५२॥

क्षतदण्डः स्वयं राज्ञा लेभे शूद्रः सतां गतिम् ।
तपसा दुश्चरेणापि न स्वमार्गविलङ्घिना ॥५३॥
रघुनाथोऽप्यगस्त्येन मार्गसन्दर्शितात्मना ।
महौजसा संयुयुजे शरत्काल इवेन्दुना ॥ ५४ ॥
कुम्भयोनिरलङ्कारं तस्मै दिव्यपरिग्रहम् ।
ददौ दत्तं समुद्रेण पीतेनेवात्मनिष्क्रयम् ॥५५॥
तं दधन्मैथिलीकण्ठनिर्व्यापारेण बाहुना ।
पश्चान्निववृते रामः प्राक् परासुर्द्विजात्मजः ॥५६॥

क्षतेति । शूद्रः शम्बुकः राज्ञा स्वयं क्षतदण्डः क्षतशिक्षः सन् सतां गतिं लेभे, दुश्चरेणापि स्वमार्गविलङ्घिना अनधिकारदुष्टेन इत्यर्थः तपसा न लेभे । अत्र मनुः, "राजभिः क्षतदण्डास्तु कृत्वा पापानि मानवाः । निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा ॥" इति ॥ ५३ ॥

रघुनाथ इति । रघुनाथोऽपि मार्गसन्दर्शितात्मना महौजसा अगस्त्येन, इन्दुना शरत्कालः इव, संयुयुजे सङ्गतः इन्दावपि विशेषणं योज्यम् । रघुनाथेत्यत्र लुभ्नादित्वात्णत्वाभावः ॥ ५४ ॥

कुम्भेति । कुम्भयोनिः अगस्त्यः पीतेन समुद्रेण आत्मनिष्क्रयम् इव आत्ममोचनमूल्यम् इव दत्तम् अत एव परिगृह्यते इति व्युत्पत्त्या दिव्यपरिग्रहः दिव्यानां परिग्रहः परिग्राह्यः इत्यर्थः । तम् अलङ्कारं तस्मै रामाय ददौ ॥ ५५ ॥

तमिति । मैथिलीकण्ठनिर्व्यापारेण बाहुना तम् अलङ्कारं दधत् रामः पश्चात् निववृते निवृत्तः, परासुः मृतः द्विजात्मजः प्राक् रामात् पूर्वं निववृते ॥ ५६ ॥

तस्य पूर्वोदितां निन्दां द्विजः पुत्रसमागतः ।
स्तुत्या निवर्त्तयामास त्रातुर्वैवस्वतादपि ॥५७॥

तमध्वराय मुक्ताश्वं रक्षःकपिनरेश्वराः ।
मेघाः शस्यमिवाम्भोभिरभ्यवर्षन्नुपायनैः ॥५८॥

दिग्भ्यो निमन्त्रिताश्चैनमभिजग्मुर्महर्षयः ।
न भौमान्येव धिष्ण्यानि हित्वा ज्योतिर्मयान्य

उपशल्यनिविष्टैस्तैश्चतुर्द्वारमुखी बभौ ।
अयोध्या सृष्टलोकेव सद्यः पैतामही तनुः ॥६

तस्येति । पुत्रसमागतः पुत्रेण सङ्गतः द्विजः वैव
तात् अन्तकादपि त्रातुः रक्षकस्य । "भीत्रार्थानां भयहेतुः
इत्यपादानात् पञ्चमी । तस्य रामस्य पूर्वोदितां पूर्वो
निन्दां स्तुत्या निवर्त्तयामास ॥ ५७ ॥

तमिति । अध्वराय अश्वमेधाय मुक्ताश्वं तं रामं रक्षः
कपिनरेश्वराः सुग्रीवविभीषणादयः राजानश्च, मेघाः अम्भोभि
शस्यम् इव, उपायनैः अभ्यवर्षन् ॥ ५८ ॥

दिग्भ्य इति । निमन्त्रिताः आहूताः महर्षयश्च भूम्
सम्बन्धीनि भौमानि धिष्ण्यानि स्थानान्येव न । "धिष्
स्थाने गृहे भेऽग्नौ" इत्यमरः । किन्तु ज्योतिर्मयानि नक्ष
त्ररूपाणि धिष्ण्यान्यपि हित्वा दिग्भ्यः एनं रामम् अभि
जग्मुः ॥ ५९ ॥

उपेति । चत्वारि द्वाराण्येव मुखानि यस्याः सा चतुर्द्वा
रमुखी अयोध्या उपशल्येषु ग्रामान्तेषु निविष्टैः । "ग्रामान्त
उपशल्यं स्यात्" इत्यमरः । तैः महर्षिभिः, सद्यः सृष्टलो
पितामहस्येयं पैतामही तनुः मूर्त्तिः इव बभौ ॥ ६० ॥

श्लाघ्यस्त्यागोऽपि वैदेह्याः पत्युः प्राग्वंशवासिनः ।
अनन्यजानेः सैवासीत् यस्माज्जाया हिरण्मयी॥६१
विधेरधिकसंभारस्ततः प्रववृते मखः ।
आसन् यत्र क्रियाविघ्ना राक्षसा एव रक्षिणः॥६२
अथ प्राचेतसोपज्ञं रामायणमितस्ततः ।
मैथिलेयौ कुशलवौ जगतुर्गुरुचोदितौ ॥ ६३ ॥

श्लाघ्य इति । वैदेह्याः त्यागोऽपि श्लाघ्यः वर्ण्यः एव । ...तः ? यस्मात् प्राग्वंशः प्राचीनस्थूणः यज्ञशालाविशेषः ...वासिनः नास्त्यन्या जाया यस्य तस्य अनन्यजानेः । ...जायाया निङ्" इति समासान्तो निङादेशः । पत्युः ...मस्य हिरण्मयी सौवर्णी । "दाण्डिनायनादिसूत्रेण" ...निपातः । सा सैव जाया पत्नी आसीत् कविवाक्य-...मेतत् ॥ ६१ ॥

विधेरिति । ततः विधेः शास्त्रात् अधिकसंभारः अति-...रिच्यमानपरिकरः मखः प्रववृते प्रवृत्तः । यत्र मखे विह-...न्यन्ते एभिरिति विघ्नाः प्रत्यूहाः । "मखो यज्ञे यज्ञार्थे कवि-...धानम्" इति कः । क्रियाविघ्नाः अनुष्ठानविघातकाः राक्षसाः ...एव रक्षिणः रक्षकाः आसन् ॥ ६२ ॥

अथेति । अथ मैथिलेयौ मैथिलीतनयौ । "स्त्रीभ्यो ...ढक्" । कुशलवौ गुरुणा वाल्मीकिना चोदितौ प्रेरितौ सन्तौ ...प्राचेतसः वाल्मीकिः उपज्ञायते इति उपज्ञा । "आतश्चोपसर्गे" ...इति कर्मण्यङ्प्रत्ययः । प्राचेतसस्य उपज्ञा प्राचेतसोपज्ञं ...प्राचेतसेनादौ ज्ञातम् इत्यर्थः । "उपज्ञा ज्ञानमाद्यं स्यात्" ...इत्यमरः । "उपज्ञोपक्रमं तदाद्याचिख्यासायाम्" इति

वृत्तं रामस्य वाल्मीकेः कृतिस्तौ किन्नरस्वनौ।
किं तद् येन मनो हर्तुमलं स्यातां न शृण्वताम्॥६४॥
रूपे गीते च माधुर्य्यं तयोस्तज्ज्ञैर्निवेदितम्।
ददर्श सानुजो रामः शुश्राव च कुतूहली॥६५॥
तद्गीतश्रवणैकाग्रा संसदश्रुमुखी बभौ।
हिमनिष्यन्दिनी प्रातर्निर्वातेव वनस्थली॥६६॥
वयोवेशविसंवादि रामस्य च तयोस्तदा।

नपुंसकत्वम् अय्यते ज्ञायते अनेन इत्ययनं रामस्य अयनं चरितं रामायणं रामायणाख्यं काव्यम्। "पूर्वपदात् संज्ञायामगः" इति णत्वम् उत्तरायणमितिवत्। इतस्ततः जगतुः। गायतेर्लिट्॥६३॥

वृत्तमिति। रामस्य वृत्तं वर्ण्यं वस्तु इति शेषः, वाल्मीकेः कृतिः काव्यं गेयम् इति शेषः, तौ कुशलवौ किन्नरस्वनौ किन्नरकण्ठौ गायकौ पुनरिति शेषः। अत एव तत् किं येन निमित्तेन तौ शृण्वतां मनः हर्तुम् अलं शक्तौ न स्याताम्। सर्वं सरसम् इत्यर्थः॥६४॥

रूप इति। ते जानन्तीति तज्ज्ञाः तैः तज्ज्ञैः अभिज्ञैः निवेदितं तयोः कुशलवयोः रूपे आकारे गीते च माधुर्य्यं रामणीयकं सानुजः रामः कुतूहली सानन्दः सन् यथासङ्ख्यं ददर्श शुश्राव च॥६५॥

तदिति। तयोः गीतश्रवणे एकाग्रा आसक्ता अश्रुमुखी आनन्दात् इति भावः, संसत् सभा प्रातर्हिमनिष्यन्दिनी निर्वाता वातरहिता वनस्थली इव, बभौ शुशुभे। आनन्दपारवश्यान्निष्पन्दमासीत् इत्यर्थः॥६६॥

जनता प्रेक्ष्य सादृश्यं नाक्षिकम्पं व्यतिष्ठत ॥६७॥
उभयोर्न तथा लोकः प्रावीण्येन विसिष्मिये ।
नृपतेः प्रीतिदानेषु वीतस्पृहतया यथा ॥ ६८ ॥
गेये को नु विनेता वां कस्य चेयं कृतिः कवेः ।
इति राज्ञा स्वयं पृष्टौ तौ वाल्मीकिमशंसताम् ॥६९
अथ सावरजो रामः प्राचेतसमुपेयिवान् ।
उरीकृत्यात्मनो देहं राज्यमस्मै न्यवेदयत् ॥७०॥

जनतेति । जनता जनानां समूहः । "ग्रामजनबन्धुभ्य-
स्तल्" इति तल्प्रत्ययः । वयोवेषाभ्यामेव विसंवादि विलक्षणं
यथा तयोः कुशलवयोः रामस्य च सादृश्यं प्रेक्ष्य नास्ति
अक्षिकम्पः यस्मिन् कर्मणि तत् यथा तथा । नञर्थस्य
नाशब्दस्य बहुव्रीहिः । व्यतिष्ठत यतिष्ठत् । "समप्रविभ्यः स्थः"
इत्यात्मनेपदम् । विस्मयादनिमिषमद्राक्षीत् इत्यर्थः ॥ ६७ ॥
उभयोरिति । लोकः जनः उभयोः कुमारयोः प्रावीण्येन
नैपुण्येन तथा न विसिष्मिये न विस्मितवान् यथा नृपतेः
प्रीतिदानेषु वीतस्पृहतया नैस्पृह्येण विसिष्मिये ॥ ६८ ॥
गेय इति । गेये गीते को नु वां युवयोः विनेता शिक्षकः ?
नुशब्दः प्रश्ने । "नु पृच्छायां वितर्के च" इत्यमरः । इयञ्च
कस्य कवेः कृतिरिति राज्ञा स्वयं पृष्टौ तौ कुशलवौ वाल्मी-
किम् अशंसताम् उक्तवन्तौ विनेतारं कविं च इत्यर्थः गेये
"केन विनीतौ वाम्" इति पाठे वामिति युष्मदर्थप्रतिपाद-
कमव्ययं द्रष्टव्यम् । तथा चायमर्थः, केन पुंसा वां युवां गेये
विषये विनीतौ शिक्षितौ ? कर्मणि निष्ठाप्रत्ययः ॥ ६९ ॥
अथेति । अथ सावरजः रामः प्राचेतसं वाल्मीकिम्

स तावाख्याय रामाय मैथिलेयौ तदात्मजौ।
कविः कारुणिको वव्रे सीतायाः सम्परिग्रहम्॥७१॥

तात! शुद्धा समक्षं नः स्नुषा ते जातवेदसि।
दौरात्म्याद्रक्षसस्तान्तु नावत्याः श्रद्दधुः प्रजाः॥७२॥

ताः स्वचारित्रमुद्दिश्य प्रत्याययतु मैथिली।
ततः पुत्रवतीमेनां प्रतिपत्स्ये त्वदाज्ञया॥ ७३॥

इति प्रतिश्रुते राज्ञा जानकीमाश्रमान्मुनिः।

उपेयिवान् प्राप्तः सन् देहम् आत्मनः उपरोधस्य आत्मानं स्थापयित्वा इत्यर्थः राज्यम् पत्यै प्राचेतसाय न्यवेदय समर्पितवान्॥७०॥

स इति। करुणा प्रयोजनम् यस्य कारुणिकः दयालुः। "प्रयोजनम्" इति ठञ्। "स्याद्दयालुः कारुणिकः" इत्यमरः। सः कविः रामाय तौ मैथिलेयौ तदात्मजौ रामसुतौ आख्याय सीतायाः सम्परिग्रहं स्वीकारं वव्रे ययाचे॥७१॥

तातेति। हे तात! ते स्नुषा नः अस्माकम् अक्ष्णोः समीपं समक्षम्। "अव्ययीभावे शरत्प्रभृतिभ्यः" इति समासान्तष्टच्। जातवेदसि वह्नौ शुद्धा, नास्माकमविश्वासः इत्यर्थः। किन्तु रक्षसः रावणस्य दौरात्म्यात् अवत्याः प्रजाः तां न श्रद्दधुः न विशश्वसुः॥७२॥

ता इति। मैथिली स्वचारित्रम् उद्दिश्य ताः प्रजाः प्रत्याययतु विश्वासयतु। विश्वासस्य बुद्धिरूपत्वात् "णौ गमिरबोधने" इति इणो गम्यादेशो नास्ति। ततः अनन्तरं पुत्रवतीम् एनां सीतां त्वदाज्ञया प्रतिपत्स्ये स्वीकरिष्ये॥७३॥

इतीति। राज्ञा इति प्रतिश्रुते सति मुनिः आश्रमात्

शिष्यैरानाययामास स्वसिद्धिं नियमैरिव ॥७४॥

अन्येद्युरथ काकुत्स्थः सन्निपात्य पुरौकसः।
कविमाह्वाययामास प्रस्तुतप्रतिपत्तये ॥ ७५ ॥

स्वरसंस्कारवत्यासौ पुत्राभ्यामथ सीतया।
ऋचेवोदर्चिषं सूर्य्यं रामं मुनिरुपस्थितः ॥७६॥

काषायपरिवीतेन स्वपदार्पितचक्षुषा।
अन्वमीयत शुद्धेति शान्तेन वपुषैव सा ॥ ७७ ॥

जनास्तदालोकपथात् प्रतिसंहृतचक्षुषः।
तस्थुस्तेऽवाङ्मुखाः सर्वे फलिता इव शालयः ॥७८

जानकीं शिष्यैः प्रयोज्यैः, स्वसिद्धिं स्वार्थसिद्धिं नियमैः तपोभिः इव, आनाययामास ॥ ७४ ॥

अन्येद्युरिति। अथ काकुत्स्थः रामः अन्येद्युः अन्यस्मि-न्नहनि प्रस्तुतप्रतिपत्तये प्रकृतकार्य्यानुसन्धानाय पुरौकसः पौरान् सन्निपात्य मेलयित्वा कविं वाल्मीकिम् आह्वाययामास आकारयामास ॥ ७५ ॥

स्वरेति। अथ स्वरः उदात्तादिः संस्कारः शब्दशुद्धिः तद्वत्या ऋचा सावित्र्या उदर्चिषं सूर्य्यम् इव, पुत्राभ्याम् उप-लक्षितया सीतया करणेन उदर्चिषं रामम् असौ मुनिः उप-स्थितः उपतस्थे ॥ ७६ ॥

काषायेति। कषायेण रक्तं काषायम्। "तेन रक्तं रागात्" इत्यण्। तेन परिवीतेन संवृतेन स्वपदार्पितचक्षुषा शान्तेन प्रसन्नेन वपुषैव सा सीता शुद्धा साध्वीत्यन्वमीयत अनु-मिता ॥ ७७ ॥

जना इति। तस्याः सीतायाः कर्मणः आलोकपथात्

तां दृष्टिविषये भर्त्तुः मुनिरास्थितविष्टरः।
कुरु निःसंशयं वत्से! स्ववृत्ते लोकमित्यशात्॥७९॥
अथ वाल्मीकिशिष्येण पुण्यमावर्जितं पयः।
आचम्योदीरयामास सीता सत्यां सरस्वतीम्॥८०॥
वाङ्मनःकर्मभिः पत्यौ व्यभिचारो यथा न मे।
तथा विश्वम्भरे देवि! मामन्तर्द्धातुमर्हसि॥८१॥
एवमुक्ते तया साध्व्या रन्ध्रात् सद्योभवाद्भुवः।
शातह्रदमिव ज्योतिः प्रभामण्डलमुद्ययौ॥८२॥

दर्शनमार्गात् प्रतिसंहृतचक्षुषः निर्वर्त्तितदृष्टयः सर्वे जनाः, फलिताः शालयः इव, अवाङ्मुखाः अवनतमुखाः तस्थुः॥७८॥

तामिति। आस्थितविष्टरः अधिष्ठितासनः मुनिः हे वत्से! भर्त्तुः दृष्टिविषये समक्षं स्ववृत्ते स्वचरिते विषये लोकं निःसंशयं कुर्विति तां सीताम् अशात् शास्ति स्म॥७९॥

अथेति। अथ वाल्मीकिशिष्येण आवर्जितं दत्तं पुण्यं पयः आचम्य सीता सत्यां सरस्वतीं वाचम् उदीरयामास उच्चारयामास॥८०॥

वाङ्मन इति। वाङ्मनःकर्मभिः पत्यौ विषये मे व्यभिचारः स्खालित्यं न यथा नास्ति यदि तथा तर्हि विश्वं बिभर्त्तीति विश्वम्भरा भूमिः। "संज्ञायां भृत्" इत्यादिना खच्प्रत्ययः, "अरुर्द्विषत्—" इत्यादिना मुमागमः। हे विश्वम्भरे! देवि! माम् अन्तर्द्धातुं गर्भे वासयितुम् अर्हसि॥८१॥

एवमिति। साध्व्या पतिव्रतया तया सीतया एवम् उक्ते सति सद्योभवात् भुवः रन्ध्रात् शातह्रदं वैद्युतं ज्योतिः इव, प्रभामण्डलम् उदययौ॥८२॥

तत्र नागफणोत्क्षिप्तसिंहासननिषेदुषी ।
समुद्ररशना साक्षात् प्रादुरासीद्वसुन्धरा ॥ ८३ ॥
सा सीतामङ्कमारोप्य भर्तृप्रणिहितेक्षणाम् ।
मामेति व्याहरत्येव तस्मिन् पातालमभ्यगात्॥८४
धरायां तस्य संरम्भं सीताप्रत्यर्पणैषिणः ।
गुरुर्विधिबलापेक्षी शमयामास धन्विनः ॥ ८५ ॥
ऋषीन् विसृज्य यज्ञान्ते सुहृदश्च पुरस्कृतान् ।
रामः सीतागतं स्नेहं निदधे तदपत्ययोः ॥८६॥

तत्रेति । तत्र प्रभामण्डले नागफणोत्क्षिप्ते सिंहासने निषेदुषी आसीना समुद्ररशना समुद्रमेखला साक्षात् वसूनि धारयति इति वसुन्धरा भूमिः । "खचि ह्रस्वः" इति धातोः ह्रस्वः । प्रादुरासीत् ॥ ८३ ॥

सेति । सा वसुन्धरा भर्त्तरि प्रणिहितेक्षणां दत्तदृष्टिं सीताम् अङ्कम् आरोप्य तस्मिन् भर्त्तरि रामे मामेति मा हरेति व्याहरति वदत्येव व्याहरन्तमनादृत्य इत्यर्थः । "षष्ठी चानादरे" इति सप्तमी । पातालम् अभ्यगात् ॥ ८४ ॥

धरायामिति । सीताप्रत्यर्पणम् इच्छति इति तथोक्तस्य धन्विनः आत्तधनुषः तस्य रामस्य धरायां विषये संरम्भं विधिबलापेक्षी दैवशक्तिदर्शी गुरुः वशिष्ठः ब्रह्मा वा शमयामास, अवश्यम्भावी विधिः इति भावः ॥ ८५ ॥

ऋषीनिति । रामः यज्ञान्ते पुरस्कृतान् पूजितान् ऋषीन् सुहृदश्च विसृज्य सीतागतं स्नेहं तदपत्ययोः कुशलवयोः निदधे ॥ ८६ ॥

युधाजितश्च सन्देशात् स देशं सिन्धुनामकम्।
ददौ दत्तप्रभावाय भरताय भृतप्रजः ॥ ८७ ॥
भरतस्तत्र गन्धर्वान् युधि निर्जित्य केवलम्।
आतोद्यं ग्राहयामास समत्याजयदायुधम् ॥८८॥
स तक्षपुष्कलौ पुत्रौ राजधान्योस्तदाख्ययोः।
अभिषिच्याभिषेकार्हौ रामान्तिकमगात् पुनः ८९
अङ्गदं चन्द्रकेतुञ्च लक्ष्मणोऽप्यात्मसम्भवौ।
शासनाद् रघुनाथस्य चक्रे कारापथेश्वरौ ॥९०॥

युधाजित इति। किञ्च, भृतप्रजः सः रामः युधाजितः भरतमातुलस्य सन्देशात् सिन्धुनामकं देशं दत्तप्रभावाय दत्तैश्वर्याय रामेण इति शेषः भरताय ददौ ॥ ८७ ॥

भरत इति। तत्र सिन्धुदेशे भरतः अपि युधि गन्धर्वान् निर्जित्य केवलम् एकम् आतोद्यं वीणां "ततं वीणादिकं वाद्य-मानद्धं मुरजादिकम्। वंशादिकं तु सुषिरं कांस्यतालादिकं घनम्। चतुर्विधमिदं वाद्यं वादित्रातोद्यनामकम्" इत्यमरः। ग्राहयामास आयुधं समत्याजयत् त्याजितवान्। अत्र ग्रहि-त्यज्योर्ण्यन्तयोर्द्विकर्मकत्वं नित्यमित्यनुसन्धेयम् ॥ ८८ ॥

स इति। सः भरतः अभिषेकार्हौ तक्षपुष्कलौ नाम पुत्रौ तदाख्ययोः तक्षपुष्कलाख्ययोः इत्यर्थः। पुष्कलं पुष्कलावत्यां तक्षकं तक्षशिलायाम् इति राजधान्योः नगर्योः अभिषिच्य पुनः रामान्तिकम् अगात् ॥ ८९ ॥

अङ्गदमिति। लक्ष्मणः अपि रघुनाथस्य रामस्य शासनात् अङ्गदं चन्द्रकेतुं च तदाख्यौ आत्मसम्भवौ पुत्रौ कारापथः नाम देशः तस्य ईश्वरौ चक्रे ॥ ९० ॥

इत्यारोपितपुत्रास्ते जननीनां जनेश्वराः ।
भर्तृलोकप्रपन्नानां निवापान् विदधुः क्रमात्॥९१
उपेत्य मुनिवेशोऽथ कालः प्रोवाच राघवम् ।
रहःसंवादिनौ पश्येदावां यस्तं त्यजेरिति ॥९२॥
तथेति प्रतिपन्नाय विवृतात्मा नृपाय सः ।
आचख्यौ दिवमध्यास्व शासनात् परमेष्ठिनः॥९३
विद्वानपि तयोर्द्वाःस्थः समयं लक्ष्मणोऽभिनत् ।
भीतो दुर्वाससः शापात् रामसन्दर्शनार्थिनः ॥९४
स गत्वा सरयूतीरं देहत्यागेन योगवित् ।

इतीति । इति आरोपितपुत्राः ते जनेश्वराः रामादयः भर्तृलोकप्रपन्नानां स्वर्यातानां जननीनां क्रमात् निवापान् श्राद्धादीन् विदधुः चक्रुः ॥ ९१ ॥

उपेत्येति । अथ कालः अन्तकः मुनिवेशः सन् उपेत्य राघवं प्रोवाच । किम् इत्याह, रहसि एकान्ते संवादिनौ सम्भाषिणौ आवां यः पश्येत् रहस्यभङ्गं कुर्य्यात् इत्यर्थः तं त्यजेः इति ॥ ९२ ॥

तथेति । सः कालः तथेति प्रतिपन्नाय नृपाय रामाय विवृतात्मा प्रकाशितनिजरूपः सन् परमेष्ठिनः ब्रह्मणः शासनात् दिवमध्यास्स्वेति आचख्यौ ॥ ९३ ॥

विद्वानिति । द्वाःस्थः द्वारि नियुक्तः लक्ष्मणः विद्वान् अपि पूर्वश्लोकोक्तं जानन्नपि रामसन्दर्शनार्थिनः दुर्वाससः मुनेः शापात् भीतः सन् तयोः कालरामयोः समयं संवादम् अभिनद् बिभेद ॥ ९४ ॥

चकारावितथां भ्रातुः प्रतिज्ञां पूर्वजन्मनः ॥९५॥

तस्मिन्नात्मचतुर्भागे प्राङ्नाकमधितस्थुषि ।
राघवः शिथिलं तस्थौ भुवि धर्मस्त्रिपादिव ॥९६॥

स निवेश्य कुशावत्यां रिपुनागाङ्कुशं कुशम् ।
शरावत्यां सतां सूक्तैर्जनिताश्रुलवं लवम् ॥९७॥

उदक् प्रतस्थे स्थिरधीः सानुजोऽग्निपुरःसरः ।
अन्वितः पतिवात्सल्याद् गृहवर्जमयोध्यया ॥९८॥

स इति । योगवित् योगमार्गवेदी सः लक्ष्मणः सरयूतीरं गत्वा देहत्यागेन पूर्वजन्मनः भ्रातुः प्रतिज्ञाम् अवितथां सत्यां चकार ॥ ९५ ॥

तस्मिन्निति । चतुर्थः भागः चतुर्भागः । संख्याशब्दस्य वृत्तिविषये पूरणार्थत्वं शतांशवत् । आत्मचतुर्भागे तस्मिन् लक्ष्मणे प्राक् नाकम् अधितस्थुषि पूर्वं स्वर्गं जग्मुषि सति राघवः रामः, भुवि त्रिपात् धर्मः इव, शिथिलः तस्थौ । पादविकलो हि शिथिलं तिष्ठति इति भावः । एतावता धर्मस्त्रिपादित्याहुः । अतः चतुर्थांशः अङ्घ्रिश्च कथ्यते । "पादा रश्म्यङ्घ्रितुर्यांशाः" इत्यमरः । त्रयः पादाः यस्य असौ त्रिपात् । "संख्यासु पूर्वस्य" इत्यकारलोपः समासान्तः ॥ ९६ ॥

स इति । उदगिति च । युग्मम् । स्थिरधीः सः रामः, रिपवः एव नागाः गजाः तेषामङ्कुशं निवारकं कुशं कुशावत्यां पुर्यां निवेश्य स्थापयित्वा, सूक्तैः समीचीनवचनैः सतां जनिताः अश्रुलवाः अश्रुलेशा येन तं लवं लवाख्यं पुत्रम् । "लवो लेशे विलासे च छेदने रामनन्दने" इति विश्वः ।

जगृहुस्तस्य चित्तज्ञाः पदवीं हरिराक्षसाः ।
कदम्बमुकुलस्थूलैरभिवृष्टां प्रजाश्रुभिः ॥ ९९ ॥
उपस्थितविमानेन तेन भक्तानुकम्पिना ।
चक्रे त्रिदिवनिःश्रेणिः सरयूरनुयायिनाम् ॥१००
यद्गोप्रतरकल्पोऽभूत् संमर्दस्तत्र मज्जताम् ।
अतस्तदाख्यया तीर्थं पावनं भुवि पप्रथे ॥१०१॥

शरावत्यां पुर्य्याम्। "शरादीनां च" इति शरकुशशब्दयोः दीर्घः। निवेश्य, सानुजः अग्निपुरःसरः सन् पत्नी भर्त्तरि वात्सल्यात् अनुरागात् गृहान् वर्जयित्वा गृहवर्जम्। "द्वितीयायां च" इति णमुल्। अयं क्वचिदपरीप्सायामपि इष्यते "अनुदात्तं पदमेकवर्जम्" इत्येकाचः शेषतया व्याख्यात-त्वात्। परीप्सा त्वरा। अयोध्यया अन्वितः अनुगतः उदक् प्रतस्थे ॥ ९७ ॥ ९८ ॥

जगृहुरिति। चित्तज्ञाः हरिराक्षसाः कदम्बमुकुलस्थूलैः प्रजाश्रुभिः अभिवृष्टां तस्य रामस्य पदवीं जगृहुः तेऽप्यनुजग्मुः इत्यर्थः ॥ ९९ ॥

उपस्थितेति। उपस्थितं प्राप्तं विमानं यस्य तेन भक्तान् अनुकम्पते इति भक्तानुकम्पिना तेन रामेण अनुयायिनां सरयूः त्रिदिवनिःश्रेणिः स्वर्गाधिरोहणी चक्रे। "निःश्रेणिस्त्वधि-रोहणी" इत्यमरः ॥ १०० ॥

यदिति। यत् यस्मात् तत्र सरय्वां मज्जतां संमर्दः गोप्र-तरः गोप्रतरणं तत्कल्पः अभूत् अतः तदाख्यया गोप्रतराख्यया पावनं शोधकं तीर्थं भुवि पप्रथे ॥ १०१ ॥

स विभुर्विबुधांशेषु प्रतिपन्नात्ममूर्त्तिषु ।
त्रिदशीभूतपौराणां स्वर्गान्तरमकल्पयत् ॥१०२॥

निर्वर्त्त्यैवं दशमुखशिरश्छेदकार्य्यं सुराणां
विष्वक्सेनः स्वतनुमविशत् सर्वलोकप्रतिष्ठाम् ।
लङ्कानाथं पवनतनयं चोभयं स्थापयित्वा
कीर्त्तिस्तम्भद्वयमिव गिरौ दक्षिणे चोत्तरे च ॥१०

इति श्रीरघुवंशे महाकाव्ये कालिदासकृतौ
श्रीरामस्वर्गारोहणं नाम
पञ्चदशः सर्गः ।

स इति । विभुः प्रभुः सः रामः विबुधानामंशेषु सुग्रीवादिषु प्रतिपन्नात्ममूर्त्तिषु सत्सु त्रिदशीभूताः देवभूयं गताः ये पौराः तेषां नूतनसुराणां स्वर्गान्तरम् पकल्पयत् ॥ १०२ ॥

निर्वर्त्त्येति । विष्वक्सेनः विष्णुः एवं सुराणां दशमुखशिरश्छेदकार्य्यं निर्वर्त्त्य निष्पाद्य, लङ्कानाथं विभीषणं पवनतनयं हनुमन्तं चोभयं कीर्त्तिस्तम्भद्वयमिव, दक्षिणे गिरौ चित्रकूटे च उत्तरे गिरौ हिमवति च स्थापयित्वा, सर्वलोकप्रतिष्ठां सर्वलोकाश्रयभूतां स्वतनुं स्वमूर्त्तिमविशत् ॥ १०३ ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां रघुवंशटीकायां सञ्जीवनीसमाख्यायां पञ्चदशः सर्गः ।

---

## षोडशः सर्गः ।

अथेतरे सप्त रघुप्रवीरा
ज्येष्ठं पुरोजन्मतया गुणैश्च ।
चक्रुः कुशं रत्नविशेषभाजं
सौभ्रात्रमेषां हि कुलानुसारि ॥ १ ॥

ते सेतुवार्त्तागजबन्धमुख्यै-
रभ्युच्छ्रिताः कर्मभिरप्यवन्ध्यैः ।
अन्योन्यदेशप्रविभागसीमां
वेलां समुद्रा इव न व्यतीयुः ॥ २ ॥

वृन्दारका यस्य भवन्ति भृङ्गाः मन्दाकिनी यन्मकरन्दबिन्दुः ।
तवारविन्दाक्ष ! पदारविन्दं वन्दे चतुर्वर्गचतुष्पदं तत् ॥

अथेति । अथ रामनिर्वाणानन्तरम् इतरे लवादयः सप्त रघुप्रवीराः पुरः पूर्वं जन्म यस्य तस्य भावः तत्ता तया गुणैश्च ज्येष्ठं कुशं रत्नविशेषभाजं तच्छ्रेष्ठवस्तुभागिनं चक्रुः । तदुक्तम्, "जातौ जातौ यदुत्कृष्टं तद्रत्नमभिधीयते ।" इति । तथाहि, सुभ्रातॄणां भावः सौभ्रात्रम् । "हायनान्त—" इत्यादिना युवादित्वादण्प्रत्ययः । एषां कुशलवादीनां कुलानुसारि वंशानुगतं हि ॥ १ ॥

त इति । सेतुः जलबन्धः, वार्त्ता कृषिगोरक्षणादिः । "वार्त्ता कृष्यादुदन्तयोः" इति विश्वः । गजबन्धः आकरेभ्यः गजग्रहणम्, ते मुख्यं प्रधानं येषां तैः अवन्ध्यैः सफलैः कर्मभिः अभ्युच्छ्रिताः अतिसमर्था अपि इत्यर्थः ते कुशादयः प्रविभज्यन्ते

चतुर्भुजांशप्रभवः स तेषां
दानप्रवृत्तेरनुपारतानाम्।
सुरद्विपानामिव सामयोनि-
र्भिन्नोऽष्टधा विप्रससार वंशः॥ ३॥
अथार्धरात्रे स्तिमितप्रदीपे
शय्यागृहे सुप्तजने प्रबुद्धः।
कुशः प्रवासस्थकलत्रवेशा-
मदृष्टपूर्वां वनितामपश्यत्॥ ४॥

इति प्रविभागाः। अन्योन्यदेशप्रविभागानां या सीमा तां वेलां समुद्राः इव, न व्यतीयुः नातिचक्रमुः। अत्र कामन्दकः, "कृषिर्वणिक्पथो दुर्गं सेतुः कुञ्जरबन्धनम्। खन्याकरधनादानं शून्यानाञ्च निवेशनम्। अष्टवर्गमिमं साधुः स्वयं वृद्धोऽपि वर्धयेत्॥" इति॥ २॥

चतुर्भुजेति। चतुर्भुजः विष्णुः तस्य अंशाः रामादयः ते प्रभवाः कारणानि यस्य सः तथोक्तः, दानं त्यागः मदश्च "दानं गजमदे त्यागे" इति विश्वः। प्रवृत्तिः व्यापारः प्रवाहश्च दानप्रवृत्तेः अनुपारतानां तेषां कुशलवादीनां सः वंशः सामयोनिः सामवेदप्रभवः दानप्रवृत्तेः अनुपारतानां सुरद्विपानां दिग्गजानां वंशः इव, अष्टधा भिन्नः सन् विप्रससार विस्तृतः अभूत्। सामयोनिरित्यत्र पालकाव्यः, "सूर्यस्याण्डकपाले द्वे समानीय प्रजापतिः। हस्ताभ्यां परिगृह्याथ सप्त सामान्यगायत। गायतो ब्रह्मणस्तस्मात् समुत्पेतुर्मतङ्गजाः॥" इति॥ ३॥

अथेति। अथ, अर्धं रात्रेः अर्धरात्रः। "अर्धं नपुंसकम्"

सा साधुसाधारणपार्थिवर्द्धेः
स्थित्वा पुरस्तात् पुरुहूतभासः ।
जेतुः परेषां जयशब्दपूर्वं
तस्याञ्जलिं बन्धुमतो बबन्ध ॥ ५ ॥

अथानपोढार्गलमप्यगार-
च्छायामिवादर्शतलं प्रविष्टाम् ।
सविस्मयो दाशरथेस्तनूजः
प्रोवाच पूर्वार्द्धविसृष्टतल्पः ॥ ६ ॥

इत्येकदेशसमासः, "अहःसर्वैकदेशसंख्यातपुण्याच्च रात्रेः" इति समासान्तोऽच्प्रत्ययः, "रात्राह्नाहाः पुंसि" इति नियमात् पुंस्त्वम् । अर्द्धरात्रे निशीथे स्तिमितप्रदीपे सुप्तजने शय्यागृहे प्रबुद्धः न तु सुप्तः कुशः प्रवासस्थकलत्रवेशां प्रोषितभर्तृकावेशाम् अदृष्टा पूर्वम् इति अदृष्टपूर्वा ताम् । सुप्सुपेति समासः । वनिताम् अपश्यत् ॥ ४ ॥

सेति । सा वनिता साधुसाधारणपार्थिवर्द्धेः सज्जनसाधारणराज्यश्रियः पुरुहूतभासः इन्द्रतेजसः परेषां शत्रूणां जेतुः बन्धुमतः तस्य कुशस्य पुरस्तात् स्थित्वा जयशब्दपूर्वं यथा तथा अञ्जलिं बबन्ध ॥ ५ ॥

अथेति । अथ सविस्मयः पूर्वार्द्धेन शरीरपूर्वभागेण विसृष्टतल्पः त्यक्तशय्यः दाशरथेः तनूजः कुशः अनपोढार्गलम् अनुद्घाटितविष्कम्भम् अपि । "तद्विष्कम्भोऽर्गलं न ना" इत्यमरः । अगारम्, आदर्शतलं छायाम् इव, प्रविष्टां तां वनितां प्रोवाच अवदत् ॥ ६ ॥

लब्धान्तरा सावरणेऽपि गेहे
योगप्रभावो न च लक्ष्यते ते।
बिभर्षि चाकारमनिर्वृतानां
मृणालिनी हैममिवोपरागम्॥ ७॥
का त्वं शुभे! कस्य परिग्रहो वा
किं वा मदभ्यागमकारणं ते।
आचक्ष्व मत्वा वशिनां रघूणां
मनः परस्त्रीविमुखप्रवृत्ति॥ ८॥
तमब्रवीत् सा गुरुणानवद्या
या नीतपौरा स्वपदोन्मुखेन।
तस्याः पुरः सम्प्रति वीतनाथां
जानीहि राजन्नधिदेवतां माम्॥ ९॥

लब्धेति। का त्वमिति च। युग्मम्। सावरणे अपि गेहे लब्धान्तरा लब्धावकाशा त्वम् इति शेषः, योगप्रभावश्च ते न लक्ष्यते, मृणालिनी हैमं हिमजातम् उपरागम् उपद्रवम् इव, अनिर्वृतानां दुःखितानाम् आकारं बिभर्षि च, नहि योगिनां दुःखमस्ति इति भावः। किञ्च, हे शुभे! त्वं का, कस्य वा परिग्रहः पत्नी, ते तव मदभ्यागमे कारणं वा किम्? वशिनां जितेन्द्रियाणां रघूणां मनः परस्त्रीषु विषये विमुखा प्रवृत्तिः यस्य तत् तथाभूतं मत्वा आचक्ष्व॥७॥८॥

त्वमिति। सा वनिता तं कुशमब्रवीत्, अनवद्या अदोषा या पूः स्वपदोन्मुखेन विष्णुपदोन्मुखेन गुरुणा त्वत्पित्रा नीत-

वस्वौकसारामभिभूय साहं
सौराज्यबद्धोत्सवया विभूत्या ।
समग्रशक्तौ त्वयि सूर्य्यवंश्ये
सति प्रपन्ना करुणामवस्थाम् ॥ १० ॥

विशीर्णतल्पाट्टशतो निवेशः
पर्य्यस्तशालः प्रभुणा विना मे ।
विड़म्बयत्यस्तनिमग्नसूर्य्यं
दिनान्तमुग्रानिलभिन्नमेघम् ॥ ११ ॥

ारा, हे राजन्! मां सम्प्रति वीतनाथाम् अनाथां तस्याः
ः नगर्य्याः अयोध्यायाः अधिदेवतां जानीहि ॥ ९ ॥

वस्वौकसारामिति । सा अहं सौराज्येन राजन्वत्तया हेतुना
द्धोत्सवया विभूत्या, वस्वौकसारा अलका पुरी । "अलका
ी वस्वौकसारा स्यात्" इति कोषः । अथवा मानसोत्तर-
लशिखरवर्त्तिनी शक्रनगरी, "वस्वौकसारा शक्रस्य" इति
ष्णुपुराणात् । ताम् अभिभूय तिरस्कृत्य समग्रशक्तौ त्वयि
र्य्यवंश्ये सति करुणां दीनां अवस्थां दशां प्रपन्ना प्राप्ता ॥१०॥

विशीर्णेति । तल्पानि अट्टालिकाः "तल्पं शय्याट्टदारेषु"
अमरः । अट्टानि गृहभेदाः । "अट्टं भक्ते च शुष्के च क्षौमे-
ऽर्थे गृहान्तरे" इति विश्वः । विशीर्णानि तल्पानाम् अट्टा-
ाञ्च शतानि यस्य सः तथोक्तः । अथवा विशीर्णकल्पेति
ठः, अट्टाः क्षौमाः "स्यादट्टः क्षौममस्त्रियाम्" इत्यमरः ।
ात् असमासं विशीर्णानि विशीर्णकल्पानि अट्टशतानि
य सः तथोक्तः पर्य्यस्तशालः स्रस्तप्राकारः । "प्राकारो वरणः
लः" इत्यमरः । प्रभुणा स्वामिना विना एवंभूतः मे निवेशः

निशासु भास्वत्कलनूपुराणां
य: सञ्चरोऽभूदभिसारिकाणाम्।
नदन्मुखोल्काविचितामिषाभि:
स वाह्यते राजपथ: शिवाभि:॥ १२॥

आस्फालितं यत् प्रमदाकराग्रै-
र्मृदङ्गधीरध्वनिमन्वगच्छत्।
वन्यैरिदानीं महिषैस्तदम्भ:
शृङ्गाहतं क्रोशति दीर्घिकाणाम्॥ १३॥

निवेशनम् अस्तनिमग्नसूर्य्यम् अस्ताद्रिलीनार्कम् उग्रानिलेन भिन्नमेघं दिनान्तं विडम्बयति अनुकरोति॥ ११॥

निशास्विति। निशासु भास्वन्ति दीप्तिमन्ति कलानि अव्यक्तमधुराणि नूपुराणि यासां तासामभिसारिकाणाम्। "कान्तार्थिनी तु या याति सङ्केतं साभिसारिका" इत्यमर:। य: राजपथ:, सञ्चरत्यनेनेति सञ्चर: सञ्चारसाधनम् अभूत्। "गोचरसञ्चर" इत्यादिना घप्रत्ययान्तो निपात:। नदत्सु मुखेषु या: उल्का: ताभि: विचितामिषाभि: अन्विष्टमांसाभि: शिवाभि: क्रोष्ट्रीभि: स वाह्यते गम्यते वहेरयो वह्धिधातुरस्तीत्युपदेश:॥ १२॥

आस्फालितमिति। यत् अम्भ: प्रमदाकराग्रै: आस्फालितं ताड़ितं सत् जलक्रीड़ासु इति शेष: मृदङ्गानां य: धीरध्वनि: तम् अन्वगच्छत् अन्वकरोत्, तत् दीर्घिकाणाम् अम्भ: इदानीं वन्यै: महिषै: कर्त्तृभि: शृङ्गै: विषाणै: आहतं सत् क्रोशति न तु मृदङ्गध्वनिमनुकरोति इत्यर्थ:॥ १३॥

वृक्षेशया यष्टिनिवासभङ्गात्
मृदङ्गशब्दापगमादलास्याः ।
प्राप्ता दवोल्काहतशेषबर्हाः
क्रीड़ामयूरा वनबर्हिणत्वम् ॥ १४ ॥

सोपानमार्गेषु च येषु रामाः
निक्षिप्तवत्यश्चरणान् सरागान्
सद्यो हतन्यङ्कुभिरस्रदिग्धं
व्याघ्रैः पदं तेषु निधीयते मे ॥ १५ ॥

चित्रद्विपाः पद्मवनावतीर्णाः
करेणुभिर्दत्तमृणालभङ्गाः ।

वृक्षेशया इति । यष्टिरेव निवासः स्थानं तस्य भङ्गात् वृक्षे शेरते इति वृक्षेशयाः । "अधिकरणे शेतेः" इत्यच्प्रत्ययः, "शयवासवासिष्वकालात्" इत्यलुक् सप्तम्याः । मृदङ्ग-शब्दानाम् अपगमादभावादलास्याः नृत्यशून्याः दवः अरण्य-वह्निः । "दवदावौ वनारण्यवह्नी" इत्यमरः । तस्य उल्काभिः स्फुलिङ्गैः हतेभ्यः शेषाणि बर्हाणि येषां ते क्रीड़ामयूराः वनबर्हिणत्वं वनमयूरत्वं प्राप्ताः ॥ १४ ॥

सोपानेति । किञ्च, येषु सोपानमार्गेषु रामाः रमण्यः सरागान् लाक्षारसार्द्रान् चरणान् निक्षिप्तवत्यः, तेषु मे मम मार्गेषु अद्य सद्यः हतन्यङ्कुभिः मारितमृगैः व्याघ्रैः असृग्दिग्धं रुधिरलिप्तं पदं निधीयते ॥ १५ ॥

चित्रेति । पद्मवनम् अवतीर्णाः प्रविष्टाः तथा लिखिताः इत्यर्थः; करेणुभिः करिणीभिः चित्रगताभिरेव "करेणुरिभ्यां

नखाङ्कुशाघातविभिन्नकुम्भाः
संरब्धसिंहप्रहृतं वहन्ति ॥ १६ ॥
स्तम्भेषु योषित्प्रतियातनाना-
मुत्क्रान्तवर्णक्रमधूसराणाम्।
स्तनोत्तरीयाणि भवन्ति सङ्गात्
निर्मोकपट्टाः फणिभिर्विमुक्ताः ॥ १७ ॥
कालान्तरश्यामसुधेषु नक्त-
मितस्ततो रूढतृणाङ्कुरेषु।
त एव मुक्तागुणशुद्धयोऽपि
हर्म्येषु मूर्च्छन्ति न चन्द्रपादाः ॥ १८ ॥

स्त्री नेभे" इत्यमरः। दत्तस्थाणभङ्गाः चित्रद्विपाः चालेख्यमातङ्गाः नखाः एव अङ्कुशाः तेषाम् आघातैः विभिन्नकुम्भाः सन्तः संरब्धसिंहप्रहृतं कुपितसिंहप्रहारं वहन्ति ॥ १६ ॥

स्तम्भेष्विति। उत्क्रान्तवर्णक्रमाः विशीर्णवर्णविन्यासाः ताश्च धूसराश्च याः तासां स्तम्भेषु योषित्प्रतियातनानां स्त्रीप्रतिकृतीनां दारुमयीणां फणिभिः विमुक्ताः निर्मोकाः कञ्चुकाः एव पट्टाः। "समौ कञ्चुकनिर्मोकौ" इत्यमरः। सङ्गात् सक्तत्वात् स्तनोत्तरीयाणि स्तनाच्छादनवस्त्राणि भवन्ति ॥ १७ ॥

कालेति। कालान्तरेण कालभेदवशेन श्यामसुधेषु मलिनचूर्णेषु इतस्ततः रूढतृणाङ्कुरेषु हर्म्येषु गृहेषु नक्तं रात्रौ मुक्तागुणानां शुद्धिरिव शुद्धिः स्वाच्छ्यं येषां तादृशाः अपि ततः पूर्वं ये मूर्च्छन्ति स्म ते एव चन्द्रपादाः चन्द्ररश्मयः। "पादा

आवर्ज्य शाखाः सदयञ्च यासां
पुष्पाण्युपात्तानि विलासिनीभिः ।
वन्यैः पुलिन्दैरिव वानरैस्ताः
क्लिश्यन्त उद्यानलता मदीयाः ॥ १९ ॥
रात्रावनाविष्कृतदीपभासः
कान्तामुखश्रीवियुता दिवापि ।
तिरस्क्रियन्ते कृमितन्तुजालै-
र्विच्छिन्नधूमप्रसरा गवाक्षाः ॥ २० ॥
बलिक्रियावर्जितसैकतानि
स्नानीयसंसर्गमनाप्नुवन्ति ।

नराद्रि तुर्य्यांशाः" इत्यमरः । न मूर्च्छन्ति न प्रतिफलन्ति
र्थः ॥ १८ ॥

आवर्ज्येति । किञ्च, विलासिनीभिः सदयं शाखाः लता-
वान् आवर्ज्य आनमय्य यासां लतानां पुष्पाणि उपात्तानि
हीतानि ताः मदीयाः उद्यानलताः, वन्यैः पुलिन्दैः
च्छविशेषैः इव वानरैः उभयैः अपि इत्यर्थः, क्लिश्यन्ते
यन्ते । क्लिश्नातेः कर्मणि लट् । "भेदाः किरातशवर-
लिन्दा म्लेच्छजातयः" इत्यमरः ॥ १९ ॥

रात्राविति । रात्रौ अनाविष्कृतदीपभासः दीपप्रभाशून्याः
र्थः दिवापि दिवसेऽपि कान्तामुखानां श्रिया कान्त्या
युताः रहिताः । विच्छिन्नः नष्टः धूमप्रसरः येषां ते गवाक्षाः
मितन्तुजालैः लूतातन्तुवितानैः तिरस्क्रियन्ते छाद्यन्ते ॥२०॥

बलिक्रियेति । "बलिः पूजोपहारः स्यात्" इति शाश्वतः ।

उपान्तवानीरगृहाणि दृष्ट्वा
शून्यानि दूये सरयूजलानि ॥ २१ ॥
तदर्हसीमां वसतिं विसृज्य
मामभ्युपेतुं कुलराजधानीम्।
हित्वा तनुं कारणमानुषीं तां
यथा गुरुस्ते परमात्ममूर्त्तिम् ॥ २२ ॥
तथेति तस्याः प्रणयं प्रतीतः
प्रत्यग्रहीत् प्राग्रहरो रघूणाम्।
पूरप्यभिव्यक्तमुखप्रसादा
शरीरबन्धेन तिरोबभूव ॥ २३ ॥

बलिक्रियावर्जितानि सैकतानि येषां तानि स्नानीयानि स्नानसाधनानि चूर्णादीनि। "कृत्यल्युटो बहुलम्" इति करणे अनीयः प्रत्ययः। स्नानीयसंसर्गम् अनाप्नुवन्ति सरयूजलानि शून्यानि रिक्तानि उपान्तेषु वानीरगृहाणि येषां तानि च दृष्ट्वा दूये परितप्ये ॥ २१ ॥

तदिति। तत् तस्मात् इमां वसतिं कुशावतीं विसृज्य कुलराजधानीम् अयोध्यां माम् अभ्युपेतुम् अर्हसि। कथमिव? ते गुरुः पिता रामः तां प्रसिद्धां कारणवशात् मानुषीं तनुं मानुषमूर्त्तिं हित्वा परमात्ममूर्त्तिं यथा विष्णुमूर्त्तिमिव ॥२२॥

तथेति। रघूणां प्राग्रहरः श्रेष्ठः कुशः तस्याः पुरः प्रणयाच्ञां प्रतीतः हृष्टः सन् तथेति प्रत्यग्रहीत् स्वीकृतवान्। पूः पुराधिदेवतापि अभिव्यक्तमुखप्रसादा सती हृष्टत्वाभादि

तदद्भुतं संसदि रात्रिवृत्तं
प्रातर्द्विजेभ्यो नृपतिः शशंस ।
श्रुत्वा त एनं कुलराजधान्या
साक्षात् पतित्वे वृतमभ्यनन्दन् ॥ २४ ॥
कुशावतीं श्रोत्रियसात् स कृत्वा
यात्रानुकूलेऽहनि सावरोधः ।
अनुद्रुतो वायुरिवाभ्रवृन्दैः
सैन्यैरयोध्याभिमुखः प्रतस्थे ॥ २५ ॥

भावः । शरीरबन्धेन शरीरयोगिना कारणेन तिरोबभूव अन्तर्दधे । मानवं रूपं विहाय दैवं रूपमग्रहीत् इत्यर्थः ॥ २३ ॥

तदिति । नृपतिः कुशः तत् अद्भुतं रात्रिवृत्तं रात्रिवृत्तान्तं प्रातः संसदि सभायां द्विजेभ्यः शशंस । ते द्विजाः श्रुत्वा एनं कुशं कुलराजधान्या साक्षात् स्वयमेव पतित्वे विषये वृतम् अभ्यनन्दन् पतित्वेन वृतोऽसि इति अपूजयन् आशीर्भिः इति शेषः । अत्र गार्ग्यः "दृष्ट्वा स्वप्नं शोभनं नैव सुप्यात् पश्चाद् दृष्टो यः स पाकं विधत्ते । शंसेदिष्टं तत्र साधुर्द्विजेभ्यस्ते चाशीर्भिः प्रीणयेयुर्नरेन्द्रम् ।" इदमपि स्वप्नतुल्यमिति भावः ॥ २४ ॥

कुशावतीमिति । सः कुशः कुशावतीं श्रोत्रियेषु छान्दसेषु अधीनां श्रोत्रियसात् । "तदधीनवचने" इति सातिप्रत्ययः । "श्रोत्रियश्छन्दोऽधीते" इति निपातः । "श्रोत्रियच्छान्दसौ समौ" इत्यमरः । कृत्वा यात्रानुकूले अहनि सावरोधः सान्तःपुरः सन्, वायुः अभ्रवृन्दैः इव सैन्यैः अनुद्रुतः अनुगतः सन् अयोध्याभिमुखः प्रतस्थे ॥ २५ ॥

सा केतुमालोपवना बृहद्भि-
र्विहारशैलानुगतेव नागैः।
सेना रथोदारगृहा प्रयाणे
तस्याभवज्जङ्गमराजधानी॥ २६॥

तेनातपत्रामलमण्डलेन
प्रस्थापितः पूर्वनिवासभूमिम्।
बभौ बलौघः शशिनोदितेन
वेलामुदन्वानिव नीयमानः॥ २७॥

तस्य प्रयातस्य वरूथिनीनां
पीड़ामपर्य्याप्तवतीव सोढुम्।
वसुन्धरा विष्णुपदं द्वितीय-
मध्यारुरोहेव रजश्छलेन॥ २८॥

सेति। केतुमालाः एव उपवनानि यस्याः सा बृहद्भिः नागैः गजैः विहारशैलैः क्रीड़ाशैलैः अनुगता इव स्थिता रथाः एव उदारगृहाः यस्याः सा सा सेना तस्य कुशस्य प्रयाणे, जङ्गमराजधानी सञ्चारिणी नगरी इव, अभवत् बभूव। २६।

तेनेति। आतपत्रमेव अमलं मण्डलं बिम्बं यस्य तेन तेन कुशेन पूर्वनिवासभूमिम् अयोध्यां प्रस्थापितः बलौघः आतपत्रवत् अमलमण्डलेन, उदितेन शशिना वेलां नीयमानः प्राप्यमाणः उदकमस्यास्तीति उदन्वान् उदधिः इव, बभौ। "उदन्वानुदधौ च" इति निपातनात् साधुः॥ २७॥

तस्येति। प्रयातस्य प्रस्थितस्य तस्य कुशस्य वरूथिनीनां सेनानां कर्त्रीणाम्। "कर्त्तृकर्मणोः कृति" इति कर्त्तरि

उद्यच्छमाना गमनाय पश्चात्
पुरो निवेशे पथि च व्रजन्ती ।
सा यत्र सेना ददृशे नृपस्य
तत्रैव सामग्र्यमतिं चकार ॥ २९ ॥

तस्य द्विपानां मदवारिसेकात्
खुराभिघाताच्च तुरङ्गमाणाम् ।
रेणुः प्रपेदे पथि पङ्कभावं
पङ्कोऽपि रेणुत्वमियाय नेतुः ॥ ३० ॥

मार्गैषिणी सा कटकान्तरेषु
वैन्ध्येषु सेना बहुधा विभिन्ना ।

षष्ठी । पीड़ां सोढुम् अपर्य्याप्तवती इव अशक्ता इव वसुन्धरा रजश्छलेन द्वितीयं विष्णुपदमाकाशम् अध्यारोहेव इत्युत्प्रेक्षा ॥ २८ ॥

उद्यच्छमानेति । पश्चात् कुशावत्याः सकाशात् गमनाय प्रयाणाय तथा पुरः अग्रे निवेशे निमित्ते निवेष्टुञ्च इत्यर्थः उद्यच्छमाना उद्योगं कुर्वती । "समुदाङ्भ्यो यमोऽग्रन्थ" इत्यस्य सकर्मकाधिकारत्वात् आत्मनेपदम् । पथि च व्रजन्ती नृपस्य कुशस्य सा सेना यत्र पश्चात् पुरः मध्ये वा ददृशे तत्रैव सामग्र्यमतिं कृत्स्नताबुद्धिं चकार, अपरिमिता तस्य सेना इत्यर्थः ॥ २९ ॥

तस्येति । नेतुः तस्य कुशस्य द्विपानां मदवारिभिः सेकात् तुरङ्गमाणां खुराभिघाताच्च यथासंख्यं पथि रेणुः रजः पङ्कभावं पङ्कतां प्रपेदे पङ्कः अपि रेणुत्वम् इयाय ॥ ३० ॥

चकार रेवेव महाविरावा
बद्धप्रतिश्रुन्ति गुहामुखानि ॥ ३१ ॥
स धातुभेदारुणयाननेमिः
प्रभुः प्रयाणध्वनिमिश्रतूर्य्यः ।
व्यलङ्घयद् विन्ध्यमुपायनानि
पश्यन् पुलिन्दैरुपपादितानि ॥ ३२ ॥
तीर्थे तदीये गजसेतुबन्धात्
प्रतीपगामुत्तरतोऽस्य गङ्गाम् ।
अयत्नबालव्यजनीबभूवु-
र्हंसा नभोलङ्घनलोलपक्षाः ॥ ३३ ॥

मार्गेति। वैन्ध्येषु विन्ध्यसम्बन्धिषु कटकान्तरेषु नितम्बावकाशेषु। "कटकोऽस्त्री नितम्बोऽद्रेः" इत्यमरः। मार्गैषिणी मार्गावलोकिनी अतएव बहुधा विभिन्ना महाविरावा दीर्घशब्दा सा सेना, रेवा इव नर्मदा इव। "रेवा तु नर्मदा सोमोद्भवा मेखलकन्यका" इत्यमरः। गुहामुखानि बद्धप्रतिश्रुन्ति प्रतिध्वानवन्ति चकार अकरोत् ॥ ३१ ॥

स इति। धातूनां गैरिकादीनां भेदेन अरुणा याननेमिः रथचक्रधारा यस्य स प्रयाणे ये ध्वनयः क्ष्वेड़क्रोशादयः तन्मिश्राणि तूर्य्याणि यस्य एवंविधः सः प्रभुः कुम्भः पुलिन्दैः किरातैः उपपादितानि समर्पितानि उपायनानि पश्यन् विन्ध्यं व्यलङ्घयत् ॥ ३२ ॥

तीर्थ इति। तदीये वैन्ध्ये तीर्थे अवतारे गजाः एव सेतुः तस्य बन्धाद्धेतोः प्रतीपगां पश्चिमवाहिनीं गङ्गाम् उत्तरतः

स पूर्वजानां कपिलेन रोषा-
द्भस्मावशेषीकृतविग्रहाणाम् ।
सुरालयप्राप्तिनिमित्तमम्भः
त्रैस्रोतसं नौलुलितं ववन्दे ॥ ३४ ॥

इत्यध्वनः कैश्चिदहोभिरन्ते
कूलं समासाद्य कुशः सरय्वाः ।
वेदिप्रतिष्ठान् विततध्वराणां
यूपानपश्यच्छतशो रघूणाम् ॥ ३५ ॥

आधूय शाखाः कुसुमद्रुमाणां
स्पृष्ट्वा च शीतान् सरयूतरङ्गान् ।
तं क्लान्तसैन्यं कुलराजधान्याः
प्रत्युज्जगामोपवनान्तवायुः ॥ ३६ ॥

यस्य कुशस्य नभोलङ्घनेन लोलपक्षाः हंसाः प्रयत्नेन बालव्यजनीबभूवुः चामराण्यभूवन् । अभूततद्भावे च्विः ॥ ३३ ॥

स इति । सः कुशः कपिलेन मुनिना रोषात् भस्मावशेषीकृताः विग्रहाः देहाः येषां तेषां पूर्वजानां वृद्धानां सागराणां सुरालयस्य स्वर्गस्य प्राप्तौ निमित्तं नौभिः लुलितं क्षुभितं त्रिस्रोतसः इदं त्रैस्रोतसं गाङ्गम् अम्भः ववन्दे ॥ ३४ ॥

इतीति । इति कैश्चित् अहोभिः अध्वनः अन्ते अवसाने कुशः सरय्वाः कूलं समासाद्य विततध्वराणां विस्तृतमखानां रघूणां वेदिः प्रतिष्ठा आस्पदं येषां तान् यूपान् शतशः अपश्यत् ॥ ३५ ॥

आधूयेति । कुलराजधान्याः उपवनान्तवायुः कुसुम-

अथोपशल्ये रिपुमग्नशल्य-
स्तस्याः पुरः पौरसखः स राजा।
कुलध्वजस्तानि चलध्वजानि
निवेशयामास बली बलानि ॥ ३७ ॥
तां शिल्पिसङ्घाः प्रभुणा नियुक्ता-
स्तथागतां सम्भृतसाधनत्वात्।
पुरं नवीचक्रुरपां विसर्गात्
मेघा निदाघग्लपितामिवोर्वीम् ॥ ३८ ॥
ततः सपर्य्यां सपशूपहारां
पुरः परार्द्ध्यप्रतिमागृहायाः।

द्रुमाणां शाखाः आधूय ईषत् धूत्वा, सुरभिर्मन्दश्चेत्यर्थः, शीतान् सरयूतरङ्गान् च स्पृष्ट्वा अनेन शैत्योक्तिः, क्लान्तसैन्यं तं कुशं प्रत्युज्जगाम ॥ ३६ ॥

अथेति। अथ रिपुषु मग्नं शल्यं शङ्कुः शरः वा यस्य सः। "शल्यं शङ्कौ शरे वंशे" इति विश्वः। पौराणां सखा पौरसखः। कुलस्य ध्वजः चिह्नभूतः बली सः राजा चलाः चलन्तः वा ध्वजाः येषां तानि तानि बलानि सैन्यानि तस्याः पुरः पुर्य्याः उपशल्ये ग्रामान्ते। "ग्रामान्त उपशल्यं स्यात्" इत्यमरः। निवेशयामास ॥ ३७ ॥

तामिति। प्रभुणा नियुक्ताः शिल्पिनां तक्षादीनां सङ्घाः सम्भृतसाधनत्वात् मिलितोपकरणत्वात् तां तथागतां शून्याम् इत्यर्थः पुरमयोध्याम्, मेघाः अपां विसर्गाज्जलसेकात् निदाघग्लपितां ग्रीष्मतप्तामुर्वीमिव, नवीचक्रुः परिपूरयाञ्चक्रुः ॥३८॥

उपोषितैर्वास्तुविधानविज्ञै-
र्निर्वर्त्तयामास रघुप्रवीरः ॥ ३९ ॥

तस्याः स राजोपपदं निशान्तं
कामीव कान्ताहृदयं प्रविश्य ।
यथार्हमन्यैरनुजीविलोकं
सम्भावयामास यथाप्रधानम् ॥ ४० ॥

सा मन्दुरासंश्रयिभिस्तुरङ्गैः
शालाविधिस्तम्भगतैश्च नागैः ।

तत इति । ततः रघुप्रवीरः कुशः प्रतिमाः दैवतप्रतिकृतयः अर्च्चाः इत्यर्थः पराद्ध्र्यप्रतिमागृहायाः प्रशस्तदेवतायतनायाः पुरः उपोषितैः वास्तुविधानविज्ञैः प्रयोज्यैः पशूपहारैः सहितां सपशूपहारां सपर्य्यां निर्वर्त्तयामास कारयामास । अत्र ण्यन्तात् णिच् पुनरित्यनुसन्धेयमन्यथा वृतेरकर्मकस्य करोत्यर्थत्वे कारयत्यर्थाभावप्रसङ्गात् भवितव्यं वृतेरण्यन्तकर्त्री प्रयोज्यत्वेन तन्निर्देशात् प्रयोगान्तरस्यापेक्षिकत्वात् ॥ ३९ ॥

तस्या इति । सः कुशः तस्याः पुरः सम्बन्धि राजोपपदं राजशब्दपूर्वं निशान्तं राजभवनमित्यर्थः । 'निशान्तं भवनोषसोः' इति विश्वः । कामी कान्ताहृदयमिव, प्रविश्य अन्यैः निशान्तैः अनुजीविलोकम् अमात्यादिकं यथाप्रधानं मान्यानुसारेण यथार्हं यथोचितं तत्तदुचितगृहैरित्यर्थः सम्भावयामास ॥ ४० ॥

सेति । विपणिस्थानि पण्यानि क्रयविक्रयार्हवस्तूनि यस्याः सा । "विपणिः पण्यवीथिका" इत्यमरः । सा पूः अयोध्या मन्दुरासंश्रयिभिः अश्वशालासंश्रयशीलैः । "वाजि-

पूराबभासे विपणिस्थपण्या
सर्वाङ्गनद्धाभरणेव नारी ॥ ४१ ॥

वसन् स तस्यां वसतौ रघूणां
पुराणशोभामधिरोपितायाम्।
न मैथिलेयः स्पृहयाम्बभूव
भर्त्रे दिवो नाप्यलकेश्वराय ॥ ४२ ॥

अथास्य रत्नग्रथितोत्तरीय-
मेकान्तपाण्डुस्तनलम्बिहारम्।
निःश्वासहार्य्यांशुकमाजगाम
घर्मः प्रियावेशमिवोपदेष्टुम् ॥ ४३ ॥

शाला तु मन्दुरा" इत्यमरः। "जिदृक्षि—" इत्यादिना इनि-प्रत्ययः। तुरङ्गैः अश्वैः शालासु गृहेषु ये विधिना स्थापिताः स्तम्भाः तान् गतैः प्राप्तैः नागैश्च, सर्वाङ्गेषु नद्धानि आभरणानि यस्याः सा नारी इव, आबभासे ॥ ४१ ॥

वसन्निति। सः मैथिलेयः कुशः पुराणशोभां पूर्वशोभाम् अधिरोपितायां तस्यां रघूणां वसतौ अयोध्यायां वसन् दिवः भर्त्रे देवेन्द्राय तथा अलकेश्वराय कुवेराय अपि न स्पृहयाम्बभूव तावपि न गणयामास इत्यर्थः। "स्पृहेरीप्सितः" इति सम्प्रदानत्वाच्चतुर्थी। एतेनायोध्याया अन्यनगरातिशायित्वं गम्यते ॥ ४२ ॥

कुशस्य कुमुद्वतीसङ्गमं प्रस्तौति, अथेति। अथ अस्य कुशस्य रत्नैः मुक्तामणिभिः ग्रथितानि उत्तरीयाणि यस्मिन् तत् एकान्तम् अत्यन्तं पाण्डोः स्तनयोः लम्बिनः हाराः

अगस्त्यचिह्नादयनात् समीपं
दिगुत्तरा भास्वति सन्निवृत्ते ।
आनन्दशीतामिव बाष्पवृष्टिं
हिमस्रुतिं हैमवतीं ससर्ज ॥ ४४ ॥
प्रवृद्धतापो दिवसोऽतिमात्र-
मत्यर्थमेव क्षणदा च तन्वी ।
उभौ विरोधक्रियया विभिन्नौ
जायापती सानुशयाविवास्ताम् ॥ ४५ ॥
दिने दिने शैवलवन्त्यधस्तात्
सोपानपर्वाणि विमुञ्चदम्भः ।

यस्मिन् तं निःश्वासहार्य्याणि अतिसूक्ष्माणि अंशुकानि यत्र तम् एवं शीतलप्रायं प्रियायाः वेशं नेपथ्यमुपदेष्टुम् इव घर्मः ग्रीष्मः आजगाम ॥ ४३ ॥

अगस्त्येति। अगस्त्यः चिह्नं यस्य तस्मात् अयनात् मार्गात् दक्षिणायनात् भास्वति समीपं सन्निवृत्ते सति उत्तरा दिक्, आनन्दशीतां वाष्पवृष्टिम् इव, हैमवतीं हिमवत्सम्बन्धिनीं हिमस्रुतिं हिमनिष्यन्दं ससर्ज। अत्र प्रोषितप्रियासमागमसमाधिर्गम्यते ॥ ४४ ॥

प्रवृद्धेति। अतिमात्रं प्रवृद्धतापः दिवसः अत्यर्थमेव अनल्पं तन्वी कृशा क्षणदा च इत्येतौ उभौ, विरोधक्रियया प्रणयकलहादिना विरोधाचरणेन विभिन्नौ सानुशयौ सानुतापौ जायापती दम्पती इव, आस्तां, तयोरपि तापकार्श्य-सम्भवात् तत्सदृशावभूताम् इत्यर्थः ॥ ४५ ॥

दिने दिने इति। दिने दिने प्रतिदिनं शैवलवन्ति

उद्दण्डपद्मं गृहदीर्घिकाणां
नारीनितम्बद्वयसं बभूव ॥ ४६ ॥

वनेषु सायन्तनमल्लिकानां
विजृम्भणोद्गन्धिषु कुड्मलेषु ।
प्रत्येकनिक्षिप्तपदः सशब्दं
संख्यामिवैषां भ्रमरश्चकार ॥ ४७ ॥

स्वेदानुविद्धार्द्रनखक्षताङ्के
भूयिष्ठसन्दष्टशिखं कपोले ।
च्युतं न कर्णादपि कामिनीनां
शिरीषपुष्पं सहसा पपात ॥ ४८ ॥

अधस्तात् यानि सोपानानां पर्वाणि भङ्गाः तानि विमुञ्चत् अत एव उद्दण्डपद्मं गृहदीर्घिकाणाम् अम्भः नारीनितम्बः प्रमाणम् अस्य नारीनितम्बद्वयसं बभूव विहारयोग्यमभूत् इत्यर्थः । "प्रमाणे द्वयसच्" इति द्वयसच्प्रत्ययः ॥ ४६ ॥

वनेष्विति । वनेषु विजृम्भणेन विकासेन उद्गन्धिषु उत्कटसौरभेषु । "गन्धस्य—" इत्यादिना समासान्त इकारादेशः । सायन्तनमल्लिकानां कुड्मलेषु सशब्दं यथा तथा प्रत्येकम् एकैकस्मिन् निक्षिप्तपदो मकरन्दलोभात् इत्यर्थः भ्रमरः एषां कुड्मलानां संख्यां गणनां चकार इव ॥ ४७ ॥

स्वेदेति । स्वेदानुविद्धम् आर्द्रं नूतनं नखक्षतम् अङ्कः यस्य तस्मिन् कामिनीनां कपोले भूयिष्ठम् अत्यर्थं सन्दष्टशिखं विश्लिष्टकेशरम् अत एव कर्णात् च्युतम् अपि शिरीषपुष्पं सहसा न पपात ॥ ४८ ॥

यन्त्रप्रवाहैः शिशिरैः परीतान्
रसेन धौतान् मलयोद्भवस्य ।
शिलाविशेषानधिशय्य निन्यु-
र्धारागृहेष्वातपमृद्धिमन्तः ॥ ४९ ॥

स्नानार्द्रमुक्तेष्वनुधूपवासं
विन्यस्तसायन्तनमल्लिकेषु ।
कामो वसन्तात्ययमन्दवीर्य्यः
केशेषु लेभे बलमङ्गनानाम् ॥ ५० ॥

आपिञ्जरा बद्धरजःकणत्वात्
मञ्जर्य्युदारा शुशुभेऽर्जुनस्य ।

यन्त्रेति । ऋद्धिमन्तः धनिकाः धारागृहेषु यन्त्रधारा-गृहेषु शिशिरैः यन्त्रप्रवाहैः यन्त्रसञ्चारितसलिलपूरैः परीतान् व्याप्तान् मलयोद्भवस्य रसेन चन्दनोदकेन धौतान् क्षालितान् शिलाविशेषान् मणिमयासनानि अधिशय्य तेषु शयित्वा आतपं निन्युः आतपपरिहारं चक्रुः ॥ ४९ ॥

स्नानेति । वसन्तस्य आत्मसहकारिणः अत्ययेन अतिक्र-मेण मन्दवीर्य्यः अतिदुर्बलः कामः स्नानार्द्राश्च ते मुक्ताश्च धूपसञ्चारणार्थम् इत्यर्थः । तेषु अनुधूपवासं धूपवासानन्तरं विन्यस्ताः सायन्तनमल्लिकाः येषु तेषु अङ्गनानां केशेषु बलं लेभे तैरुद्दीपित इत्यर्थः ॥ ५० ॥

आपिञ्जरेति । बद्धरजःकणत्वात् व्याप्तरजःकणत्वात् आपिञ्जरा उदारा द्राघीयसी अर्जुनस्य ककुभद्रुमस्य । "इन्द्रद्रुः ककुभोऽर्जुनः" इत्यमरः । मञ्जरी, देहं दग्ध्वापि

दग्ध्वापि देहं गिरिशेन रोषात्
खण्डीकृता ज्येव मनोभवस्य ॥ ५१ ॥
मनोज्ञगन्धं सहकारभङ्गं
पुराणशीधुं नवपाटलञ्च ।
सम्बध्नता कामिजनेषु दोषाः
सर्वे निदाघावधिना प्रमृष्टाः ॥ ५२ ॥
जनस्य तस्मिन् समये विगाढ़े
बभूवतु र्द्वौ सविशेषकान्तौ ।

रोषात् गिरिशेन गिरिरस्त्यस्य निवासत्वेन गिरिशः तेन । लोमादित्वात् शप्रत्ययः । गिरौ शेते इति विग्रहे तु "गिरौ शेतेर्डः" इत्यस्य छन्दसि विधानात् लोके प्रयोगानुपपत्तिः स्यात् । तस्मात् पूर्वोक्तमेव विग्रहवाक्यं नाव्यम् । खण्डीकृता मनोभवस्य ज्या मौर्वी इव, शुशुभे ॥ ५१ ॥

मनोज्ञेति । मनोज्ञगन्धमिति सर्वत्र सम्बध्यते सहकारभङ्गं चूतपल्लवखण्डं पुराणं वासितं शेरते अनेनेति शीधुः इक्षुरसप्रकृतिकः सुराविशेषः तम् । "शीङ्गो धुक्" इत्युणादिसूत्रेण "शीङ् स्वप्ने" इत्यस्माद्धातोर्धुक्प्रत्ययः । "पक्वै-रिक्षुरसैरसौ शीधुः पक्वरसः शिवः" इति यादवः । नवं पाटलायाः पुष्पं पाटलञ्च सम्बध्नता सङ्घटयता निदाघावधिना ग्रीष्मकालेन । "अवधिस्त्ववधाने स्यात् सीम्नि काले विलेऽपि च" इति विश्वः । कामिजनेषु विषये सर्वे दोषाः तापादयः प्रमृष्टाः परिहृताः ॥ ५२ ॥

जनस्येति । तस्मिन् समये ग्रीष्मे विगाढ़े कठिने सति जनस्य द्वौ सविशेषं सातिशयं यथा तथा कान्तौ बभूवतुः ।

तापापनोदक्षमपादसेवौ
स चोदयस्थौ नृपतिः शशी च ॥ ५३ ॥
अथोर्मिलोलोन्मदराजहंसे
रोधोलतापुष्पवहे सरय्वाः ।
विहर्त्तुमिच्छा वनितासखस्य
तस्याम्भसि ग्रीष्मसुखे बभूव ॥ ५४ ॥
स तीरभूमौ विहितोपकार्य्या-
मानायिभिस्तामपकृष्टनक्राम् ।
विगाहितुं श्रीमहिमानुरूपं
प्रचक्रमे चक्रधरप्रभावः ॥ ५५ ॥

कौ द्वौ ? तापापनोदे क्षमा योग्या पादयोः अङ्घ्रोः पादानां रश्मीनाञ्च सेवा ययोः तौ उदयस्थौ अभ्युदयस्थौ स च नृपतिः शशी च ॥ ५३ ॥

अथेति । अथ ऊर्मिषु लोलाः सतृष्णाः उन्मदाः राजहंसाः यस्मिन् तस्मिन् । "लोलश्चलसतृष्णयोः" इत्यमरः । रोधोलतापुष्पाणां वहे प्रापके । पचाद्यच् । ग्रीष्मेषु सुखे सुखकरे सरय्वाः अम्भसि पयसि तस्य वनितासखस्य वनिताभिः सह इत्यर्थः विहर्त्तुम् इच्छा बभूव ॥ ५४ ॥

स इति । चक्रधरप्रभावः विष्णुतेजाः सः कुशः तीरभूमौ विहिता उपकार्य्या यस्याः ताम् आनायः जालमेषामस्तीति आनायिनः जालिकाः । "जालमानायः" इति निपातः । "आनायः पुंसि जालं स्यात्" इत्यमरः । तैः अपकृष्टनक्राम् अपनीतग्राहां तां सरयूं श्रीमहिम्नोः सम्पत्प्रभावयोः अनुरूपं

सा तीरसोपानपथावतारा-
दन्योन्यकेयूरविघट्टिनीभिः।
सनूपुरक्षोभपदाभिरासी-
दुद्विग्नहंसा सरिदङ्गनाभिः॥ ५६ ॥

परस्पराभ्युक्षणतत्पराणां
तासां नृपो मज्जनरागदर्शी।
नौसंश्रयः पार्श्वगतां किराती-
मुपात्तबालव्यजनां बभाषे॥ ५७ ॥

पश्यावरोधैः शतशो मदीयै-
र्विगाह्यमानो गलिताङ्गरागैः।

योग्यं यथा तथा विगाहितुं प्रचक्रमे। अत्र कामन्दकः, "परि-तापिषु वासरेषु पश्यन् तटलेखास्थितमाप्तसैन्यचक्रम्। सुवि-शोधितनक्रमीनजालं व्यवगाहेत जलं सुहृत्समेतः॥" इति॥५५॥

सेति। सा सरित् सरयूः तीरसोपानपथेन अवतारात्-वतरणादन्योन्यं केयूरविघट्टिनीभिः सव्रीडाङ्गदसङ्घर्षिणीभिः सनूपुरक्षोभाणि सनूपुरस्खलनानि पदानि यासां ताभिः अङ्गनाभिः हेतुभिः उद्विग्नहंसा भीतहंसा आसीत्॥ ५६॥

परस्परेति। नौसंश्रयः परस्परम् अभ्युक्षणे सेचने तत्प-राणामासक्तानां तासां स्त्रीणां मज्जने रागः अभिलाषः तद्दर्शी नृपः पार्श्वगताम् उपात्तबालव्यजनां गृहीतचामरां किरातीं चामरग्राहिणीं बभाषे। "किरातस्तु द्रुमान्तरे स्त्रियां चामर-वाहिन्यां मत्स्यजात्यन्तरे द्वयोः" इति केशवः॥ ५७॥

पश्येति। गलिताङ्गरागैः मदीयैः शतशः अवरोधैः

सन्ध्योदयः साभ्र इवैष वर्णं
पुष्यत्यनेकं सरयूप्रवाहः ॥ ५८ ॥

विलुप्तमन्तःपुरसुन्दरीणां
यदञ्जनं नीलुलिताभिरद्भिः ।
तद्बध्नतीभिर्मदरागशोभां
विलोचनेषु प्रतिमुक्तमासाम् ॥ ५९ ॥

एता गुरुश्रोणिपयोधरत्वा-
दात्मानमुद्वोढुमशक्नुवत्यः ।
गाढाङ्गदैर्बाहुभिरप्सु बालाः
क्लेशोत्तरं रागवशात् प्लवन्ते ॥ ६० ॥

विगाह्यमानः विलोड्यमानः एषः सरयूप्रवाहः साभ्रः समेघः सन्ध्योदयः सन्ध्याविर्भावः इव, अनेकं नानाविधं वर्णं रक्तपीतादिकं पुष्यति पश्य । वाक्यार्थः कर्म ॥ ५८ ॥

विलुप्तमिति । नीलुलिताभिः नीचुम्बिताभिः अद्भिः अन्तःपुरसुन्दरीणां यदञ्जनं कज्जलं विलुप्तं हृतं तदञ्जनं विलोचनेषु नयनेषु मदेन या रागशोभा तां बध्नतीभिः घटयन्तीभिः अद्भिः आसां प्रतिमुक्तं प्रत्यर्पितम् । प्रतिनिधिदानमपि तत्कार्य्यकारित्वात् प्रत्यर्पणमेव इति भावः ॥ ५९ ॥

एता इति । गुरु दुर्वहं श्रोणिपयोधरं यस्यात्मनः इति विग्रहः । गुरुश्रोणिपयोधरत्वात् आत्मानं शरीरम् उद्वोढुम् अशक्नुवत्यः एताः बालाः गाढाङ्गदैः श्लिष्टाङ्गदैः बाहुभिः क्लेशोत्तरं दुःखप्रायं यथा तथा रागवशात् क्रीडाभिनिवेशपारतन्त्र्यात् प्लवन्ते तरन्ति ॥ ६० ॥

अमी शिरीषप्रसवावतंसाः
प्रभ्रंशिनो वारिविहारिणीनाम् ।
पारिप्लवाः स्रोतसि निम्नगायाः
शैवाललोलान् छलयन्ति मीनान् ॥ ६१ ॥
आसां जलास्फालनतत्पराणां
मुक्ताफलस्पर्द्धिषु शीकरेषु ।
पयोधरोत्सर्पिषु शीर्य्यमाणः
संलक्ष्यते न च्छिदुरोऽपि हारः ॥ ६२ ॥
आवर्त्तशोभा नतनाभिकान्ते-

अमी इति । वारिविहारिणीनाम् आसां प्रभ्रंशिनः भ्रष्टाः निम्नगायाः स्रोतसि पारिप्लवाः चञ्चलाः । "चञ्चलं तरलञ्चैव पारिप्लवपरिप्लवे" इत्यमरः । अमी शिरीषप्रसवाः एव अवतंसा कर्णभूषाः शैवाललोलान् जलनीलीप्रियान् । "जलनीली तु शैवालम्" इत्यमरः । मीनान् छलयन्ति प्रादुर्भावयन्ति, शैवालप्रियत्वात् शिरीषेषु शैवालभ्रमात् प्रादुर्भवन्ति इत्यर्थः ॥ ६१ ॥

आसामिति । जलस्य आस्फालने तत्पराणाम् आसक्तानाम् आसां स्त्रीणां मुक्ताफलस्पर्द्धिषु मौक्तिकानुकारिषु पयोधरेषु स्तनेषु उत्सर्पन्ति उत्पतन्ति ये तेषु शीकरेषु शीकराणां मध्ये शीर्य्यमाणः गलन् हारः अत एव छिदुरः स्वयं छिन्नोऽपि न संलक्ष्यते । "विदिभिदिच्छिदेः कुरच्" इति कुरच्प्रत्ययः । शीकरसंसर्गात् छिन्न इति न ज्ञायत इति भावः ॥ ६२ ॥

आवर्त्तेति । विलासिनीनां विलसनशीलानां स्त्रीणाम् ।

भङ्गो भ्रुवां द्वन्द्वचराङ्गनानाम् ।
जातानि रूपावयवोपमाना-
न्यदूरवर्त्तीनि विलासिनीनाम् ॥ ६३ ॥

तीरस्थलीवर्हिभिरुत्कलापैः
प्रस्निग्धकेकैरभिनन्द्यमानम् ।
श्रोत्रेषु संमूर्च्छति रक्तमासां
गीतानुगं वारिमृदङ्गवाद्यम् ॥ ६४ ॥

सन्दष्टवस्त्रेष्ववलानितम्बे-
ष्विन्दुप्रकाशान्तरितोडुतुल्याः ।

"वौ कषलसकत्थस्रम्भः" इति घिनुण्प्रत्ययः। रूपावयवा-नामुपमेयानां यानि उपमानानि लोकप्रसिद्धानि तानि अदूरवर्त्तीन्यन्तिकगतानि जातानि। कस्य किमुपमानमित्य-ाह, नतनाभिकान्तेः निम्ननाभिशोभायाः आवर्त्तशोभा "स्यादावर्त्तोऽम्भसां भ्रमः" इत्यमरः। भ्रुवां भङ्गः तरङ्गः स्तनानां द्वन्द्वचराः चक्रवाकाः, उपमानमिति सर्वत्र सम्बध्यते ॥ ६३ ॥

तीरेति। उत्कलापैः उच्चवर्हैः प्रस्निग्धाः मधुराः केकाः येषां तैः तीरस्थलीषु स्थितैः वर्हिभिः मयूरैः अभिनन्द्यमानं रक्तं श्राव्यं गीतानुगं गीतानुसारि आसां स्त्रीणां सम्बन्धि वारि एव मृदङ्गः तस्य वाद्यं वाद्यध्वनिः श्रोत्रेषु संमूर्च्छति व्याप्नोति ॥ ६४ ॥

सन्दष्टेति। सन्दष्टवस्त्रेषु जलसेकात् संश्लिष्टांशुकेषु अवलानां नितम्बेषु अधिकरणेषु इन्दुप्रकाशेन ज्योत्स्नया अन्तरितानि आवृतानि यानि उडूनि नक्षत्राणि तत्तुल्याः

अमी जलापूरितसूत्रमार्गा
मौनं भजन्ते रशनाकलापाः ॥ ६५ ॥
एताः करोत्पीडितवारिधारा
दर्पात् सखीभिर्वदनेषु सिक्ताः ।
वक्रेतराग्रैरलकैस्तरुण्य-
श्चूर्णारुणान् वारिलवान् वमन्ति ॥ ६६ ॥
उद्बन्धकेशश्च्युतपत्त्रलेखो
विश्लेषिमुक्ताफलपत्त्रवेष्टः ।
मनोज्ञ एव प्रमदामुखाना-
मम्भोविहाराकुलितोऽपि वेशः ॥ ६७ ॥

मुक्तामयत्वादिति भावः, अमी जलापूरितसूत्रमार्गाः निश्चला इत्यर्थः रशनाः एव कलापाः भूषाः । "कलापो भूषणे बर्हे" इत्यमरः । मौनं निःशब्दताम् इत्यर्थः भजन्ते ॥ ६५ ॥

एता इति । दर्पात् सखीजनं प्रति करैः उत्पीडिताः उत्सारिताः वारिधाराः याभिः ताः स्वयमपि पुनस्तथैव सखीभिः वदनेषु सिक्ताः एताः तरुण्यः वक्रेतराग्रैः जलसेकात् ऋज्वग्रैः अलकैः करणैः चूर्णैः कुङ्कुमादिभिः अरुणान् वारिलवान् उदकबिन्दून् वमन्ति वर्षन्ति ॥ ६६ ॥

उद्बन्धेति । उद्बन्धाः उद्भ्रष्टाः केशाः यस्मिन् सः च्युतपत्त्रलेखः च्युतपत्त्ररचनः विश्लेषिणः विस्रंसिनः मुक्ताफलपत्त्रवेष्टाः मुक्तामयताडङ्काः यस्मिन् सः एवम् अम्भोविहाराकुलितः अपि प्रमदामुखानां वेशः नेपथ्यं मनोज्ञः एव । रम्याणां विकृतिरपि श्रियं तनोति इति भावः ॥ ६७ ॥

स नौविमानादवतीर्य्य रेमे
विलोलहार: सह ताभिरप्सु ।
स्कन्धावलग्नोद्धृतपद्मिनीक:
करेणुभिर्वन्य इव द्विपेन्द्र: ॥ ६८ ॥
ततो नृपेणानुगता: स्त्रियस्ता:
भ्राजिष्णुना सातिशयं विरेजु: ।
प्रागेव मुक्ता नयनाभिरामा:
प्राप्येन्द्रनीलं किमुतोन्मयूखम् ॥ ६९ ॥
वर्णोदकै: काञ्चनशृङ्गमुक्तै-
स्तमायताक्ष्य: प्रणयादसिञ्चन् ।

स इति। स: कुश: नौ: विमानम् इव नौविमानम्, उपमितसमास:, तस्मात् अवतीर्य्य विलोलहार: सन् ताभि: स्त्रिभि: सह, करेणुभि: सह स्कन्धावलग्ना उद्धृतपद्मिनी उत्पाटितनलिनी यस्य स: तथोक्त: सन्। "नद्यृतश्च" इति कप्रत्यय:। वन्य: द्विपेन्द्र: इव, अप्सु रेमे ॥ ६८ ॥

तत इति। तत: भ्राजिष्णुना प्रकाशनशीलेन। "भुवश्च" इति चकाराद्दिष्णुच्। नृपेण अनुगता: सङ्गता: ता: स्त्रिय: सातिशयं यथा तथा विरेजु:, प्रागेव इन्द्रनीलयोगात् पूर्वमेव, केवला अपि इत्यर्थ: मुक्ता: मणय: नयनाभिरामा: उन्मयूखम् इन्द्रनीलं प्राप्य किमुत? अभिरामा इति किमु वक्तव्यम्? इत्यर्थ: ॥ ६९ ॥

वर्णोदकैरिति। तं कुशम् आयताक्ष्य: काञ्चनस्य शृङ्गै: मुक्तानि तै: वर्णोदकै: कुङ्कुमादिवर्णद्रव्यसहितोदकै: प्रणयात्

